1. The maximum time allowed for retention of a book shall be one fortnight. It may be borrowed again if not required by others.

2. No reference books shall be lent out.

3. No borrower shall have more than two volumes out of the Library at one time.

4. Borrowers must not pass books from one to another but must return them to the Librarian.

5. Library books must not be used as class-books.

6. Any one who defaces by writing or otherwise damages any book shall pay the full cost of the book or of the entire works, if it consists of more than one volume.

7. The borrower shall be responsible for the value of the books lent out to him if they are lost, damaged or otherwise cannot be returned to the Library when they are due or recalled.

8. The presence of the voucher with the Librarian shall be considered sufficient proof of the non-return of books.



1615-36 The Bangalore Press

Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 16.

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

# THE TAITTIRÍYA SAṂHITÁ

OF THE

# KṚISHṆA YAJUR-VEDA

WITH THE

COMMENTARY OF BHAṬṬABHA'SKARAMIS'RA.

**Vol. VIII.**

(Kanda V–Prasnas 1 to 4)




EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,

*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,

*Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of His Highness the Maharaja of Mysore.

MYSORE:

PRINTED AT THE GOVERNMENT BRANCH PRESS,

1898.

# EDITORIAL NOTE.

The portion comprised in this volume has been edited from a collation of the manuscript copies found in the Sarasvatî-Bhandâra of H. H. the Mahârâja's Palace, Mysore, in the Sarasvatî-mahal of the Tanjore Palace, and in the Sanskrit Library of the Sringeri Matt at Kudli.

A. M. S.

# पञ्चमकाण्डविषयसूची.

---

## चतुर्थकाण्डाम्नातानां मन्त्राणां ब्राह्मणम् १—४ प्रपाठकाः.

### प्रथमः प्रपाठकः.



### द्वितीयः प्रपाठकः.

## तृतीयः प्रपाठकः.



## चतुर्थः प्रपाठकः.

---

हरिः ॐ.

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

## पञ्चमकाण्डः.

### प्रथमः प्रश्नः.

सावित्राणि जुहोति प्रसूत्यै चतुर्गृहीतेन जुहोति चतुष्पादः पशवः

[1]सावित्राणि । जुहोति । प्रसूत्या इति प्र-सूत्यै । चतुर्गृहीतेनेति चतुः-गृहीतेन । जुहोति । चतुष्पाद इति चतुः-पादः । पशवः । पशून् । ए-

[1]अतः परं अग्निकाण्डमग्न्यार्षेयमारभ्यते । तत्राद्यं प्रश्नचतुष्टयमेकं काण्डं चतुर्थकाण्डाम्नातमन्त्रब्राह्मणं, शिष्टं प्रश्नत्रयं काण्डान्तरं प्रयोगविशेषार्थम् । तत्र उखां संभरिष्यतः सावित्रहोमं विदधाति—सावित्राणि जुहोतीति ॥ सावित्रैः मन्त्रैरेकाहुतिं जुहोति । मन्त्रबहुत्वात् बहुवचनम् । तत्र 'युञ्जानः प्रथमं मनः'* इत्याद्याः सप्त सावित्र्य ऋचः, एकं सावित्रं यजुः। 'नपुंसकमनपुंसकेन' इति नपुंसकस्य शेषात्सावित्राणि सर्वाण्युच्यन्ते । 'युजे वाम्'* इत्यस्या अपि 'सूराः'* इति सूति-

*सं. ४-१-१.

पशूनेवाव रुन्धे चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति छन्दाꣳसि देवेभ्योपाक्रामन्न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुर्गृहीतमधारयन्पुरोनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतं जुहो-

व । अवेति । रुन्धे । चतस्रः । दिशः । दिक्षु । एव । प्रतीति । तिष्ठति । [2]छन्दाꣳसि । देवेभ्यः । अपेति । अक्रामन् । न । वः । अभागानि । हव्यम् । वक्ष्यामः । इति । तेभ्यः । एतत् । चतुर्गृहीतमिति चतुः–गृहीतम् । अधारयन् । पुरोनुवाक्याया इति पुरः–अनुवाक्यायै । याज्यायै । देव-

---

धात्वन्वयेन सावित्रत्वम्, यथा ‘विश्वेदेवस्य नेतुः’* इति सूत्यर्थान्वियेन सावित्री ऋग्भवति । अन्ये तु छत्रिन्यायेनेत्याहुः, लिङ्गसमवायात् । प्रसूत्यै अनुज्ञानाय कर्मणो भवति सवित्राऽनुज्ञातं कर्म यथा स्यादिति । ‘तादौ च’ इति गतेः प्रकृतिस्वरत्वम्। चतुर्गृहीतेनेत्यादि । गतम् ॥

[2]छन्दांसीत्यादि ॥ प्रायेणाग्निविषयाणि छन्दांसि चत्वारि गायत्री त्रिष्टुप् जगती अनुष्टुबिति भागानि वयं युष्माकं हव्यं न वक्ष्याम इत्यभिधाय देवेभ्यः छन्दांसि अपाक्रामन् ।

*सं. १-२-२.६

ति छन्दाꣳस्येव तत्प्रीणाति तान्यं-
स्य प्रीतानिं देवेभ्यो हव्यं वंहन्ति
यं कामयेत ॥ १ ॥ पापीयान्थ्स्या-
दित्येकैकं तस्यं जुहुयादाहुतीभिरेवै-
नमपं गृह्णाति पापीयान्भवति यं

तांयै । वषट्कारायेतिं वषट्-कारायं । यत् । चतुर्गृ-
हीतमितिं चतुः-गृहीतम् । जुहोतिं । छन्दाꣳसि ।
एव । तत् । प्रीणाति । तानिं । अस्य । प्रीतानिं ।
देवेभ्यः । हव्यम् । वहन्ति । [3]यम् । कामयेत ॥ १ ॥
पापीयान् । स्यात् । इतिं । एकैकमित्येकं-एकम् ।
तस्यं । जुहुयात् । आहुतीभिरित्याहुति-भिः ।
एव । एनम् । अवेतिं । गृह्णाति । पापीयान् । भ-
वति । यम् । कामयेत । वसीयान् । स्यात् । इ-

ततो देवाः तेभ्यः एतच्चतुर्गृहीतं अधारयन् छन्दोर्थमेतत् अक-ल्पयन् । किम् ? पुरोनुवाक्यादिभ्यश्चतुर्भ्यः यद्गृहीतं तद्गायत्र्या-द्यर्थमधारयन् । सर्वत्र हि पुरोनुवाक्यादिभ्यः चतुर्गृहीते इदमि-दानीं छन्दोभ्यः इति । तस्मात् चतुर्गृहीतस्य होमः इदानीं छन्दसां प्रीणनार्थं भवति । तानि च प्रीतानि अस्य देवेभ्यो हव्यं वहन्ति ॥

[3]यं कामयेतेत्यादि ॥ पापीयान् पापधरः एकैकं प्रतिमन्त्रं च जुहुयात् । 'एकं बहुव्रीहिवत्' इति द्विप्रयोगे विभक्ति-

कामयेत वसीयान्थ्स्यादिति सर्वाणि
तस्यानुद्रुत्य जुहुयादाहुत्यैवैनमभि
क्रमयति वसीयान्भवत्यथो यज्ञस्यै-
वैषाऽभिक्रान्तिरेति वा एष यज्ञमु-
खादृद्ध्या योऽग्नेर्देवताया एत्यष्टावेता-
नि सावित्राणि भवन्त्यष्टाक्षरा गाय-

त्री । सर्वाणि । तस्य । अनुद्रुत्येत्यनु-द्रुत्य । जु-
हुयात् । आहुत्येत्या-हुत्या । एव । एनम् । अभी-
ति । क्रमयति । वसीयान् । भवति । अथो इति ।
यज्ञस्य । एव । एषा । अभिक्रान्तिरित्यभि-क्रा-
न्तिः । [4]एति । वै । एषः । यज्ञमुखादिति यज्ञ-
मुखात् । ऋद्ध्याः । यः । अग्नेः । देवतायाः । ए-
ति । अष्टौ । एतानि । सावित्राणि । भवन्ति ।

---

लोपः । अवग्रहे तु विभक्तिः श्रूयते । आहुतिशब्दस्य सं-
हितायां छान्दसं दीर्घत्वम् । वसीयान् वसुमत्तरः, विन्मतोर्लुक्
'टेः' इति टिलोपः । सर्वाण्यनुद्रुत्य अन्ते एकामाहुतिं जुहुया-
त् । तत आहुत्या एकया उपरि क्रियमाणया एनमभिक्रमयति
उपरिं गमयति ततो वसीयान् भवति । अथो अपि च यज्ञस्यैव
इयमभिक्रान्तिः यज्ञमेवानेन अभिक्रामयति ॥

[4]एति वा इत्यादि ॥ यज्ञमुखादारभ्य एष ऋद्ध्या एति
अपगच्छति ऋद्धिहीनो भवति योऽग्नेः यज्ञदेवताया एति अग्नि

त्री गा॑यत्रः ॥ २ ॥ अ॒ग्निस्तेनै॒व य॑-
ज्ञमु॒खादृद्ध्या॑ अ॒ग्नेर्दे॒वता॑यै॒ नैत्य॒ष्टौ
सा॑वि॒त्राणि॑ भव॒न्त्याहु॑तिर्न॒वमी॑ त्रि॒-
वृत॑मे॒व य॑ज्ञमु॒खे वि या॑तयति॒ य-
दि॑ का॒मये॑त॒ छन्दा॑ꣳसि यज्ञयश॒से-
ना॑र्पये॒यमि॒त्यृच॑मन्त॒मां कु॑र्या॒च्छ-

अ॒ष्टाक्ष॒रेत्य॒ष्टा—अ॒क्ष॒रा । गा॒य॒त्री । गा॒य॒त्रः ॥ २ ॥
अ॒ग्निः । तेन॑ । ए॒व । य॒ज्ञमु॒खादिति॑ यज्ञ—मु॒खात्।
ऋद्ध्या॑ः । अ॒ग्नेः । दे॒वता॑यै । न । ए॒ति॒ । [5]अ॒ष्टौ ।
सा॒वि॒त्राणि॑ । भ॒व॒न्ति॒ । आहु॑ति॒रित्या—हु॒तिः । न॒-
व॒मी । त्रि॒वृत॒मिति॑ त्रि—वृत॑म् । ए॒व । य॒ज्ञ॒मु॒ख
इति॑ यज्ञ—मु॒खे । वीति॑ । या॒त॒य॒ति॒ । [6]यदि॑ । का॒-
मये॑त । छन्दा॑ꣳसि । य॒ज्ञ॒य॒श॒सेनेति॑ यज्ञ—य॒श॒सेन॑।
अ॒र्प॒ये॒यम् । इति॑ । ऋच॑म् । अ॒न्त॒माम् । कु॒र्या॒त् ।

---

हुत्वा उखादि संभरिष्यन् गच्छति यज्ञमुखात् ऋद्ध्याः अग्नेश्च देवतायाः नापैति देवताया अग्नेः परिग्रहात् । पञ्चम्यर्थे चतुर्थी ॥

[5]अष्टौ सावित्राणीत्यादि ॥ अष्टौ मन्त्राः एकाहुतिः नवमी नवत्वान्वयात् । त्रिवृतं नवस्तोत्रीयं होमं यज्ञमुखे वियातयति व्यापारयति ॥

[6]यदीत्यादि ॥ यज्ञयशसं यज्ञफलम् । ‘ अनसन्तान्नपुंसकात् ’

न्दा॑ᳩस्ये॒व य॑ज्ञयश॒सेना॑र्पयाति॒ यदि॑
का॒मये॑त॒ यज॑मानं यज्ञयश॒सेना॑र्प-
ये॒यमिति॒ यजु॑रन्त॒मं कु॑र्या॒द्यज॑मा-
नमे॒व य॑ज्ञयश॒सेना॑र्पयत्यृ॒चा स्तो-
म॒ᳩ सम॑र्ध॒येति॑ ॥ ३ ॥ आ॒ह॒ स-
मृ॑द्ध्यै च॒तु॒र्भि॒रभ्रि॒मा द॑त्ते च॒त्वारि॒

छन्दा॑ᳩसि । ए॒व । य॒ज्ञ॒य॒श॒सेनेति॑ यज्ञ–य॒श॒सेन॑ । अ॒र्प॒य॒ति॒ । यदि॑ । का॒मये॑त । यज॑मानम् । य॒ज्ञ॒-य॒श॒सेनेति॑ यज्ञ–य॒श॒सेन॑ । अ॒र्प॒ये॒यम् । इति॑ । यजुः॑ । अ॒न्त॒मम् । कु॒र्या॒त् । यज॑मानम् । ए॒व । य॒ज्ञ॒य॒श॒सेनेति॑ यज्ञ–य॒श॒सेन॑ । अ॒र्प॒य॒ति॒ । ऋ॒चा । स्तोम॑म् । समिति॑ । अ॒र्ध॒य॒ । इति॑ ॥ ३ ॥ आ॒ह॒ । समृ॑द्ध्या॒ इति॒ सं–ऋ॒द्ध्यै॒ । [7]च॒तु॒र्भि॒रिति॑ च॒तुः–भि॒ः । अभ्रि॑म् । एति॑ । द॒त्ते॒ । च॒त्वारि॑ । छन्दा॑ᳩसि । छ-

---

इत्यचसमासान्तः । अर्पयेयं प्रापयेयम् । अन्तमां अन्तिमाम्, छान्दसो वर्णविकारः, डिमचो वा आदिलोपः । गतमन्यत् । यद्वा—अन्तिकस्यापि तमे तादिलोपः । 'ऋचा स्तोमम्'* इत्युपस्थानमन्त्रः ॥

[7]चतुर्भिरित्यादि ॥ 'देवस्य'* इत्यादिभिः चतुर्भिः मन्त्रैः खनित्रमादत्ते । चत्वारि गायत्र्यादीनि छन्दांसि चतुर्षु मन्त्रेषु

---

*सं. ४-१-१.

छन्दाꣳसि छन्दोभिरेव देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्या अग्निर्देवेभ्यो निलायत स वेणुं प्राविशथ्स एतामूतिमनु समचरद्यद्वेणोस्सुषिरꣳ सुषिराऽभ्रिर्भवति स-

न्दोभिरिति छन्दः–भिः । एव । देवस्य । त्वा । सवितुः । प्रसव इति प्र–सवे । इति । आह । प्रसूत्या इति प्र–सूत्यै । [8]अग्निः । देवेभ्यः । निलायत । सः । वेणुम् । प्रेति । अविशत् । सः । एताम् । ऊतिम् । अनु । समिति । अचरत् । यत् । वेणोः । सुषिरम् । सुषिरा । अभ्रिः । भवति । सयोनित्वायेति सयोनि–त्वाय । [9]सः । यत्रंयत्रेति

---

श्रुतानि । तेन छन्दोभिरेव अभ्र्यादानं कृतं भवति । चतुर्भिरिति 'झल्युपोत्तमम्' इत्युपोत्तमस्योदात्तत्वम् । देवस्येत्यादि । गतम् ॥

[8]अग्निर्देवेभ्य इत्यादि ॥ निलायत निरगच्छत् । 'उपसर्गस्यायतौ' इति लत्वम् । विकारवत्त्वादनवग्रहणम् । वेणुं प्रविश्य ऊतिं रन्ध्रं कुर्वन् वेणोरन्तरालं समचरत् यदिदानीं वेणोः सुषिरं पश्यामः तत्पूर्वमग्निना कृतम् । 'ऊतियूति' इति क्तिन उदात्तत्वम् । सुषिरेत्यादि । योन्या सह सयोनित्वम् ॥

[9]स इत्यादि ॥ कल्माषी कृष्णबिन्दुमती श्वेता । 'अन्यतो

योनित्वाय स यत्रंयत्रावंसत्तत्कृष्ण-
मंभवत्कल्माषी भंवति रूपसंमृद्ध्यै
उभयतःक्ष्णूर्भंवतीतश्चामुतंश्चार्क-
स्यावंरुध्यै व्याममात्री भंवत्येता-
वद्वै पुरुंषे वीर्यं वीर्यंसंमिताऽपंरिमि-

यत्रं–यत्र । अवंसत् । तत् । कृष्णम् । अभवत् । कल्माषी । भवति । रूपसंमृद्ध्या इतिं रूप–सम्‌ृद्ध्यै । उभयतःक्ष्णूरित्युंभयतः–क्ष्णूः । भवति । इतः । च । अमुतः । च । अर्कस्यं । अवंरुद्ध्या इत्यवं–रुद्ध्यै । [10]व्याममात्रीतिं व्याम–मात्री । भवति । एतावंत् । वै । पुरुंषे । वीर्यंम् । वीर्यंसम्मितेतिं वीर्यं–सम्मिता । अपंरिमितेत्यपंरि–मिता । भवति । अपंरिमितस्येत्यपंरि–मितस्य । अवंरुद्ध्या

---

ङीष्' इति ङीष् । उभयतःक्ष्णूः उभयोरन्तरयोर्निशिता सूक्ष्मा, क्ष्णु तेजने क्विपि छान्दसं दीर्घत्वम् । इतश्चेत्यादि । इह अस्मादपि लोकात् अर्कस्य अन्नस्य अवरुद्ध्यै भवति ॥

[10]व्याममात्री भवतीति ॥ पञ्चारत्निर्व्यामः । चतुररत्निरित्येके । एतावदिति । व्यामप्रमाणं पुरुषे वीर्यम् यस्माद्वीर्येण सम्मिता परिच्छिन्ना । 'तृतीयाकर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अपरिमितेत्यादि । गतम् । वनस्पतीनां मध्ये यः फलग्रहिः फ-

ता भवत्यपरिमितस्यावरुद्ध्यै यो वनस्पतीनां फलग्रहिस्स एषां वीर्यावान्फलग्रहिर्वेणुर्वैणवी भवति वीर्यस्यावरुद्ध्यै ॥ ४ ॥

व्यृद्धं वा एतद्यज्ञस्य यदयजुष्के-

इत्यव–रुद्ध्यै । यः । वनस्पतीनाम् । फलग्रहिरिति फल–ग्रहिः । सः । एषाम् । वीर्यावानिति वीर्य–वान् । फलग्रहिरिति फल–ग्रहिः । वेणुः । वैणवी । भवति । वीर्यस्य । अवरुद्ध्या इत्यव–रुद्ध्यै ॥ कामयेत गायत्रोऽर्धयेति च सप्तविंशतिश्च ॥ १ ॥

व्यृद्धमिति वि–ऋद्धम् । वै । एतत् । यज्ञस्य । यत् । अयजुष्केणेत्ययजुः–केन । क्रियते । इ-

लानि बहूनि गृह्णाति स एष वेणुः अस्य तु विशेषः एषां फलग्रहीणां मध्ये एष वीर्यावान् । छान्दसं सांहितिकं दीर्घत्वम् । फलेग्रहिरिति इन्प्रत्ययान्तो निपात्यते, व्यत्ययेन निपातितं एत्वं निवर्तते । वनस्पतिशब्दः उक्तस्वरः । वैणवीत्यादि । गतम् ॥

इति पञ्चमकाण्डे प्रथमप्रश्ने प्रथमोनुवाकः.

---

[1]व्यृद्धमित्यादि ॥ व्यृद्धं वृद्धिहीनमेतत्कर्म यत् अयजुष्केण

ण क्रियते इमामगृभ्णन्नशनामृत-
स्येत्यश्वाभिधानीमा दत्ते यजुष्कृत्यै
यज्ञस्य समृद्ध्यै प्रतूर्तं वाजिन्ना द्र-
वेत्यश्वमभि दधाति रूपमेवास्यैत-
न्महिमानं व्याचष्टे युञ्जाथाꣳ रास-
भं युवमिति गर्दभमसत्येव गर्दभं
प्रतिष्ठापयति तस्मादश्वाद्गर्दभोऽस-

माम् । अगृभ्णन्न् । रशनाम् । ऋतस्य । इति । अश्वाभिधानीमित्यश्व–अभिधानीम् । एति । दत्ते । यजुष्कृत्या इति यजुः–कृत्यै । यज्ञस्य । समृद्ध्या इति सं–ऋद्ध्यै । प्रतूर्तमिति प्र–तूर्तम् । वाजिन्न् । एति । द्रव । इति । अश्वम् । अभीति । दधाति । रूपम् । एव । अस्य । एतत् । महिमानम् । व्याचष्ट इति वि–आचष्टे । युञ्जाथाम् । रासभम् । युवम् । इति । गर्दभम् । असति । एव । गर्दभम् । प्रतीति । स्थापयति । तस्मात् । अश्वात् । गर्दभः । असत्तर इत्यसत्–तरः । योगेयोग इति योगे–यो-

---

अमन्त्रकेण अङ्गेन क्रियते । कर्मण्यपि निष्ठायाः 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । व्यृद्धमिति । 'उदात्तस्वरितयोर्यणः' इति ऋकारस्स्वर्यते । इमामित्यादि । अश्वाभिधानीं अश्वबन्धि-

त्तरो योगेयोगे तवस्तरमित्याह॥५॥
योगेयोग एवैनं युङ्क्ते वाजेवाजे ह-
वामह इत्याहान्नं वै वाजोऽन्नमेवाव
रुन्धे सखाय इन्द्रमूतय इत्याहेन्द्रि-
यमेवाव रुन्धेऽग्निर्देवेभ्यो निलाय-
त तं प्रजापतिरन्वविन्दत्प्राजापत्यो-

गे । तवस्तरमिति तवः–तरम् । इति । आह ॥ ५ ॥ योगेयोग इति योगे–योगे । एव । एनम् । युङ्क्ते । वाजेवाज इति वाजे–वाजे । हवामहे । इति । आह । अन्नम् । वै । वाजः । अन्नम् । एव । अवेति । रुन्धे । सखायः । इन्द्रम् । ऊतये । इति । आह । इन्द्रियम् । एव । अवेति । रुन्धे । [2]अग्निः । देवेभ्यः । निलायत । तम् । प्रजापतिरिति प्रजा–पतिः । अन्विति । अविन्दत् । प्राजापत्य इति प्राजा–पत्यः । अश्वः । अश्वेन । समिति ।

---

नीं रशनां यजुष्कृत्यै यजुषा कृतत्वाय । प्रतूर्तमित्यादि । गतम्* ॥

[2]अग्निर्देवेभ्य इत्यादि ॥ देवेभ्योपक्रान्तमग्निं प्रजापतिरन्वविन्दत् अन्विष्य लब्धवान् । अश्वोयं प्राजापत्यः । तस्मादश्वेन संभरणं अग्नेर्लाभाय भवति ॥

---

*सं. ४-१-२.

श्वोऽश्वेन सं भरत्यनुवित्त्यै पापवस्य-
सं वा एतत्क्रियते यच्छ्रेयंसा च पा-
पींयसा च समानं कर्मं कुर्वन्ति
पापींयान् ॥ ६ ॥ ह्यश्वाद्गर्दभोऽश्वं पू-
र्वं नयन्ति पापवस्यसस्य व्यावृत्त्यै
तस्माच्छ्रेयाꣳसं पापींयान्पश्चादन्वे-

भरति । अनुवित्त्या इत्यनु–वित्त्यै । [3]पापवस्यसमि-
ति पाप–वस्यसम् । वै । एतत् । क्रियते । यत् ।
श्रेयंसा । च । पापींयसा । च । समानम् । कर्मं ।
कुर्वन्ति । पापींयान् ॥ ६ ॥ हि । अश्वात् । गर्द-
भः । अश्वम् । पूर्वम् । नयन्ति । पापवस्यसस्ये-
ति पाप–वस्यसस्यं । व्यावृत्त्या इति वि–आवृत्त्यै ।
तस्मात् । श्रेयाꣳसम् । पापींयान् । पश्चात् । अ-
न्विति । एति । [4]बहुः । वै । भवंतः । भ्रातृंव्यः ।

---

[3]पापवस्यसमित्यादि ॥ पापेन वसीयसं वसुमत्तरं पापेनैव वसुनास्तीति विन्मतोर्लुक् । यद्वा—पापं वसु यस्य स पापवसुः, तस्मात् आतिशायिनिकः 'टेः' इति टिलोपः, छान्दस ईकारलोपः, 'अनसन्तान्नपुंसकात्' इत्यच्समासान्तः । यद्वा—पापं च शुभं च सह क्रियते इति तद्व्याावृत्तिः विभागः ॥

[4]बहुर्वा इत्यादि ॥ भवतः भूतिं लिप्समानस्य बहुः भ्रातृव्यः

ति बहुर्वै भवंतो भ्रातृंव्यो भवंती-
व खलु वा एष योंऽग्निं चिनुते वज्र्यश्व-
श्वंः प्रतूर्वन्नेह्यवक्रामन्नशंस्तीरित्याह
वज्रेणैव पाप्मानं भ्रातृंव्यमवं क्रा-
मति रुद्रस्य गाणंपत्यादित्याह रौद्रा
वै पशवो रुद्रादेव ॥ ७ ॥ पशून्नि-
र्याच्यात्मने कर्म कुरुते पूष्णा सयु-

भवंति । इव । खलु । वै । एषः । यः । अग्निम् ।
चिनुते । वज्री । अश्वंः । प्रतूर्वन्निति प्र–तूर्वन्न् । एति ।
इहि । अवक्रामन्नित्यंव–क्रामन्न् । अशंस्तीः । इति ।
आह । वज्रेण । एव । पाप्मानंम् । भ्रातृंव्यम् । अवेति ।
क्रामति । रुद्रस्यं । गाणंपत्यादिति गाणं–पत्यात् ।
इति । आह । रौद्राः । वै । पशवंः । रुद्रात् ।
एव ॥ ७ ॥ पशून् । निर्याच्येति निः–याच्यं ।

अनेको बाधकः यश्चाग्निं चिनुते अयमपि भवति भवत्येव तस्मात् बहुभ्रातृव्यः यज्ञार्थं यज्ञात्मानं अश्वं पूर्वं नीयमानं प्रतूर्वन् एहीत्यनुमन्त्रयते । ततो वज्रेणैव पाप्मानं भ्रातृव्यं अवक्रामति अवष्टभ्य हिनस्ति, मन्त्रलिङ्गं च 'अवक्रामन्नशस्तीः'* इति । अशस्तयः अकीर्तयः । भ्रातृशब्दात् 'व्यन् सपत्ने' इति व्यन्प्रत्ययः । रुद्रस्येत्यादि । गतम् ॥

*सं. ४-१-२.

जा सहेत्याह पूषा वा अध्वनाꣳ संनेता समष्ट्यै पुरीषायतनो वा एष यदग्निरङ्गिरसो वा एतमग्रे देवतानाꣳ समभरन्पृथिव्यास्सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहीत्याह सायंतनमेवैनं देवताभिस्संभरत्यग्निं पु-

आत्मने । कर्म । कुरुते । [5]पूष्णा । सयुजेति स-युजा । सह । इति । आह । पूषा । वै । अध्वनाम् । संनेतेति सं-नेता । समष्ट्या इति सं-अष्ट्यै । पुरीषायतन इति पुरीष-आयतनः । वै । एषः । यत् । अग्निः । अङ्गिरसः । वै । एतम् । अग्रे । देवतानाम् । समिति । अभरन् । पृथिव्याः । सधस्थादिति सध-स्थात् । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । अच्छ । इहि । इति । आह । सायंतनमिति स-आयतनम् । एव । एनम् । देवताभिः । समिति ।

---

[5]पूष्णा सयुजेति ॥ गर्दभस्यानीयमानस्य अनुमन्त्रणम् । सन्नेता सम्यक्प्रवर्तयिता समष्ट्यै सम्यक्प्राप्त्यै गन्तव्यस्य । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । पुरीषायतन इत्यादि । पुरीषं मृदं आयतनमस्येति तेनाग्निः पुरीष्यमित्युच्यते । अङ्गिरस्वत् 'नभोङ्गिरोमनुषाम्' इति वत्वम्, अङ्गिरोभिस्तद्वत्,

रीष्यमङ्गिरस्वदच्छेम इत्याह येन
॥ ८ ॥ संगच्छते वाजमेवास्य वृङ्क्ते
प्रजापतये प्रतिप्रोच्याग्निस्संभृत्य
इत्याहुरियं वै प्रजापतिस्तस्या ए-
तच्छ्रोत्रं यद्वल्मीकोऽग्निं पुरीष्यमङ्गि-
रस्वद्भरिष्याम इति वल्मीकवपामुप

भरति । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । अ-च्छ । इमः । इति । आह । येन ॥ ८ ॥ संगच्छत इति सं-गच्छते । वाजम् । एव । अस्य । वृङ्क्ते । [6]प्रजापतय इति प्रजा-पतये । प्रतिप्रोच्येति प्रति-प्रोच्य । अग्निः । संभृत्य इति सं-भृत्यः । इति । आहुः । इयम् । वै । प्रजापतिरिति प्रजा-पतिः । तस्याः । एतत् । श्रोत्रम् । यत् । वल्मीकः । अ-ग्निम् । पुरीष्यम् । अङ्गिरस्वत् । भरिष्यामः । इ-

‘तसौ मत्वर्थे’ इति भत्वम् । देवताभिरङ्गिरोभिश्च संभरति । येनेत्यादि । अच्छेहीति अभिसंप्राप्तुं गच्छेति दर्शनात् प्रतिगच्छन् येन संगच्छते प्रष्टा किमच्छेहीति तं प्रति ‘अग्निं पुरीष्यं अङ्गिरस्वदच्छेमः’ इत्युत्तरं ब्रूयात् । वाजमेवास्य वृङ्क्ते ॥

[6]प्रजापतय इत्यादि ॥ प्रतिप्रोच्य निवेद्य । तस्योत्तरमाह— वाजमेवास्य वृङ्क्ते इति ॥

तिष्ठते साक्षादेव प्रजापतये प्रतिप्रोच्याग्निꣳ सं भरत्यग्निं पुरीष्यमङ्गिरस्वद्भराम इत्याह येन संगच्छंते वाजमेवास्य वृङ्क्तेऽन्वग्निरुषसामग्रम् ॥ १ ॥ अख्यदित्याहानुख्यात्या आगत्य वाज्यध्वन आक्रम्य वाजिन्पृथिवीमित्याहेच्छत्येवैनं पूर्वया वि-

ति । वल्मीकवपामिति वल्मीक–वपाम् । उपेति । तिष्ठते । साक्षादिति स–अक्षात् । एव । प्रजापतय इति प्रजा–पतये । प्रतिप्रोच्येति प्रति–प्रोच्य । अग्निम् । समिति । भरति । अग्निम् । पुरीष्यम् । अङ्गिरस्वत् । भरामः । इति । आह । येन । संगच्छंत इति सं–गच्छंते । वाजम् । एव । अस्य । वृङ्क्ते । [7]अन्विति । अग्निः । उषसाम् । अग्रम् ॥ १ ॥ अख्यत् । इति । आह । अनुख्यात्या इत्यनु–ख्यात्यै । आगत्येत्या–गत्य । वाजी । अध्वनः । आक्रम्येत्या–

[7]अथ उपातियन्ति—अन्वग्निरुषसामग्रमख्यदिति ॥ अनुख्यात्यै अनुक्रमेण ख्यात्यर्थं 'आगत्य' 'आक्रम्य'* इति द्वाभ्यां अश्वेन प्राया मृदमाक्रमयति । तत्राग्निं पूर्वया इच्छति, उत्तरया विन्दति ।

*सं. ४-१-२.

न्दत्युत्तरया द्वाभ्यामा क्रमयति प्र॰
तिष्ठित्या अनुरूपाभ्यां तस्मादनु-
रूपाः पशवः प्र जायन्ते द्यौस्ते
पृष्ठं पृथिवी सधस्थमित्याहैभ्यो वा
एतं लोकेभ्यः प्रजापतिस्समैरयद्रू-

क्रम्य । वाजिन्न् । पृथिवीम् । इति । आह । इच्छ-ति । एव । एनम् । पूर्वया । विन्दति । उत्तरयेत्युत्-तरया । द्वाभ्याम् । एति । क्रमयति । प्रतिष्ठित्या इति प्रति-स्थित्यै । अनुरूपाभ्यामित्यनु-रूपा-भ्याम् । तस्मात् । अनुरूपा इत्यनु-रूपाः । पश-वः । प्रेति । जायन्ते । [4]द्यौः । ते । पृष्ठम् । पृथि-वी । सधस्थमिति सध-स्थम् । इति । आह । एभ्यः । वै । एतम् । लोकेभ्यः । प्रजापतिरिति प्रजा-पतिः । समिति । ऐरयत् । रूपम् । एव ।

---

द्वाभ्यामा क्रमयतीति । प्रतिष्ठार्थमनुरूपाभ्यां आक्रमयतीत्येव । 'आ-गत्य वाज्यध्वनः'* 'आक्रम्य वाजिन्पृथिवीम्'* इति दर्शनात् अनु-रूपत्वमनयोः । तस्मात् अनुरूपा जनयित्र्यः प्रजा जायन्ते पशवः ॥

[4]द्यौस्ते पृष्ठमिति—अश्वस्य पृष्ठं संमृज्यते ॥ एभ्यो वा इत्यादि । गतम् । वज्री वा इत्यादि । गतम् । अन्यतोदद्भ्यः

---

*सं. ४-१-२.

पमेवास्यैतन्महिमानं व्याचष्टे वज्री वा एष यदश्वो दद्भिरन्यतोदद्भ्यो भूयान्लोमभिरुभयादद्भ्यो यं द्विष्या-त्तमधस्पदं ध्यायेद्वज्रेणैवैनं स्तृणुते ॥ १० ॥

अस्य । एतत् । महिमानम् । व्याचष्ट इति वि-आचष्टे । वज्री । वै । एषः । यत् । अश्वः । दद्भिरिति दत्-भिः । अन्यतोदद्भ्य इत्यन्यतोदत्-भ्यः। भूयान् । लोमभिरिति लोम-भिः । उभयादद्भ्य इत्युभयादत्-भ्यः । यम् । द्विष्यात् । तम् । अ-धस्पदमित्यधः-पदम् । ध्यायेत् । वज्रेण । एव । एनम् । स्तृणुते ॥ १० ॥

आह पापीयान्रुद्रादेव येनाग्रं वज्री वै सप्त-दश च ॥ २ ॥

---

दद्भिः भूयान् बहुतरः उभयतोदत्त्वात् । अथोभयतोदद्भ्यो लोमभिर्भूयान् बहुतरलोमत्वात् । अन्यतरस्मिन् भागे उपरि अधो वा दन्ताः येषां ते अन्यतोदतः, ‘ छन्दसि वा ’ इति दद्भावः, उभयोः दन्ता येषामिति पूर्ववद्दद्भावः, ‘ अन्येषामपि दृश्यते ’ इति दीर्घत्वम् । पदस्याधस्तात् अधस्पदं, तिष्ठद्गुप्रभृति ‘ अधश्शिरसी पदे ’ इति सत्वम् । वज्रेणैव एनं स्तृणुते छादयति विनाशयति ॥

इति पञ्चमे प्रथमे द्वितीयोनुवाकः.

उत्क्रामोद॑क्रमी॒दिति॒ द्वाभ्या॒मुत्क्र॑म- य॑ति॒ प्रति॑ष्ठित्या॒ अनु॑रूपाभ्यां॒ त- स्मा॒दनु॑रूपाः प॒शव॒ः प्र जा॑यन्ते॒ऽप उप॑ सृजति॒ यत्र॒ वा आप॑ उप॒ग- च्छ॑न्ति॒ तदोष॑धय॒ः प्रति॑ तिष्ठ॒न्त्यो- ष॑धीः प्रति॒तिष्ठ॑न्तीः प॒शवोऽनु॒ प्रति॑ तिष्ठन्ति प॒शून् य॒ज्ञो य॒ज्ञं यज॑माना॒नो

[1]उदिति॑ । क्रा॒म॒ । उदिति॑ । अ॒क्र॒मी॒त् । इति॑ । द्वाभ्या॑म् । उदिति॑ । क्र॒म॒य॒ति॒ । प्रति॑ष्ठित्या॒ इति॒ प्रति॑-स्थि॒त्यै॒ । अनु॑रूपाभ्या॒मित्यनु॑-रू॒पा॒भ्या॒म् । तस्मा॑त् । अनु॑रूपा॒ इत्यनु॑-रू॒पाः । प॒शव॑ः । प्रेति॑ । जा॒य॒न्ते॒ । अ॒पः । उपेति॑ । सृ॒जा॒ति॒ । यत्र॑ । वै । आप॑ः । उ॒प॒ग॒च्छ॒न्तीत्यु॑प-ग॒च्छ॑न्ति । तत् । ओष॑धयः । प्रतीति॑ । ति॒ष्ठ॒न्ति॒ । ओष॑धीः । प्र॒ति॒तिष्ठ॑न्ती॒रिति॑ प्रति-तिष्ठ॑न्तीः । प॒शव॑ः । अनु॑ । प्रतीति॑ । ति॒ष्ठ॒न्ति॒ । प॒शून् । य॒ज्ञः । य॒ज्ञम् । यज॑मानः । यज॑मानम् । प्र॒जा इति॑

---

[1]उत्क्रामोदक्रमीदिति ॥ द्वाभ्यां अश्वं प्राञ्चमुत्क्रामयति । द्वित्वात् प्रतिष्ठित्यै भवति । 'उत्क्राम महते सौभगाय, उद- क्रमीद्द्रविणोदा वाजी '* इति दर्शनात् आनुरूप्यमनयोः कर्मणि।

---

*सं. ४-१-२.

यजमानं प्रजास्तस्मादप उप सृजति प्रतिष्ठित्यै यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः ॥ ११ ॥ स्याद्रक्षांसि यज्ञं हन्युर्हिरण्यमुपास्यं जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञं रक्षांसि घ्नन्ति जिघर्म्यग्निं मनसा घृतेनेत्याह मनसा

प्र-जाः । तस्मात् । अपः । उपेति । सृजति । प्रतिष्ठित्या इति प्रति-स्थित्यै । [2]यत् । अध्वर्युः । अनग्नौ । आहुतिमित्या-हुतिम् । जुहुयात् । अन्धः । अध्वर्युः ॥ ११ ॥ स्यात् । रक्षांसि । यज्ञम् । हन्युः । हिरण्यम् । उपास्येत्युप-अस्य । जुहोति । अग्निवतीत्यग्नि-वति । एव । जुहोति । न । अन्धः । अध्वर्युः । भवति । न । यज्ञम् । रक्षांसि । घ्नन्ति । जिघर्मि । अग्निम् । मनसा । घृतेन । इति । आह । मनसा । हि । पुरुषः । यज्ञम् । अभिगच्छती-

---

आपो देवीरिति पदाशयमद्भिरुपसृजति । यत्र वा इत्यादि । गतम् । लक्षणे अनोः कर्मप्रवचनीयत्वम् ॥

[2]यदध्वर्युरित्यादि ॥ यत्र दक्षिणेऽवान्तरशफे जिघर्म्यग्निमित्यभि-

हि पुरुषो यज्ञमभिगच्छति प्रति-
क्ष्यन्तं भुवनानि विश्वेत्याह सर्वꣳ
ह्येष प्रत्यङ्क्षेति पृथुं तिरश्चा वयसा
बृहन्तमित्याहाल्पो ह्येष जातो म-
हान् ॥ १२ ॥ भवति व्यचिष्ठमन्नꣳ
रभसं विदानमित्याहान्नमेवास्मै स्व-
दयति सर्वमस्मै स्वदते य एवं वे-

त्यभि–गच्छति । प्रतिक्ष्यन्तमिति प्रति–क्ष्यन्तम् ।
भुवनानि । विश्वा । इति । आह । सर्वम् । हि । ए-
षः । प्रत्यङ् । क्षेति । पृथुम् । तिरश्चा । वयसा । बृ-
हन्तम् । इति । आह । अल्पः । हि । एषः । जातः ।
महान् ॥ १२ ॥ भवति । व्यचिष्ठम् । अन्नम् । रभ-
सम् । विदानम् । इति । आह । अन्नम् । एव । अस्मै ।
स्वदयति । सर्वम् । अस्मै । स्वदते । यः । एवम् ।

---

जुहोति तत्र हिरण्यं निधाय होतव्यमित्यनेन विधीयते । मनसा हीति । अभि गच्छति संकल्पयति । सर्वं ह्येष इति । एष ह्यग्निः सर्वं भूतजातं प्रत्यङ्क्षेति अनुप्रविशाति सर्वोपकारित्वात् सर्वगतत्वाच्च । क्षि निवासगत्योः तौदादिकः, व्यत्ययेन शपो लुक् । तस्मात्प्रतिक्ष्यन्तमुच्यते इति व्यत्ययेन उदङ्क्ष [....त्ययेन अङ्] क्रियते इति मन्यते । पृथुमित्यादि । गतम् ॥

दा त्वा जिघर्मि वचसा घृतेनेत्याह
तस्माद्यत्पुरुषो मनसाऽभिगच्छति
तद्वाचा वदत्यरक्षसेत्याह रक्षसामप-
हत्यै मर्यश्रीस्स्पृहयद्वर्णो अग्निरि-
त्याहापचितिमेवास्मिन्दधात्यपचिति-
मान्भवति य एवम् ॥ १३ ॥ वेद

वेद । [3] एति । त्वा । जिघर्मि । वचसा । घृतेन । इति । आह ।
तस्मात् । यत् । पुरुषः । मनसा । अभिगच्छतीत्यभि–ग-
च्छति । तत् । वाचा । वदति । अरक्षसा । इति । आ-
ह । रक्षसाम् । अपहत्या इत्यप–हत्यै । मर्यश्रीरि-
ति मर्य–श्रीः । स्पृहयद्वर्ण इति स्पृहयत्–वर्णः ।
अग्निः । इति । आह । अपचितिमित्यप–चितिम् ।
एव । अस्मिन् । दधाति । अपचितिमानित्यप-
चिति–मान् । भवति । यः । एवम् ॥ १३ ॥ वेद ।

---

[3] उत्तरेऽवान्तरे शफे अभिजुहोति––आ त्वेति ॥ तस्मादिति ।
पूर्वो हि होमो मनसा, अयं तु वचसा । यस्मादेवं तस्मात्पुरुषः
पूर्वं मनसाभिगतं पश्चाद्वाचा वदति । अपचितिं पूजां अस्मिन्
दधाति, स्पृहणीयवर्ण इति दर्शनात् । मनसा त्वै तामिति ।
अनग्नौ हूयमाना आहुतिः मनसैवाप्यते । तस्मात् मनस्वतीभ्यां
ऋग्भ्यां पूर्वोत्तराभ्यां होमः आहुत्योराप्त्यै भवति एवं हि आ-

मनसा त्वै तामाप्तुमर्हति यामध्वर्यु-
रनग्नावाहुतिं जुहोति मनस्वतीभ्यां
जुहोत्याहुत्योराप्त्यै द्वाभ्यां प्रतिष्ठि-
त्यै यज्ञमुखेयज्ञमुखे वै क्रियमाणे
यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येतर्हि

मनसा । तु । वै । ताम् । आप्तुम् । अर्हति । याम् । अध्वर्युः । अनग्नौ । आहुतिमित्या—हुतिम् । जुहोति । मनस्वतीभ्याम् । जुहोति । आहुत्योरित्या—हुत्योः । आप्त्यै । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । यज्ञमुखेयज्ञमुख इति यज्ञमुखे—यज्ञमुखे । वै । क्रियमाणे । यज्ञम् । रक्षाꣳसि । जिघाꣳसन्ति । एतर्हि । खलु । वै । एतत् । यज्ञमुखमिति

हुती अभिनिवृत्ते भवत इति । तदन्तलोपश्छान्दसः । प्रातिशाख्यं च 'तुनुपूर्व उदात्तयोर्वकारः'* इति । द्वाभ्यामिति । जुहोतीत्येव ॥

"'परि वाजपतिः'† इति तिसृभिः पदं परिलिखति गायत्र्यनुष्टुप्त्रिष्टुभिः; तद्विधातुं स्तोतुं चारभते—यज्ञमुखे इत्यादि ॥ 'अनुदात्तं च' इति द्वितीयोनुदात्तः । अश्वशफस्य कथं यज्ञमुखत्वमित्याह—एतर्हीत्यादि । एतर्हि अस्मिन्काले खलु एतत्पदं यज्ञमुखं जातं यर्हि यस्मिन्काले एतत्पदमाहुतिरश्नुते प्राप्नुते ।

*५-१३. †सं. ४-१-२.

खलु वा एतद्यज्ञमुखं यर्ह्येनदाहुति-
रश्नुते परि लिखति रक्षसामपहत्यै
तिसृभिः परि लिखति त्रिवृद्वा अ-
ग्निर्यावानेवाग्निस्तस्माद्रक्षा꣡ꣳस्यप ह-
न्ति ॥ १४ ॥ गायत्रिया परि लि-
खति तेजो वै गायत्री तेजसैवैनं

यज्ञ-मुखम् । यर्हि । एनत् । आहुतिरित्या-हुतिः। अश्नुते । परीति । लिखति । रक्षसाम् । अपहत्या इत्यप-हत्यै । तिसृभिरिति तिसृ-भिः । परीति । लिखति । त्रिवृदिति त्रि-वृत् । वै । अग्निः । यावान् । एव । अग्निः । तस्मात् । रक्षाꣳसि । अपेति । हन्ति ॥ १४ ॥ गायत्रिया । परीति । लिखति । तेजः । वै । गायत्री । तेजसा । एव । एनम् । परीति । गृह्णाति । त्रिष्टुभा । परीति । लिखति । इन्द्रियम् ।

'अनद्यतने र्हिल्' 'एतेतौ रथोः' इति एतादेशः । 'द्वितीयाटौ स्वेनः' इति एनादेशः 'एनदिति नपुंसकैकवचनं वक्तव्यम्' इति । परिलिखतीति पदपरिलेखनविधिः । तिसृभिरिति सङ्ख्याविधिः । त्रिवृता सहोत्पन्नत्वात्ताच्छब्द्यम्, त्रेधाहितेष्टकत्वाच्च । तस्मात्सर्वस्मादग्नेः रक्षांस्यपहन्ति । गायत्रियेत्यादि । छन्दोविधिः । तेजो वा इति । तद्धेतुत्वात्ताच्छब्द्यं सहोत्पत्त्या । एवमिन्द्रियं वै त्रिष्टुप् इति । अनुष्टुप् सर्वाणि छन्दां-

परिं गृह्णाति त्रिष्टुभा परिं लिखतीन्द्रियं वै त्रिष्टुगिंन्द्रियेणैवैनं परिं गृह्णात्यनुष्टुभा परिं लिखत्यनुष्टुप्सर्वाणि छन्दाꣳसि परिभूः पर्याप्त्यै मध्यतोऽनुष्टुभा वाग्वा अंनुष्टुप्तस्मान्मध्यतो वाचा वंदामो गायत्रिया प्रंथमया परिं लिखत्यथांनुष्टुभाऽथं

वै । त्रिष्टुक् । इन्द्रियेणं । एव । एनम् । परीतिं । गृह्णाति । अनुष्टुभेत्यंनु–स्तुभां । परीतिं । लिखति । अनुष्टुबित्यंनु–स्तुप् । सर्वाणि । छन्दाꣳसि । परिभूरितिं परि–भूः । पर्याप्त्या इति परि–आप्त्यै । 5 मध्यतः । अनुष्टुभेत्यंनु–स्तुभां । वाक् । वै । अनुष्टुबित्यंनु–स्तुप् । तस्मात् । मध्यतः । वाचा । वदामः । गायत्रिया । प्रथमयां । परीतिं । लिखति । अथं । अनुष्टुभेत्यंनु–स्तुभां । अथं । त्रिष्टु-

सीति । परिभूरिति । वाग्वा अनुष्टुप् । परितो भवतीति परिभूः सर्वतो व्याप्नोति । 'अभितः परितः' इति द्वितीया । वलि लोपश्छान्दसः ॥

[5]एवमभिप्रसिद्धेन क्रमेण छन्दांस्याम्नातानि । इदानीं तं बाधित्वा क्रमान्तरं विदधाति—मध्यतोऽनुष्टुभेति ॥ यदि तर्ह्याम्नातक्रमो बाध्यते प्रथमतृतीये उच्येतामित्याह—गायत्रिया प्रथम-

त्रिष्टुभा तेजो वै गायत्री यज्ञोऽनुष्टु-
गिन्द्रियं त्रिष्टुप्तेजसा चैवेन्द्रियेणं
चोभयतो यज्ञं परि गृह्णाति ॥ १५॥
देवस्यं त्वा सवितुः प्रसव इति
खनाति प्रसूत्या अथो धूममेवैतेनं
जनयति ज्योतिष्मन्तं त्वाऽग्ने सुप्र-

भां । तेजः । वै । गायत्री । यज्ञः । अनुष्टुगित्यनु-स्तुक् । इन्द्रियम् । त्रिष्टुप् । तेजसा । च । एव । इन्द्रियेणं । च । उभयतः । यज्ञम् । परीतिं । गृह्णाति ॥ १५ ॥

अन्धोऽध्वर्युर्महान्भवति य एवꣳ हन्ति त्रि-
ष्टुभा तेजो वै गायत्री त्रयोदश च ॥३॥

[1] देवस्यं । त्वा । सवितुः । प्रसव इतिं प्र-सवे । इतिं । खनाति । प्रसूत्या इति प्र-सूत्यै । अथो इतिं । धूमम् । एव । एतेनं । जनयति । ज्योतिष्मन्तम् । त्वा । अग्ने । सुप्रतीकामितिं सु-प्रती-

येति । कः पुनः अस्मिन्क्रमे इत्याह—तेजो वा इत्यादि । गतम् ॥

इति पञ्चमे प्रथमे तृतीयोनुवाकः.

---

[1] देवस्य त्वेत्यादि ॥ द्वावेतौ खननमन्त्रौ । अथो अपि च एतेन

तीकमित्याह ज्योतिरेवैतेनं जनयति सोऽग्निर्जातः प्रजाश्शुचाऽऽर्पयत्तं देवा अर्धर्चेनाशमयञ्छिवं प्रजाभ्योऽहिंसन्तमित्याह प्रजाभ्य एवैनꣳ शमयति द्वाभ्यां खनति प्रतिष्ठित्या अपां पृष्ठमसीति पुष्करपर्णमा ॥१६॥

कम् । इति । आह । ज्योतिः । एव । एतेन । जनयति । [2]सः । अग्निः । जातः । प्रजा इति प्र-जाः । शुचा । आर्पयत् । तम् । देवाः । अर्धर्चेनेत्यर्ध-ऋचेन । अशमयन् । शिवम् । प्रजाभ्य इति प्र-जाभ्यः । अहिꣳसन्तम् । इति । आह । प्रजाभ्य इति प्र-जाभ्यः । एव । एनम् । शमयति । द्वाभ्याम् । खनति । प्रतिष्ठित्या इति प्रति-स्थित्यै । [3]अपाम् । पृष्ठम् । असि । इति । पुष्करपर्णमिति पुष्कर-पर्णम् । एति ॥ १६ ॥ हरति ।

---

प्रथमेन मन्त्रेण उत्पत्स्यमानस्याग्नेः धूमं जनयति प्राथम्यात् । ज्योतिरेव एतेन द्वितीयेन मन्त्रेण ।

[2]सोऽग्निरित्यादि ॥ पूर्वेणार्धेन जातमग्निं प्रजाश्शोचयन्तं उत्तरेणार्धर्चेनाशमयन्, शिवं प्रजाभ्य इति दर्शनात् ।

[3]अपामित्यादि ॥ पुष्करपर्णं पद्मपत्रं अपामेतत्पृष्ठमिव उपरि-

हरत्यपां वा एतत्पृष्ठं यत्पुष्करपर्णꣳ
रूपेणैवैनदा हरति पुष्करपर्णेन सं
भरति योनिर्वा अग्नेः पुष्करपर्णꣳ
सयोनिमेवाग्निꣳ सं भरति कृष्णा-
जिनेन सं भरति यज्ञो वै कृष्णा-
जिनं यज्ञेनैव यज्ञꣳ सं भरति

अपाम् । वै । एतत् । पृष्ठम् । यत् । पुष्करपर्ण-
मिति पुष्कर-पर्णम् । रूपेण । एव । एनत् ।
एति । हरति । पुष्करपर्णेनेति पुष्कर-पर्णेन ।
समिति । भरति । योनिः । वै । अग्नेः । पुष्कर-
पर्णमिति पुष्कर-पर्णम् । सयोनिमिति स-यो-
निम् । एव । अग्निम् । समिति । भरति । [4]कृ-
ष्णाजिनेनेति कृष्ण-अजिनेन । समिति । भर-
ति । यज्ञः । वै । कृष्णाजिनमिति कृष्ण-अजि-
नम् । यज्ञेन । एव । यज्ञम् । समिति । भरति ।

---

भावात् । तस्माद्रूपेणात्मीयेन सह एनदाहृतं भवति अपां पृष्ठमसि इत्याहरणात् । योनिर्वा इति । 'त्वामग्ने पुष्करादध्यथर्वा निरमन्थत'* इति मन्त्रलिङ्गात् ।

[4]यज्ञो वा इति ॥ प्रधानसाधनत्वात् । ग्राम्याणामित्यादि । ग्राम्यसंज्ञाभाजो ये ग्राम्याः पशवो गोजाव्यश्वतरीगर्दभपुरुषोष्ट्राः

---

*सं. ४-१-२.

यद्ग्राम्याणां पशूनां चर्मणा संभरेद्ग्राम्यान्पशूञ्छुचाऽर्पयेत्कृष्णाजिनेन सं भरत्यारण्यानेव पशून् ॥ १७ ॥ शुचाऽर्पयति तस्मात्समावत्पशूनां प्रजायमानानामारण्याः पशवः कनीयाꣳसश्शुचा ह्यृता लोमतस्सं भरत्यतो ह्यस्य मेध्यं कृष्णाजिनं च पुष्करपर्णं च सꣳ स्तृणातीयं वै

यत् । ग्राम्याणाम् । पशूनाम् । चर्मणा । संभरेदिति सं-भरेत् । ग्राम्यान् । पशून् । शुचा । अर्पयेत् । कृष्णाजिनेनेति कृष्ण-अजिनेन । समिति । भरति । आरण्यान् । एव । पशून् ॥ १७ ॥ शुचा । अर्पयति । तस्मात् । समावत् । पशूनाम् । प्रजायमानानामिति प्र-जायमानानाम् । आरण्याः । पशवः । कनीयाꣳसः । शुचा । हि । ऋताः । लोमतः । समिति । भरति । अतः । हि । अस्य । मेध्यम् । कृष्णाजिनमिति कृष्ण-अजिनम् । च । पुष्करपर्णमिति पुष्कर-पर्णम् । च । समिति । स्तृणाति । इयम् । वै । कृष्णाजिनमिति कृष्ण-

सप्त द्विखुराः श्वापदानि च पक्षिणश्च सरीसृपाणि च हस्ती च मर्कटश्च नादेयाश्चेति सप्त आरण्याः । तस्मादित्यादि । समा-

कृष्णाजिनमसौ पुष्करपर्णमाभ्या-
मेवैनमुभयतः परि गृह्णात्यग्निर्देवे-
भ्यो निलायत तमथर्वान्वपश्यद-
थर्वा त्वा प्रथमो निरमन्थदग्न इति
॥ १८ ॥ आह य एवैनमन्वपश्य-
त्तेनैवैन्ᳲ सं भरति त्वामग्ने पुष्क-

अजिनम् । असौ । पुष्करपर्णमिति पुष्कर–प-
र्णम् । आभ्याम् । एव । एनम् । उभयतः । परी-
ति । गृह्णाति । [5]अग्निः । देवेभ्यः । निलायत । तम् ।
अथर्वा । अन्विति । अपश्यत् । अथर्वा । त्वा ।
प्रथमः । निरिति । अमन्थत् । अग्ने । इति ॥ १८ ॥
आह । यः । एव । एनम् । अन्वपश्यदित्यनु–अ-
पश्यत् । तेन । एव । एनम् । समिति । भरति ।
त्वाम् । अग्ने । पुष्करात् । अधीति । इति । आ-

---

वत् 'समासान्तुप्' इति स्वार्थिकः । कनीयांसः स्वल्पतराः शु-
चा ऋतत्वात् प्राप्तत्वान्नाभिवृद्धिरारण्यानाम् । लोमतः लोमसु । आ-
द्यादित्वात्तसिः । अतो हीति । यस्मादत्र संभ्रियते तस्मादिदमस्य
कृष्णाजिनस्य लोम मेधार्हम् । कृष्णाजिनं चेत्यादि । गतम् ॥

[5]अग्निर्देवेभ्यो निलायत निरगच्छत् । पूर्ववच्छलत्वम् । अथ-
र्वा नाम ऋषिः तमन्वपश्यत् । तत्र पुरीष्योसीत्यादिभिः अष्टाभिः

शादधीत्याह पुष्करपर्णे ह्येनमुपश्रि-
तमविन्दत्तमु त्वा दध्यङ्ङृषिरित्याह
दध्यङ् वा आथर्वणस्तेजस्व्यासीत्तेज
एवास्मिन्दधाति तमु त्वा पाथ्यो
वृषेत्याह पूर्वमेवोदितमुत्तरेणाभि गृ-
णाति ॥ १९ ॥ चतसृभिस्सं भर-

ह । पुष्करपर्ण इति पुष्कर–पर्णे । हि । एनम् । उपश्रितमित्युप–श्रितम् । अविन्दत् । तम् । उ । त्वा । दध्यङ् । ऋषिः । इति । आह । दध्यङ् । वै । आथर्वणः । तेजस्वी । आसीत् । तेजः । एव । अस्मिन्न् । दधाति । तम् । उ । त्वा । पाथ्यः । वृषा । इति । आह । पूर्वम् । एव । उदितम् । उत्तरेणेत्युत्–तरेण । अभीति । गृणाति ॥ १९ ॥ [6]चतसृभिरिति चतसृ–भिः । समिति । भरति ।

मृदं खनति भरति । अन्वविन्दत् लब्धवान् अथर्वा । 'हि च' इति निघाताभावः । दध्यङ्ङा इत्यादि । दध्यञ्चतीति दध्यङ् । 'ऋत्विक्' इत्यादिना क्विन् 'क्विन्प्रत्ययस्य' इति नुमः कुत्वम् । दध्यङ् नाम अथर्वणः पुत्रः ऋषिः अर्णो पाथासि भवः पाथ्यः स एव दध्यङ् । 'पाथोनदीभ्यामण्' । पूर्वमेवोदितमिति । पूर्वेण मन्त्रेण उक्तमेवार्थं उत्तरेणाभिगृह्णाति अनुवदति उभयोरेकार्थत्वात् ॥

[6]चतसृभिरिति सङ्ख्याविधिः । छन्दोभिरेवेति । सम्भरणं कृतं भव-

ति चत्वारि छन्दांꣳसि छन्दोभिरेव गायत्रीभिर्ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुग्भी राजन्यस्य त्रैष्टुभो हि राजन्यो यं कामयेत वसीयान्थ्स्यादित्युभयीभिस्तस्य सं भरेत्तेजश्चैवास्मा इन्द्रियं च समीचीं द-

चत्वारि । छन्दांꣳसि । छन्दोभिरिति छन्दः-भिः । एव । गायत्रीभिः । ब्राह्मणस्य । गायत्रः । हि । ब्राह्मणः । त्रिष्टुग्भिरिति त्रिष्टुक्-भिः । राजन्यस्य । त्रैष्टुभः । हि । राजन्यः । [7]यम् । कामयेत । वसीयान् । स्यात् । इति । उभयीभिः । तस्य । सम् । भरेत् । तेजः । च । एव । अस्मै । इन्द्रि-

---

तीति । गायत्रीभिरित्यादि छन्दोविधिः । अत्रादितश्चतस्रो गायत्र्यः । तिस्रः त्रिष्टुभः पञ्चम्याद्याः । सप्तमी पथ्याबृहतीति, त्रिष्टुबेव वा ; छन्दोन्तरस्येहाप्रस्तुतत्वात् ॥

[7]यं कामयेतेति पक्षान्तरम् । वसीयान् वसुमत्तरः । 'विन्मतोर्लुक्' 'टेः' इति टिलोपः । समीची सङ्गते । संपूर्वादञ्चतेः 'ऋत्विक्' इत्यादिना क्विन्, 'समस्समि' इति सम्यादेशः 'चौ' इति दीर्घत्वम्, अन्तोदात्तं च । 'नपुंसकाच्च' इति शीभावः ॥

धात्यष्टाभिस्सं भरत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तꣳ सं भरति सीद होतरित्याह देवता एवास्मै सꣳसादयति नि होतेति मनुष्यान्थ्सꣳ सीदस्वेति वयाꣳसि जनिष्वा हि जेन्यो अग्रे अह्नामि-

यम् । च । समीची इति । दधाति । [8]अष्टाभिः । समिति । भरति । अष्टाक्षरेत्यष्टा–अक्षरा । गायत्री । गायत्रः । अग्निः । यावान् । एव । अग्निः । तम् । समिति । भरति । सीद । होतः । इति । आह । देवताः । एव । अस्मै । समिति । सादयति । नीति । होता । इति । मनुष्यान् । समिति । सीदस्व । इति । वयाꣳसि । जनिष्व । हि । जेन्यः । अग्रे । अह्नाम् । इति । आह । देवमनुष्यानिति देव–मनुष्यान् । एव । अस्मै । सꣳसं-

[8]अष्टाभिरिति पक्षान्तरम् । 'सीद होतः'* इत्यादिमन्त्रत्रयेण देवान्मनुष्यान् वयांसि च अस्मै संसादयति सङ्गतान् स्थापयति च धनपातनाय 'देवान् हविषा यजासि'* इति प्रथमे दर्शनात् 'होतृषदने विदानः'* इति द्वितीये दर्शनात् । मनुष्यहोतृग्रहणात् तृतीये

*सं. ४-१-३.

त्याह देवमनुष्यानेवास्मै सꣳसंन्ना-
न्प्र जनयति ॥ २० ॥
क्रूरमिव वा अस्या एतत्करोति
यत्खनंत्यप उप सृजत्यापो वै शा-
न्ताश्शान्ताभिरेवास्यै शुचꣳ शम-
यति सं ते वायुर्मातरिश्वा दधात्वि-

न्नानिति सं-सन्नान् । प्रेति । जनयति ॥ २० ॥

ऐव पशूनिति गृणाति होतरिति सप्तविꣳ-
शतिश्च ॥ ४ ॥

[1]क्रूरम् । इव । वै । अस्याः । एतत् । करोति ।
यत् । खनति । अपः । उपेति । सृजति । आपः ।
वै । शान्ताः । शान्ताभिः । एव । अस्यै । शुचम् ।
शमयति । समिति । ते । वायुः । मातरिश्वा ।
दधातु । इति । आह । प्राण इति प्र-अनः । वै ।

'देववीतमः' इति दर्शनात् देवानां तर्पयितृतमः चित्याग्निः सपक्षपु-च्छादेति । देवमनुष्यानिति । उपलक्षणत्वाद्वयांसि च ॥

इति पञ्चमे प्रथमे चतुर्थोनुवाकः.

---

[1]क्रूरमिवेत्यादि ॥ अस्याः पृथिव्याः अप उपसृजति अश्व-लोमेनावटं पूरयित्वा 'सं ते वायुः'* इति मन्त्रेणाप उपसृजति

*सं, ४-१-४.

त्याह प्राणो वै वायुः प्राणेनैवास्यै प्राणꣳ सं दधाति सं ते वायुरित्याह तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्ते तस्मै च देवि वषडस्तु ॥ २१ ॥ तुभ्यमित्याह षड्वा ऋतवं ऋतुष्वेव वृष्टिं दधाति तस्मात्सर्वानृतून् वर्-

वायुः । प्राणेनेति प्र-अनेन । एव । अस्यै । प्राणमिति प्र-अनम् । समिति । दधाति । समिति । ते । वायुः । इति । आह । तस्मात् । वायुप्रच्युतेति वायु-प्रच्युता । दिवः । वृष्टिः । ईर्ते । तस्मै । च । देवि । वषट् । अस्तु ॥ २१ ॥ तुभ्यम् । इति । आह । षट् । वै । ऋतवः । ऋतुषु । एव । वृष्टिम् । दधाति । तस्मात् । सर्वान् । ऋतून् ।

---

अपोवनयति शान्ताः सुखहेतवः । अस्या इति चतुर्थ्यर्थे षष्ठी । प्राणेनेति । प्राणेन वायुना अस्याः प्राणस्थानीयमवटं संदधाति 'हृदयं' इति मन्त्रे दर्शनात् । तस्मादिति । यस्मात् वायुः सन्धातृत्वेन अभिधीयते । तस्मात् वायुप्रच्युता वृष्टिः दिवः पृथिवीं गच्छति गत्वा च खातान्यतिवारयति । ईर गतौ तौदादिकः । षड्वा इति । षट्छब्दवता षट्छब्देनापां उपसर्जनात् वाचकत्वेन षट्छब्दवत्सु षट्स्वपि ऋतुषु वृष्टिं निदधाति ॥

षति यद्वंषट्कुर्याद्यातयामाऽस्य व-
षट्कारस्स्याद्यन्न वंषट्कुर्याद्रक्षाꣳसि
यज्ञꣳ हंन्युर्वडित्याह परोक्षमेव व-
षंट्करोति नास्यं यातयामा वषट्कारो
भवंति न यज्ञꣳ रक्षाꣳसि घ्नन्ति
सुजातो ज्योतिषा सहेत्यंनुष्टुभोपं

वरषति । [2]यत् । वषट्कुर्यादितिं वषट्-कुर्यात् । या-तयामेतिं यात-यामा । अस्य । वषट्कार इतिं व-षट्-कारः । स्यात् । यत् । न । वषट्कुर्यादितिं व-षट्-कुर्यात् । रक्षाꣳसि । यज्ञम् । हन्युः । वट् । इतिं । आह । परोक्षमितिं परः-अक्षम् । एव । वषंट् । करोति । न । अस्य । यातयामेतिं यात-यामा । वषट्कार इतिं वषट्-कारः । भवंति । न । यज्ञम् । रक्षाꣳसि । घ्नन्ति । [3]सुजात इति सु-

---

[2]यदित्यादि ॥ वषट्कारस्य करणे यातयामा आत्तरसः स्यात् उपयुक्तत्वात् । अकरणे यज्ञं रक्षांसि च बाधेरन् । तस्माल्लुप्तवषट्कारं वडित्येव ब्रूयात् । तत्परोक्षमप्रत्यक्षं वषट्कारमेव करोति । तदनया यातयामत्वं अविकृतस्य अनुपयुक्तत्वात् । न च रक्षोभिः पीडा, एकदेशविकृतस्यानन्यत्वेन वषट्कारसद्भावात् ॥

[3]सुजात इत्यादि ॥ अनया त्रिष्टुभा योक्त्रेणापनह्यति परि-

नह्यत्यनुष्टुप् ॥ २२ ॥ सर्वाणि छ-
न्दाꣳसि छन्दाꣳसि खलु वा अग्नेः
प्रिया तनूः प्रिययैवैनं तनुवा परि
दधाति वेदुको वासो भवति य एवं
वेद वारुणो वा अग्निरुपनद्ध उदु
तिष्ठ स्वध्वरोर्ध्व ऊषु णं ऊतय
इति सावित्रीभ्यामुत्तिष्ठति सवितृ-

जातः । ज्योतिषा । सह । इति । अनुष्टुभेत्यनु-स्तुभा । उपेति । नह्यति । अनुष्टुबित्यनु-स्तुप् । ॥ २२ ॥ सर्वाणि । छन्दाꣳसि । छन्दाꣳसि । खलु । वै । अग्नेः । प्रिया । तनूः । प्रियया । एव । एनम् । तनुवा । परीति । दधाति । वेदुकः । वासः । भवति । यः । एवम् । वेद । [4]वारुणः । वै । अग्निः । उप-नद्ध इत्युप-नद्धः । उदिति । उ । तिष्ठ । स्वध्व-रेति सु-अध्वर । ऊर्ध्वः । उ । स्विति । नः । ऊत-ये । इति । सावित्रीभ्याम् । उदिति । तिष्ठति । स-

---

दधाति संव्ययते एवं वेदिता लब्धवान् भवति । छान्दस उकञ् ॥

[4]सावित्रीभ्यामित्यादि ॥ तुल्यकार्ययोः द्वितीयायाः सावित्री-त्वात् प्रथमाऽपि सावित्री । यद्वा—देवस्सविता तमर्हतीति देव्या । 'सुपां सुलुक्' इति तृतीयाया लुक् । सवितृप्र-

प्रसूत एवास्योर्ध्वां वरुणमेनिमुथ्सृजति द्वाभ्यां प्रतिष्ठित्यै स जातो गर्भो असि ॥ २३ ॥ रोदस्योरित्याहेमे वै रोदसी तयोरेष गर्भो यदग्निस्तस्मादेवमाहाग्ने चारुर्विभृत

वितृप्रसूत इति सवितृ–प्रसूतः । एव । अस्य । ऊर्ध्वाम् । वरुणमेनिमिति वरुण–मेनिम् । उदिति । सृजति । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति–स्थित्यै । [5]सः । जातः । गर्भः । असि ॥ २३ ॥ रोदस्योः । इति । आह । इमे इति । वै । रोदसी इति । तयोः । एषः । गर्भः । यत् । अग्निः । तस्मात् । एवम् । आह । अग्ने । चारुः । विभृत इति वि–भृतः । ओषधीषु । इति । आह । यदा ।

---

सूतः सवित्राऽनुज्ञातः । ‘तृतीयाकर्मणि’ इति पूर्वपदप्रकृतिस्वरत्वम् । वरुणमेनिमिति । वरुणो वारयिता निरोधकः तत्सम्बन्धिनी याऽस्य मेनिः रूपं वरुणगृहीतत्वं तामूर्ध्वामुत्सृजति सादयति अनेनार्धेन । द्वाभ्यामिति प्रतितिष्ठत्येव ॥

[5]स जात इति भरणमन्त्रः । इमे इत्यादि । गतम् । यदा हि इत्यादि । यदा ह्येतं जातमग्निं ओषधयो मातृस्थानीया विहरन्ति विविधं परिगृह्णन्ति । ‘ह्वग्रहोर्भः’ । ‘तिङि चोदात्तवति’

ओषधीष्वित्याह यदा ह्येतं विभरन्त्यथ चारुतरो भवति प्र मातृभ्यो अधि कनिक्रदद्गा इत्याहौषधयो वा अस्य मातरस्ताभ्यं एवैनं प्र च्यावयति स्थिरो भव वीड्वङ्ग इति गर्दभ आ सादयति ॥ २४ ॥ सं न-

हि । एतम् । विभरन्तीति वि–भरन्ति । अथ । चारुतर इति चारु–तरः । भवति । प्रेति । मातृभ्य इति मातृ–भ्यः । अधीति । कनिक्रदत् । गाः । इति । आह । ओषधयः । वै । अस्य । मातरः । ताभ्यः । एव । एनम् । प्रेति । च्यावयति । [6]स्थिरः । भव । वीड्वङ्ग इति वीडु–अङ्गः । इति । गर्दभे । एति । सादयति ॥ २४ ॥ समिति । नह्य-

---

इति गतेरनुदात्तत्वम्, समासश्च । अनन्तरं चारुतरो दर्शनीयतरो भवति । तस्मादेवमाहेत्येव । ओषधयो वा इति । मातृस्थानीयानां ओषधीनां सकाशमेनं प्रापयति ॥

[6]सं नह्यत्येवेति ॥ एतया ऋचा आसादनं गर्दभस्य संनहनार्थम् । स्थिरो भव वीड्वङ्गो दृढाङ्गो भव वाजी भव हे अर्वन्! अरणकुशलेति । तच्च स्थेम्ने वहनकाले स्थिरत्वाय । प्रियस्थिरादिना स्थ आदेशः, उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

ह्यत्यैवैनमेतया स्थेम्ने गर्दभेन सं
भरति तस्माद्गर्दभः पशूनां भारभा-
रितमो गर्दभेन सं भरति तस्माद्गर्द-
भोऽप्यनालेशेऽत्यन्यान्पशून्मेद्यत्य -
न्नꣳ ह्येनेनार्कꣳ संभरन्ति गर्दभेन सं
भरति तस्माद्गर्दभो द्विरेतास्सन्कनि-

ति । एव । एनन् । एतया । स्थेम्ने । [7]गर्दभेन ।
समिति । भरति । तस्मात् । गर्दभः । पशूनाम् ।
भारभारितम इति भारभारि–तमः । गर्दभेन ।
समिति । भरति । तस्मात् । गर्दभः । अपीति ।
अनालेश इत्यना–लेशे । अतीति । अन्यान् ।
पशून् । मेद्यति । अन्नम् । हि । एनेन । अर्कम् ।
संभरन्तीति सं–भरन्ति । गर्दभेन । समिति । भ-
रति । तस्मात् । गर्दभः । द्विरेता इति द्वि–रेताः ।

---

[7]गर्दभेनेत्यादि ॥ पशूनां मध्ये अतिशयेन भारभारितमः भारं वोढुं समर्थः अग्नेरपि वोढृत्वात् कुशलस्सूक्ष्मो व्यावर्तकोऽन्यो हेतुः । तेनाल्पेनापि विरहितेऽस्मिन् गर्दभे सत्येव आयतनात् पशूनातिमेद्यति अतिक्रम्य मेहयति द्विरेता भवति । हेतुं समर्थयते—अन्नमिति । अर्क-मर्चनीयं अनेन गर्दभेन यस्मात्संभरति तस्मात् अन्नं सन्नद्धेन तथा बोस्यति । ‘द्वितीयाटौस्स्वेनः’ इत्येनादेशः अनुदात्तः । अर्चतेः कर्मणि घञि अर्कः । तस्मादिति । द्विरेताः अपि सन् कनिष्ठं

ष्ठं पशूनां प्र जायतेऽग्निर्ह्यस्य योनिं निर्दहति प्रजासु वा एष एतर्ह्यारूढः ॥ २५ ॥ स ईश्वरः प्रजाश्शुचा प्रदहश्शिवो भव प्रजाभ्य इत्याह प्रजाभ्य एवैनꣳ शमयति मानुषीभ्यस्त्वमङ्गिर इत्याह मानव्यो हि प्रजा मा द्यावापृथिवी अभि शूशु-

सन् । कनिष्ठम् । पशूनाम् । प्रेति । जायते । अग्निः । हि । अस्य । योनिम् । निर्दहतीति निः—दहति । [8]प्रजास्विति प्र—जासु । वै । एषः । एतर्हि । आरूढ इत्या—रूढः ॥ २५ ॥ सः । ईश्वरः । प्रजा इति प्र—जाः । शुचा । प्रदह इति प्र—दह । शिवः । भव । प्रजाभ्य इति प्र—जाभ्यः । इति । आह । प्रजाभ्य इति प्र—जाभ्यः । एव । एनम् । शमयति । मानुषीभ्यः । त्वम् । अङ्गिरः । इति । आह । मानव्यः । हि । प्रजा इति प्र - जाः । मा । द्यावापृथि-

अतिस्वल्पमेव प्रजायते प्रजामुत्पादयति । अग्निमिति । योनिं प्रजननशक्तिं अस्य* स्त्र्यमाणो(?)निर्दहति ॥

[8]अथ शिवो भवेत्युपस्थानं विधातुमाह—प्रजास्विति ॥ यदा अग्निः बहिः आसादितो भवति एतर्हि एतस्मिन्काले एषोऽग्निः

*शक्तिमत्त्वस्य,

चो माऽन्तरिक्षं मा वनस्पतीनित्या-
हैभ्य एवैनं लोकेभ्यंश्शमयति प्रैतु
वाजी कनिक्रददित्याह वाजी ह्येष
नानंदद्रासंभः पत्वेति ॥ २६ ॥ आ-
ह रासंभ इति ह्येतमृषयोऽवंदन्भरं-
न्नग्निं पुरीष्यंमित्याहाग्निꣳ ह्येष भ-
रति मा पाद्यायुषः पुरेत्याहायुरेवा-

वी इति द्यावा–पृथिवी । अभीति । शूशुचः । मा । अन्तरिक्षम् । मा । वनस्पतीन् । इति । आह । एभ्यः । एव । एनम् । लोकेभ्यः । शमयति । प्रेति । एतु । वाजी । कनिक्रदत् । इति । आह । वाजी । हि । एषः । नानंदत् । रासंभः । पत्वा । इति ॥ २६ ॥ आह । रासंभः । इति । हि । एतम् । ऋषयः । अवंदन् । भरन् । अग्निम् । पुरीष्यंम् । इति । आह । अग्निम् । हि । एषः । भरं-

---

प्रजास्वारूढो भवति । पूर्ववदिदम एनादेशः । स इत्यादि । गतम् । 'ईश्वरे तोसुन्कसुनौ' इति दहतेः कसुन् । मानव्य इति । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । तत 'उदात्तस्वरितयोः' इति विभक्तिस्स्वर्यते । 'प्रैतु वाजी' इति पूर्ववन्नीयमानमनुमन्त्रयते । 'नानदत्' इत्यादिना शिष्टेन पादत्रयेण उत्तराभ्यां च ऋग्भ्यां

स्मिन्दधाति तस्माद्गर्दभस्सर्वमायुरे-
ति तस्माद्गर्दभे पुराऽऽयुषः प्रमीते
बिभ्यति वृषाऽग्निं वृषणं भरन्नि-
त्याह वृषा ह्येष वृषाऽग्निरपां गर्भम्
॥ २७ ॥ समुद्रियमित्याहापाꣳ ह्येष
गर्भो यदग्निरग्न आ याहि वीतय

ति । मा । पादि । आयुषः । पुरा । इति । आह । आयुः । एव । अस्मिन्न् । दधाति । तस्मात् । गर्दभः । सर्वम् । आयुः । एति । तस्मात् । गर्दभे । पुरा । आयुषः । प्रमीत इति प्र—मीते । बिभ्यति । [1]वृषा । अग्निम् । वृषणम् । भरन्न् । इति । आह । वृषा । हि । एषः । वृषा । अग्निः । अपाम् । गर्भम् ॥ २७ ॥ समुद्रियम् । इति । आह । अपाम् । हि । एषः । गर्भः । यत् । अग्निः । अग्ने । एति । या-

---

गर्दभमन्वीयमानमनुमन्त्रयते । तस्मादिति । आयुषो मध्ये प्रमीते मृते गर्दभे बिभ्यति प्रजाः उत्पातत्वात् ॥

[1]वृषा हीति ॥ अयं सेक्ता अग्निः वृष्टिहेतुः । अग्न आयाहीति वीतिः प्रजननशक्तिः । 'मन्त्रे वृष' इति क्तिन उदात्तत्वम् । अनयोर्लोकयोः प्रजानां प्रजननार्थं, आयाहीति वचनात् । इमौ लोकौ द्यावापृथिव्यौ व्यैतां व्यगच्छताम् । विगतयोर्ह्यनयोः प्रजननादिसिद्धिरिति । तस्मा-

इति वा इमौ लोकौ व्यैतामग्न आ
याहि वीतय इति यदाहानयोर्लो-
कयोर्वीत्यै प्रच्युतो वा एष आय-
तनादगतः प्रतिष्ठाः स एतर्ह्यध्वर्युं
च यजमानं च ध्यायत्यृतः सत्यमि-
त्याहेयं वा ऋतमसौ ॥ २८ ॥ स-

हि । वीतये । इति । वै । इमौ । लोकौ । वीति । ए-
ताम् । अग्ने । एति । याहि । वीतये । इति । यत् ।
आह । अनयोः । लोकयोः । वीत्या इति वि-इत्यै ।
[10]प्रच्युत इति प्र-च्युतः । वै । एषः । आयतनादि-
त्या-यतनात् । अगतः । प्रतिष्ठामिति प्रति-स्थाम् ।
सः । एतर्हि । अध्वर्युम् । च । यजमानम् । च ।
ध्यायति । ऋतम् । सत्यम् । इति । आह । इयम् ।
वै । ऋतम् । असौ ॥ २८ ॥ सत्यम् । अनयोः ।

---

देतद्वचनमनयोर्लोकयोः वीत्यै विगमनाय भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[10]प्रच्युत इत्यादि ॥ स्वस्थानात्प्रच्युतः प्रतिष्ठां च गतः क्वचिदास्थापितश्च । सोऽयमिदानीं अध्वर्युः यजमानं ध्यायति चिन्तयति किं कृतमाभ्यामिति क्रुध्यति । ऋतं सत्यमिति समीक्षते । प्रतिष्ठापयतीति । तेन अप्रतिष्ठितत्वदोषाभावः । नार्तिमार्छतीति । आङ्पू-

त्यमनयोरेवैनं प्रतिष्ठापयति नार्ति-
मार्छत्यध्वर्युर्न यजमानो वरुणो वा
एष यजमानमभ्यैति यदग्निरुपनद्ध
ओषधयः प्रति गृह्णीताग्निमेतमित्या-
ह शान्त्यै व्यस्यन्विश्वा अमतीर-
रातीरित्याह रक्षसामपहत्यै निषी-
दन्नो अप दुर्मतिꣳ हनदित्याह प्र-

एव । एनम् । प्रतीति । स्थापयति । न । आर्तिम् ।
एति । ऋच्छति । अध्वर्युः । न । यजमानः ।
[1] वरुणः । वै । एषः । यजमानम् । अभि । एति ।
एति । यत् । अग्निः । उपनद्ध इत्युप—नद्धः ।
ओषधयः । प्रतीति । गृह्णीत । अग्निम् । एतम् ।
इति । आह । शान्त्यै । व्यस्यन्निति वि—अस्यन्न् ।
विश्वाः । अमतीः । अरातीः । इति । आह । र-
क्षसाम् । अपहत्या इत्यप—हत्यै । निषीदन्निति नि—
सीदन्न् । नः । अपेति । दुर्मतिमिति दुः—मतिम् ।

---

र्तोऽयमृच्छतिः विनाशे । अत्रानयोरेको गतिमात्रवचनः । आङ्पूर्वात् क्तिनः 'उपसर्गादृति धातौ' इति वृद्धिः । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । अवग्रहो नेष्यते ॥

[1] वरुणो वा इत्यादि ॥ उपनद्धस्य प्रकृतत्वात् 'ओषधयः' इति

तिष्ठित्या ओषधयः प्रति मोदध्वम्
॥ २९ ॥ एनमित्याहौषधयो वा अ-
ग्नेर्भागधेयं ताभिरेवैनꣳ समर्धयति
पुष्पावतीस्सुपिप्पला इत्याह तस्मा-
दोषधयः फलं गृह्णन्त्ययं वो गर्भ
ऋत्वियः प्रत्नꣳ सधस्थमाऽसददि-
त्याह याभ्य एवैनं प्रच्यावयति ता-

हनत् । इति । आह । प्रतिष्ठित्या इति प्रति-स्थि-
त्यै । ओषधयः । प्रतीति । मोदध्वम् ॥ २९ ॥ ए-
नम् । इति । आह । ओषधयः । वै । अग्नेः । भा-
गधेयमिति भाग-धेयम् । ताभिः । एव । एनम् ।
समिति । अर्धयति । पुष्पावतीरिति पुष्प-वतीः ।
सुपिप्पला इति सु-पिप्पलाः । इति । आह । त-
स्मात् । ओषधयः । फलम् । गृह्णन्ति । [12]अयम् ।
वः । गर्भः । ऋत्वियः । प्रत्नम् । सधस्थमिति स-
ध-स्थम् । एति । असदत् । इति । आह । याभ्यः ।

---

द्वौ खर उपावहरणमन्त्रौ । शान्त्यै सुखहेतुत्वाय ॥

[12]अयं व इति ॥ यासां सकाशं प्रापयितुं अयं स्थानात् प्रच्यावितः ‘ प्रमातृभ्यो अधि कनिक्रदत् गाः ’ इति तास्वेवौषधीषु

स्वेवैनं प्रतिष्ठापयति द्वाभ्यामुपावं-
हरति प्रतिष्ठित्यै ॥३०॥
वारुणो वा अग्निरुपनद्धो वि पा-
जसेति वि स्रंसयति सावितृप्रसूत
एवास्य विषूचीं वरुणमेनिं वि सृं-

एव । एनम् । प्रच्यावयतीति प्र—च्यावयति । ता-
सु । एव । एनम् । प्रतीति । स्थापयति । द्वा-
भ्याम् । उपावहरतीत्युप—अवहरति । प्रतिष्ठित्या
इति प्रति—स्थित्यै ॥ ३० ॥

अस्त्वनुष्टुबसि सादयत्यारूढः पत्वेति गर्भ-
मसौ मोदध्वं द्विचत्वारिंशच्च ॥ ५ ॥

[1]वारुणः । वै । अग्निः । उपनद्ध इत्युप—नद्धः ।
वीति । पाजसा । इति । वीति । स्रंसयति ।
सवितृप्रसूत इति सवितृ—प्रसूतः । एव । अस्य ।
विषूचीम् । वरुणमेनिमिति वरुण—मेनिम् । वीति ।

---

एनं प्रतिष्ठापयति अयमग्निर्युष्माकं उत्सं आगत इति । द्वाभ्या-
मित्यादि । गतम् ॥

इति पञ्चमे प्रथमे पञ्चमोनुवाकः.

---

[1]वारुणो वा इत्यादि ॥ विषूचीं विष्वग्गमनां वरुणमेनिं

जत्यप उपं सृजत्यापो वै शान्ता-
श्शान्ताभिरेवास्य शुचꣳ शमयति
तिसृभिरुपं सृजति त्रिवृद्वा अग्नि-
र्यावानेवाग्निस्तस्य शुचꣳ शमयति
मित्रस्सꣳसृज्यं पृथिवीमित्याह मि-
त्रो वै शिवो देवानां तेनैव ॥ ३१ ॥
एनꣳ सꣳ सृजति शान्त्यै यद्ग्राम्या-

सृजति । अपः । उपेति । सृजति । आपः । वै । शान्ताः । शान्ताभिः । एव । अस्य । शुचंम् । शमयति । तिसृभिरिति तिसृ-भिः । उपेति । सृजति । त्रिवृदिति त्रि-वृत् । वै । अग्निः । यावान् । एव । अग्निः । तस्य । शुचंम् । शमयति । मित्रः । सꣳसृज्येति सं-सृज्य । पृथिवीम् । इति । आह । मित्रः । वै । शिवः । देवानांम् । तेन । एव ॥ ३१ ॥ एनम् । समिति । सृजति । शान्त्यै । [2]यत् । ग्रा-

वरुणशरीरं विसृजति विश्लथयति अनेन विस्रंसनेन । अप उपसृजतीति । आपोहिष्ठादिभिः । त्रिवृद्वा इति । साहचर्यात्ताच्छब्द्यम् । त्रिरूपत्वात्त्रिवृत्त्वम् । मित्रस्संसृज्येति द्वाभ्यामर्मकपालादिभिरेनं संसृजतीति ॥

[2]यद्ग्राम्याणामित्यादि ॥ अर्मकपालानि पुरातनशून्याधिवासलो-

णां पात्रा॑णां क॒पालैः॒स्सꣳसृ॑जेद्ग्रा॒म्याणि॒ पात्रा॑णि शु॒चाऽर्प॑येदर्मक॒पालैः॒स्सꣳसृ॑जत्ये॒तानि॒ वा अ॑नुप॒जीव॒नी॒यानि॒ तान्ये॒व शु॒चाऽर्प॑यति॒ शर्क॑राभि॒स्सꣳसृ॑जति॒ धृत्या॒ अथो॒ शं॒त्वायाजलो॒मैस्सꣳसृ॑जत्ये॒षा वा अ॒ग्नेः प्रि॒या त॒नूर्यद॒जा प्रि॒ययै॒वैनं॒

म्याणा॑म् । पात्रा॑णाम् । क॒पालैः॑ । स॒मिति॑ सृ॒जेदिति॑ सं-सृ॒जेत् । ग्रा॒म्याणि॑ । पात्रा॑णि । शु॒चा । अ॒र्प॒येत् । अ॒र्म॒क॒पा॒लैरित्य॑र्म-क॒पा॒लैः । समिति॑ । सृ॒जति॒ । ए॒तानि॑ । वै । अ॒नु॒प॒जी॒व॒नी॒यानीत्य॑नुप-जी॒व॒नी॒यानि॑ । तानि॑ । ए॒व । शु॒चा । अ॒र्प॒यति॒ । शर्क॑राभिः । समिति॑ । सृ॒जति॒ । धृत्यै॑ । अथो॒ इति॑ । शं॒त्वायेति॑ शं-त्वाय॑ । [3]अ॒ज॒लो॒मैरित्य॑ज-लो॒मैः । समिति॑ । सृ॒जति॒ । ए॒षा । वै । अ॒ग्नेः । प्रि॒या । त॒नूः । यत् । अ॒जा । प्रि॒यया॑ । ए॒व । ए-

ष्ठानि । शर्कराः शुष्का मृत्परिणामाः । अथो अपि च शंत्वाय सुखस्थानाय ॥

[3]अजलोमैरिति ॥ ‘अच्प्रत्यन्ववपूर्वात्’ इति योगविभागादच् समासान्तः । अग्नेः प्रिया तनूरिति । ‘आग्नेयी वा एषा । यद-

तनुवा सꣳ सृजत्यथो तेजसा कृ-
ष्णाजिनस्य लोमभिस्सम् ॥ ३२ ॥
सृजति यज्ञो वै कृष्णाजिनं यज्ञे-
नैव यज्ञꣳसꣳसृजति रुद्रास्संभृत्यं पृ-
थिवीमित्याहैता वा एतं देवता अग्रे
समभरन्ताभिरेवैनꣳ सं भरति म-

नम् । तनुवा । समिति । सृजति । अथो इति ।
तेजसा । कृष्णाजिनस्येति कृष्ण-अजिनस्य ।
लोमभिरिति लोम-भिः । समिति ॥ ३२ ॥ सृज-
ति । [4]यज्ञः । वै । कृष्णाजिनमिति कृष्ण-अजि-
नम् । यज्ञेन । एव । यज्ञम् । समिति । सृजति ।
रुद्राः । संभृत्येति सं-भृत्य । पृथिवीम् । इति ।
आह । एताः । वै । एतम् । देवताः । अग्रे । स-
मिति । अभरन्न् । ताभिः । एव । एनम् । समिति ।

---

जा '* इति । अथो अपि च तेजसैवैनं संसृजति अजलोम-
व्याजेन ॥

[4]यज्ञो वै कृष्णाजिनमिति ॥ प्रधानाङ्गत्वात् । यज्ञेनैव यज्ञ-
जन्यमग्निं संसृजति । रुद्रास्संभृत्येति मृदं संक्षिपति । मखस्य शि-
रोसीति पिण्डकरणमन्त्रः । यज्ञस्य शिरस्थानीया उखा; प्रधान
त्वात्, आहवनीयधारणाच्च । अस्य मन्त्रस्य रुद्रास्संभृत्येति सं-

---

*ब्रा. ३-७-३.

खस्य शिरोसीत्याह यज्ञो वै मख-स्तस्यैतच्छिरो यदुखा तस्मादेवमाह यज्ञस्य पदे स्थ इत्याह यज्ञस्य ह्येते ॥ ३३ ॥ पदे अथो प्रतिष्ठित्यै प्रान्याभिर्यच्छत्यन्वन्यैर्मन्त्रयते मिथुनत्वाय त्र्युद्धिं करोति त्रय इमे

भरति । मखस्य । शिरः । असि । इति । आह । यज्ञः । वै । मखः । तस्य । एतत् । शिरः । यत् । उखा । तस्मात् । एवम् । आह । यज्ञस्य । पदे इति । स्थः । इति । आह । यज्ञस्य । हि । एते इति ॥ ३३ ॥ पदे इति । अथो इति । प्रतिष्ठित्या इति प्रति–स्थित्यै । [5]प्रेति । अन्याभिः । यच्छति । अन्विति । अन्यैः । मन्त्रयते । मिथुनत्वायेति मिथु-

---

भरणानन्तरभावित्वे संसृष्टामित्याद्यतिक्रमेणास्मिन्नाम्नानं समानजातीयासाहित्यलाभाय । यज्ञस्य पदे स्थ इति मृदमङ्गुष्ठाभ्यां उपनिगृह्णाति ॥

[5]प्रान्याभिरिति ॥ अन्याभिः ऋग्भिः प्रत्तान् पिण्डान् अन्यैः यजुर्भिरनुमन्त्रयत इति यावत् । 'संसृष्टां वसुभिः'* इत्याद्या ऋचः । 'वसवस्त्वा कृण्वन्तु'* इत्यादियजूंषि । अन्याभ्यां तृतीयम् ।

---

*सं. ४-१-५.

लोका एषां लोकानामाप्त्यै छन्दो-
भिः करोति वीर्यं वै छन्दाꣳसि वी-
र्येणैवैनां करोति यजुषा बिलं करोति
व्यावृत्त्या इयतीं करोति प्रजापतिना
यज्ञमुखेन संमितां द्विस्तनां करोति

न-त्वार्य । त्र्युद्धिमिति त्रि-उद्धिम् । करोति । त्र-
यः । इमे । लोकाः । एषाम् । लोकानाम् । आप्त्यै ।
छन्दोभिरिति छन्दः-भिः । करोति । वीर्यम् । वै ।
छन्दाꣳसि । वीर्येण । एव । एनाम् । करोति । य-
जुषा । बिलम् । करोति । व्यावृत्त्या इति वि-
आवृत्त्यै । [6]इयतीम् । करोति । प्रजापतिनेति प्र-
जा-पतिना । यज्ञमुखेनेति यज्ञ-मुखेन । संमि-

---

उद्धीयत इति उद्धिः उन्नतोऽवयवः । त्र्युद्धिं उखां करोति । त्रि-
त्वान्वयात् लोकत्रयावाप्त्यै भवति । छन्दोभिरिति, 'वसवस्त्वा
कृण्वन्तु'* इत्युख्यैः चतुर्भिः पिण्डानुमन्त्रणैः । वीर्यं वा इति ।
तद्धेतुत्वात्ताच्छब्द्यम् । यजुषेति । 'अदितिस्ते बिलं'* इति
छन्दोरहितेन ॥

[6]इयतीमिति ॥ केनचित्परिमाणेन परिमितमिति यावत् । प्रा-
देशमिति केचित् । इदं परिमाणमस्य 'किमिदंभ्यां वो घः' इति
वतुप् घकारश्च । 'इदं किमोरीश्की,' यस्येति लोपः । उदा-

---

*सं. ४-१-५.

द्यावापृथिव्योर्दोहाय चतुस्स्तनां करोति पशूनां दोहायाष्टास्तनां करोति छन्दसां दोहाय नवाश्रिमभि चरन्तः कुर्यात्त्रिवृतमेव वज्रꣳ संभृत्य

तामिति सं–मिताम् । द्विस्तनामिति द्वि–स्तनाम् । करोति । द्यावापृथिव्योरिति द्यावा–पृथिव्योः । दोहाय । चतुस्स्तनामिति चतुः–स्तनाम् । करोति । पशूनाम् । दोहाय । अष्टास्तनामित्यष्टा–स्तनाम् । करोति । छन्दसाम् । दोहाय । [7]नवाश्रिमिति नव–अश्रिम् । अभिचरन्त इत्यभि–चरन्तः । कुर्यात् । त्रिवृतमिति त्रि–वृतम् । एव । वज्रम् । संभृत्येति सं–भृत्य ।

---

त्तनिवृत्तिस्वरेण उदात्तः । प्रादेशमात्रमूर्ध्वप्रमाणेन अरत्निमात्रं तिर्यक्प्रमाणेन व्यायाममात्रं समन्तपरिमाणेन । प्रजापतिनेति । मुखं च प्रादेशमात्रं 'यज्ञमुखं वै प्रजापतिः' इति, तेनैव संमिता कृता भवति । द्विस्तनामिति । द्वौ स्तनावस्याः अश्रीणां रास्नायाश्च सन्धाविति । क्रोडादित्वात् ङीषभावः । 'सङ्ख्यायास्स्तनः' इत्युत्तरपदान्तोदात्तत्वम् । चतुस्स्तनामिति । 'विभाषा छन्दसि' इति अन्तोदात्ताभावे बहुव्रीहिस्वरः । एवमष्टास्तनामिति छान्दसमात्वम् । छन्दसामिति । गायत्र्यादीनि सादिच्छन्दांस्यष्टौ ॥

[7]नवाश्रिमिति ॥ अभिचरतोन्यत्र चतुरश्रि मष्टाश्रिं वा । त्रिवृत-

भ्रातृव्याय प्र हरति स्तृत्यै कृत्वाय
सा महीमुखामिति नि दधाति दे-
वतास्वेवैनां प्रतिष्ठापयति ॥ ३४ ॥
सप्तभिर्धूपयति सप्त वै शीर्षण्याः प्रा-

भ्रातृव्याय । प्रेति । हरति । स्तृत्यै । कृत्वाय । सा ।
महीम् । उखाम् । इति । नीति । दधाति । देवता-
सु । एव । एनाम् । प्रतीति । स्थापयति ॥ ३४ ॥
तेनैव लोमभिस्समेते अभिचरंत एकविंᳬ-
शतिश्च ॥ ६ ॥
[1]सप्तभिरिति सप्त-भिः । धूपयति । सप्त । वै ।
शीर्षण्याः । प्राणा इति प्र-अनाः । शिरः । एतत् ।

मिति । त्र्यवयवात्त्रिवृत्त्वम् । वज्रस्य स्तृत्यै छादनाय भवति । कृत्वायेति खरे उखानिधानमन्त्रः ॥

इति पञ्चमे प्रथमे षष्ठोनुवाकः.

---

[1]सप्तभिरिति ॥ 'वसवस्त्वा धूपयन्तु'* इत्यादिभिः अश्वशकेन दीप्तेन उखां धूपयति । झल्युपोत्तमस्य उदात्तत्वम् । सप्त वा इति । चक्षुषी श्रोत्रे नासिके आस्यमिति । 'ये च तद्धिते' इति शीर्षन्भावः । शिर इति प्राधान्यात् । शी-

*सं. ४-१-६.

णाश्शिरं एतद्यज्ञस्य यदुखा शीर्ष- न्नेव यज्ञस्य प्राणान्दधाति तस्मात्सप्त शीर्षन्प्राणा अंश्वशकेनं धूपयति प्रा- जापत्यो वा अश्वंस्सयोनित्वायादि- तिस्त्वेत्याहेयं वा अदितिरदित्यैवादि- त्यां खनत्यस्या अक्रूरंकाराय न हि

यज्ञस्य । यत् । उखा । शीर्षन्न् । एव । यज्ञस्य । प्राणानिति प्र-अनान् । दधाति । तस्मात् । सप्त । शीर्षन्न् । प्राणा इति प्र-अनाः । अश्वशकेनेत्यश्व-शकेन । धूपयति । प्राजापत्य इति प्राजा-पत्यः । वै । अश्वः । सयोनित्वायेति सयोनि-त्वाय । [2]अदितिः । त्वा । इति । आह । इयम् । वै । अदितिः । अदित्या । एव । अदित्याम् । खनति । अस्याः । अक्रूरंकारायेत्यक्रूरं-काराय । न । हि । स्वः ।

---

र्षन्निति । 'सुपां सुलुक्' इति ङेर्लुक् । 'शीर्षन् छन्दसि' इति शीर्षन्नादेशः । अश्वशकेनेत्यादि । शकं वालम् । शकृदित्येके । योनिः कारणं सर्वस्य प्रजापतिस्तेन सहितं धूपनं भवति ॥

[2]अदितिस्त्वेति ॥ अवटं खानयति पृथिव्या अक्रूरंकारणार्थं पृथिव्यैव पृथिवीं चखानेति न हि आत्मानं हिनस्ति । तेना-

स्वस्स्वꣳ हिनास्ति देवानां त्वा पत्नी-
रित्याह देवानाम् ॥ ३५ ॥ वा ए-
तां पत्नयोऽग्रेऽकुर्वन्ताभिरेवैनां दधा-
ति धिषणास्त्वेत्याह विद्या वै धिष-
णा विद्याभिरेवैनामभीन्धे ग्नास्त्वे-
त्याह छन्दाꣳसि वै ग्नाश्छन्दोभिरेवै-

स्वम् । हिनस्ति । देवानाम् । त्वा । पत्नीः । इति ।
आह । देवानाम् ॥ ३५ ॥ वै । एताम् । पत्नयः ।
अग्रे । अकुर्वन्न् । ताभिः । एव । एनाम् । दधाति ।
[3]धिषणाः । त्वा । इति । आह । विद्याः । वै ।
धिषणाः । विद्याभिः । एव । एनाम् । अभीति ।
इन्धे । ग्नाः । त्वा । इति । आह । छन्दाꣳसि ।
वै । ग्नाः । छन्दोभिरिति छन्दः-भिः । एव । ए-

ध्वर्योर्नापराधः । करोतेः छान्दसः खञ् । 'देवानां त्वा'* इत्यवटे उखां प्रवृणक्ति पत्नय इति । छान्दसं ङीपो ह्रस्वत्वम् ॥

[3]धिषणास्त्वेति पुरस्ताद्दीपयति ॥ धिषणा इति । 'धृषेर्धिष्च संज्ञायाम्' इति क्युप्रत्ययः । ग्नास्त्वेति । दक्षिणत उपोषति । वरूत्रय इति । तृचि ग्रसितस्कभितादौ निपात्यते । छान्दसं ङीपो ह्रस्वत्वम् । होत्रादयः सप्त होत्राः । जनयस्त्वेति उत्तरतः । पत्नीरिति । 'वा छन्दसि'

*सं. ४-१-६.

नाᳲ श्रपयति वरूत्रयस्त्वेत्याह हो-
त्रा वै वरूत्रयो होत्राभिरेवैनां पचति
जनयस्त्वेत्याह देवानां वै पत्नीः ॥
३६ ॥ जनयस्ताभिरेवैनां पचति ष-
ड्भिः पचति षड्वा ऋतवं ऋतुभिरेवै-
नां पचति द्विःपचन्त्वित्याह तस्मा-

नाम् । श्रपयति । वरूत्रयः । त्वा । इति । आह । होत्राः । वै । वरूत्रयः । होत्राभिः । एव । एनाम् । पचति । जनयः । त्वा । इति । आह । देवानाम् । वै । पत्नीः ॥ ३६ ॥ जनयः । ताभिः । एव । एनाम् । पचति । [4]षड्भिरिति षट्-भिः । पचति । षट् । वै । ऋतवः । ऋतुभिरित्यृतु-भिः । एव । एनाम् । पचति । द्विः । पचन्तु । इति । आह । तस्मात् । द्विः । संवत्सरस्येति सं-वत्सरस्य । स-

---

इति पूर्वसवर्णदीर्घत्वम् । अत्र वरूत्रय इति युष्मच्छब्दोपादानेन 'त्वा देवी'* इत्यादेः उभयत्र सम्बन्धं दर्शयति ॥

[4]षड्भिरिति ॥ 'अदितिस्त्वा'* इत्याद्यैः 'जनयस्त्वा'* इत्यन्तैः । उदकाभरणावटखननस्यापि यागार्थत्वात् । 'षट्त्रिचतुर्भ्यः' इति विभक्तेरुदात्तत्वम् । द्विरिति । पञ्चमषष्ठयोः । पचन्त्विति द्विराहेति

---

*सं. ४-१-६.

द्विस्संवत्सरस्यं सस्यं पंच्यते वारु-
ण्युखाऽभीद्धां मैत्रियोपैति शान्त्यै
देवस्त्वां सवितोद्वपत्वित्याह सवितृ-
प्रंसूत एवैनां ब्रह्मणा देवताभिरुद्व-
पत्यपंद्यमाना पृथिव्याशा दिश आ
पृण ॥ ३७ ॥ इत्याह तस्मांदग्नि-

स्यम् । पच्यते । [5]वारुणी । उखा । अभीद्धेत्यभि–इद्धा । मैत्रियां । उपेतिं । एति । शान्त्यै । देवः । त्वा । सविता । उदितिं । वपतु । इतिं । आह । सवितृप्रंसूत इतिं सवितृ–प्रसूतः । एव । एनाम् । ब्रह्मणां । देवताभिः । उदितिं । वपति । [6]अपंद्य-माना । पृथिवि । आशाः । दिशः । एतिं । पृण ॥

---

नानावाक्यत्वात् निघाताभावः, समानवाक्ये पदात्परस्य निघातादिविधानात् । पच्यत इति कर्मकर्तरि यक् ॥

[5]वारुणी वरुणिमन् वरणस्वभावान्मैत्र्येति । अभीद्धेति । इतरामुखां मित्रो भवति ['मित्रो भव' इति] परिगृह्णाति न 'वरुणः' इति । तेन वरुणगृहीतत्वाभावः । देवस्त्वेति मुख्याया उखायाः अङ्गानि अनूद्वपति ॥

[6]अपद्यमानेति ॥ पूर्वेणार्धर्चेन अशने. प्रतिष्ठापयति, उत्तरेण च श्रयति ॥

स्सर्वा दिशोऽनु वि भात्युत्तिष्ठ बृह-
ती भवोर्ध्वा तिष्ठ ध्रुवा त्वमित्याह
प्रतिष्ठित्या असुर्यं पात्रमनाच्छृण्ण-
माच्छृणत्ति देवत्राऽकरजक्षीरेणाच्छृ-
णत्ति परमं वा एतत्पयो यदजक्षीरं
परमेणैवैनां पयसाऽऽच्छृणत्ति य-

३७ ॥ इति । आह । तस्मात् । अग्निः । सर्वाः । दिशः । अनु । वीति । भाति । उदिति । तिष्ठ । बृहती । भव । ऊर्ध्वा । तिष्ठ । ध्रुवा । त्वम् । इति । आह । प्रतिष्ठित्या इति प्रति–स्थित्यै । [7]असुर्यम् । पात्रम् । अनाच्छृण्णमित्यना–छृण्णम् । एति । छृणत्ति । देवत्रेति देव–त्रा । अकः । अजक्षीरेणे- त्यज–क्षीरेण । एति । छृणत्ति । परमम् । वै । एतत् । पयः । यत् । अजक्षीरमित्यज–क्षीरम् । परमेण । एव । एनाम् । पयसा । एति । छृणत्ति ।

---

[7]असुर्यमिति ॥ अनाच्छृण्णं यदभीद्धं पात्रं पयःप्रभृत्यासेचनेन दीप्तं तदसुर्यं असुरस्य स्वाम्यात् । 'असुरस्य स्वम्' इति यत् । उ छृदिर् दीप्तिदीपनयोः, रौधादिकः । आछृणत्ति छागादिपयसा दीपयति उखाम् । देवत्राऽकरिति । देवाधीनमेव करोति । 'देये त्रा च' इति त्राप्रत्ययः । करोतेः छान्दसे

जुंषा व्यावृंत्त्यै छन्दोंभिराच्छृंणत्ति
छन्दोंभिर्वा एषा क्रियते छन्दोंभिरेव
छन्दाꣳस्याच्छृंणत्ति ॥ ३८ ॥
एकंविꣳशत्या माषैः पुरुषशीर्ष-

यजुंषा । व्यावृंत्त्या इतिं वि—आवृंत्त्यै । छन्दों-भिरिति छन्दंः—भिः । एतिं । छृणत्ति । छन्दोंभि-रिति छन्दंः—भिः । वै । एषा । क्रियते । छन्दोंभि-रिति छन्दंः—भिः । एव । छन्दाꣳसि । एतिं । छृणत्ति ॥ ३८ ॥

आह देवानां वै पत्नीः पृणैषा षट् ॥ ७ ॥

[1]एकंविꣳशत्येत्येकं—विꣳशत्या । माषैः । पुरुष-

लुङि 'मन्त्रे घस' इति च्लेर्लुक् । परमेणेति । परमं पयोऽमृतम् । यजुषेति । आच्छृणत्तीत्येव 'वसवस्त्वाऽऽ छृन्दन्तु'* इत्यादिकेन । छन्दोभिर्वा एषा क्रियत इति । 'वसवस्त्वा कृण्वन्तु'† इति ॥

इति पञ्चमे प्रथमे सप्तमोऽनुवाकः.

[1]एकविंशत्येत्यादि ॥ विंशन्माषानादाय‡ पुरुषशिरोभिप्राप्तुं गच्छति । मेधं यज्ञं नार्हति इत्यमेध्यः । दण्डादित्वाद्यः । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । अमेध्यानां माषाणामुपरि

*सं ४-१-६. †सं. ४-१-५. ‡विंशमाषादानाय.

मच्छैत्यमेध्या वै माषा अमेध्यं पुरुषशीर्षममेध्यैरेवास्यामेध्यं निरवदाय मेध्यं कृत्वाऽऽहरत्येकविंशतिर्भवन्त्येकविंशो वै पुरुषः पुरुषस्याप्त्यै व्यृद्धं वा एतत्प्राणैरमेध्यं

शीर्षमिति पुरुष–शीर्षम् । अच्छ । एति । अमेध्याः । वै । माषाः । अमेध्यम् । पुरुषशीर्षमिति पुरुष–शीर्षम् । अमेध्यैः । एव । अस्य । अमेध्यम् । निरवदायेति निः–अवदाय । मेध्यम् । कृत्वा । एति । हरति । एकविंशतिरित्येक–विंशतिः । भवन्ति । एकविंश इत्येक–विंशः । वै । पुरुषः । पुरुषस्य । आप्त्यै । [2]व्यृद्धमिति वि–ऋद्धम् । वै । एतत् । प्राणैरिति प्र–अनैः । अमे-

---

वापेन पुरुषशिरसो यदमेध्यत्वं तन्निरवदाय तस्मिन्निष्कृष्य पृथक् स्थापितं कृत्वा शिरो मेधार्हमेव कृत्वा आहरति । छान्दसो यत् । वृषादिर्वा द्रष्टव्यः, भवार्थे यत् । एकविंशो वै पुरुष इति । दशहस्त्या अङ्गुलयो दशपद्या आत्मैकविंश इति ॥

[2]व्यृद्धमिति ॥ 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । 'उदात्तस्वरितयोर्यणः' इति ऋकारः स्वर्यते । सप्तधा वितृण्णां छिद्रितां वल्मीकवपां वल्मीकमृदं शिरस्थाने प्रतिनिदधाति

यत्पुंरुषशीर्षꣳ संप्तधा वितृंण्णां व-
ल्मीकवपां प्रति नि दंधाति सप्त वै
शीर्षण्याः प्राणाः प्राणैरेवैनꣳसमंर्ध-
यति मेध्यत्वाय यावंन्तः॥३९॥ वै मृ-
त्युबंन्धवस्तेषां यम आधिपत्यं परीं-
याय यमगाथाभिः परि गायति य-

ध्यम् । यत् । पुरुषशीर्षमितिं पुरुष–शीर्षम् । सप्तधेतिं सप्त–धा । वितृंण्णामिति वि–तृंण्णाम् । वल्मीकवपामितिं वल्मीक–वपाम् । प्रतिं । नीतिं । दधाति । सप्त । वै । शीर्षण्याः । प्राणा इतिं प्र–अनाः । प्राणैरितिं प्र–अनैः । एव । एनत् । सम्-इतिं । अर्धयति । मेध्यत्वायेतिं मेध्य–त्वायं । [3]यावंन्तः ॥ ३९ ॥ वै । मृत्युबंन्धव इतिं मृत्यु–बन्धवः । तेषांम् । यमः । आधिपत्यमित्याधिं–पत्यम् । परीतिं । इयाय । यमगाथाभिरितिं यम–गाथाभिः । परीतिं । गायति । यमात् । एव । एनत् ।

---

प्रतिनिधिं करोति । शीर्षण्या इति । शिरसि भवाः चक्षुरादयः सप्त प्राणाः । 'शरीरावयवाच्च' इयि यत्, 'ये च तद्धिते' इति शीर्षादेशः ॥

[3]यावन्त इत्यादि ॥ मृत्युबन्धवः प्रोक्तः मृत्युरेषां बन्धुरिति।

मादेवैनंद्वृङ्क्ते तिसृभिः परि गायति
त्रय इमे लोका एभ्य एवैनंल्लोके-
भ्यो वृङ्क्ते तस्माद्गायते न देयं गाथा
हि तद्वृङ्क्तेऽग्निभ्यः पशूना लभते का-
मा वा अग्नयः कामानेवाव रुन्धे
यत्पशून्नालभेतानवरुद्धा अस्य ४०॥

वृङ्क्ते । तिसृभिरिति तिसृ-भिः । परीति । गायति ।
त्रयः । इमे । लोकाः । एभ्यः । एव । एनत् ।
लोकेभ्यः । वृङ्क्ते । तस्मात् । गायते । न । देयम् ।
गाथा । हि । तत् । वृङ्क्ते । [4]अग्निभ्य इत्यग्नि-भ्यः ।
पशून् । एति । लभते । कामाः । वै । अग्नयः ।
कामान् । एव । अवेति । रुन्धे । [5]यत् । पशून् ।

---

'योस्य कौष्ठ्य'* इत्यादिभिः तिसृभिः यमगाथाभिः परितो गायति । यमादेवैनद्वृङ्क्ते परिगृह्णाति । तिसृभिरित्यादि । गतम् । तस्मादिति । गानाद्दृष्टं न जायते । गाथा गृह्णाति गाथाधीनत्वात् ॥

[4]अग्निभ्य इति ॥ अग्निदेवत्याः पशवोऽजाश्ववृषभवृष्णिबस्ताः आलभ्याः । कामबहुत्वाद्बहुवचनम् । कामा वा इत्यादि । तत्साधनत्वात्ताच्छब्द्यम् । काम्यन्त इति कामाः पशुपुत्रादयः ॥

[5]यदित्यादि ॥ अत्र त्रयः पक्षाः—अनालम्भो वा पशूनां,

---

*आ. ६-५.

पशवंस्स्युर्यत्पर्यंग्निकृतानुथ्सृजेद्यज्ञ-
वेशसं कुर्याद्यथ्सꣳस्थापयेद्यातयां-
मानि शीर्षाणिं स्युर्यत्पशूनाल-
भंते तेनैव पशूनवं रुन्धे यत्पर्यंग्नि-
कृतानुथ्सृजतिं शीर्ष्णामयांतयाम-

न । आलभेतेत्यां—लभेत । अनंवरुद्धा इत्यनंव—रुद्धाः । अस्य ॥ ४० ॥ पशवंः । स्युः । यत् । पर्यंग्निकृतानिति पर्यंग्नि—कृतान् । उत्सृजेदित्युंत्—सृजेत् । यज्ञवेशसमितिं यज्ञ—वेशसम् । कुर्यात् । यत् । सꣳस्थापयेदितिं सं—स्थापयेत् । यातयांमानीतिं यात—यामानि । शीर्षाणिं । स्युः । यत् । पशून् । आलभंत इत्यां—लभंते । तेनं । एव । पशून् । अवेतिं । रुन्धे । यत् । पर्यंग्निकृतानिति पर्यंग्नि—कृतान् । उत्सृजतीत्युंत्—सृजतिं । शीर्ष्णाम् । अयांतयामत्वायेत्ययांतयाम—त्वाय । प्रा-

---

आलम्भोत्सर्गयोः । आलब्धानां पर्यग्निकरणानन्तरं उत्सर्गो वा, संस्थां वा गमयेत् । एतानि संस्थापनपक्षे यातयामानि गतरसानि शीर्षाणि स्युः । तस्मादालभेत पशून् । पर्यग्निकृतानामुत्सर्गे शिरसां अयातयामत्वम् । तत्र पर्यग्निकृतानां संज्ञप्तानां शिरांसि मृदा प्रलिप्य निधीयन्ते । प्राजापत्येनैव संस्थापयेत् पशून् । यज्ञो

त्वाय प्राजापत्येन सꣳ स्थापयति यज्ञो वै प्रजापतिर्यज्ञ एव यज्ञं प्रतिष्ठापयति प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एता आप्रीरपश्यत्ताभिर्वै स मुखतः॥४१ आत्मानमाऽप्रीणीत यदेता आप्रियो

जापत्येनेति प्राजा–पत्येन । समिति । स्थापयति । यज्ञः । वै । प्रजापतिरिति प्रजा–पतिः । यज्ञे । एव । यज्ञम् । प्रतीति । स्थापयति । [6]प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । सः । रिरिचानः । अमन्यत । सः । एताः । आप्रीरित्या–प्रीः । अपश्यत् । ताभिः । वै । सः । मुखतः ॥ ४१ ॥आत्मानम् । एति । अप्रीणीत् ।

---

वा इत्यादि । गतम् । ‘वायव्येन पशुना स्थापयेत् प्राजापत्यः पशुपुरोडाशो द्वादशकपालः’ इत्यपरम् ॥

[6]प्रजापतिरित्यादि ॥ प्रजासृष्ट्यनन्तरं किञ्चित् रिरिचानो रिक्तोहमस्मीत्यमन्यत प्रजापतिः । लिटः कानजादेशः । अथ सः आप्रीरपश्यत् । ताभिः आत्मानं मुखत आरम्भे एवाप्रीणयत् । तस्मादेताः प्रजापत्यात्मनो यज्ञस्य मुखत एव प्रीतिहेतवः । आप्रीणात्याभिरिति आप्रियः । करणे क्विप् । आप्रीरिति छान्दसं

भवन्ति यज्ञो वै प्रजापतिर्यज्ञमेवै-
ताभिर्मुखत आ प्रीणात्यपरिमित-
छन्दसो भवन्त्यपरिमितः प्रजाप-
तिः प्रजापतेराप्त्या ऊनातिरिक्ता

यत् । एताः । आप्रिय इत्या–प्रियः । भवन्ति । यज्ञः । वै । प्रजापतिरिति प्रजा–पतिः । यज्ञम् । एव । एताभिः । मुखतः । एति । प्रीणाति । अ-परिमितछन्दस इत्यपरिमित–छन्दसः । भवन्ति । अपरिमित इत्यपरि–मितः । प्रजापतिरिति प्रजा–पतिः । प्रजापतेरिति प्रजा–पतेः । आप्त्यै । [7]ऊ-नातिरिक्ता इत्यून–अतिरिक्ताः । मिथुनाः । प्रजा-

ह्रस्वत्वम् । ताश्च 'ऊर्ध्वा अस्य'* इत्याद्या द्वादश प्रधानाः याज्याः । अपरिमितछन्दस इति । अनेकप्रकारछन्दस इत्यर्थः । तथा हि—सर्वाश्चैताः त्रिपदाः । आसामाद्याः अन्ताश्च पादाः एकादशाक्षरा मध्ये पञ्चाक्षरः षडक्षरः सप्ताक्षरोऽष्टाक्षरश्च पादः । एका[अल्पा]क्षरः पिपीलिकामध्या इत्याचक्षते 'त्रिपादनिष्ठमध्या पिपीलिकामध्या'* इति । ता एता उष्णिहः । 'दैव्या होतारौ'† 'तिस्रो देवीः'† इति च गायत्र्यौ । विश्वजनादित्वादपरिमितशब्दस्य तुगभावः ॥

[7]ऊनातिरिक्ता इति ॥ एवमूनातिरिक्तस्वभावतया मिथुना द्वि-

*पि. सू. ३-५७. †सं. ४-१-८.

मिथुनाः प्रजात्यै लोमशं वै नामैत-
च्छन्दः प्रजापतेः पशवो लोमशाः
पशूनेवाव रुन्धे सर्वाणि वा एता
रूपाणि सर्वाणि रूपाण्यग्नौ चित्ये
क्रियन्ते तस्मादेता अग्नेश्चित्यस्य ॥
४२ ॥ भवन्त्येकविꣳशतिꣳसामि-

त्या इति प्र–जात्यै । लोमशम् । वै । नाम । एतत् । छन्दः । प्रजापतेरिति प्रजा–पतेः । पशवः । लोमशाः । पशून् । एव । अवेति । रुन्धे । सर्वाणि । वै । एताः । रूपाणि । सर्वाणि । रूपाणि । अग्नौ । चित्ये । क्रियन्ते । तस्मात् । एताः । अग्नेः । चित्यस्य ॥ ४२ ॥ भवन्ति । [8]एकविꣳशति-

प्रकारकत्वात् यस्मादेतस्मात्प्रजात्यै भवति । लोमशमिति । मध्ये सूक्ष्मत्वात् लोमवत्तनुतरमध्यमस्यास्तीति, लोमादित्वाच्छः । यथोक्तम्—'त्रिपादनिष्ठमध्या पिपीलिकामध्या '* इति । सर्वाणि वा इति । छन्दसां नानात्रूक्त्वात् सर्वाणि रूपाणि एता आश्रियः । सर्वाणि अग्नौ चित्ये चेतव्ये क्रियन्ते । तस्मादित्यादि । 'चित्याग्निचित्ये च ' इति निपात्यते । चित्याग्नेस्सम्बन्धिनि पशौ भवन्ति ॥

[8]एकविंशतिमिति ॥ 'समिधामाधाने षेण्यण् ' । अस्मिन्

*पि-सू. ३-५७.

धेनीरन्वाह रुग्वा एकविꣳशो रुचं-
मेव गच्छत्यथो प्रतिष्ठामेव प्रतिष्ठा
ह्येकविꣳशश्चतुर्विꣳशतिमन्वाह च-
तुर्विꣳशतिरर्धमासास्संवत्सरस्संव-

मित्येक-विꣳशतिम् । सामिधेनीरिति सं-इधे-
नीः । अन्विति । आह । रुक् । वै । एकविꣳश
इत्येक-विꣳशः । रुचम् । एव । गच्छति । अथो
इति । प्रतिष्ठामिति प्रति-स्थाम् । एव । प्रतिष्ठे-
ति प्रति-स्था । हि । एकविꣳश इत्येक-विꣳशः।
[9]चतुर्विꣳशतिमिति चतुः-विꣳशतिम् । अन्विति।
आह । चतुर्विꣳशतिरिति चतुः-विꣳशतिः । अ-
र्धमासा इत्यर्ध-मासाः । संवत्सर इति सं-वत्स-

---

पशौ एकविंशतिं ता अन्वाह । सङ्ख्याविशेषेण एकविंशतिस्तोमत्वात् तस्य च ऋक्प्रतिष्ठयोः हेतुत्वात्तयोर्लाभः । 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इति डः । अथो अपि च प्रतिष्ठामेवैति गच्छतीत्येव । काः पुनस्ताः उच्यन्ते—'प्रवो वाजाः'* इत्येकादश प्राकृत्यः, 'समास्त्वाग्ने'† इति दश ॥

[9]चतुर्विंशतिमिति ॥ तासां दशानामेवोद्धृत्य अवधार्य लोके ददाति । अथ 'पृथुपाजाः'‡ इति द्वौ धाय्ये ददाति । अथ

---

*ब्रा. ३-५-२. †सं. ४-१-७. ‡ब्रा. ३-६-१.

त्सरोऽग्निर्वैश्वानरस्साक्षादेव वैश्वा-
नरमव रुन्धे पराचीरन्वाह पराङिव
हि सुवर्गो लोकस्समास्त्वाऽग्न ऋ-
तवो वर्धयन्त्वित्याह समाभिरेवाग्निं
वर्धयति ॥ ४३ ॥ ऋतुभिस्संवत्सरं
विश्वा आ भाहि प्रदिशः पृथिव्या

रः । संवत्सर इति सं–वत्सरः । अग्निः । वैश्वान-
रः । साक्षादिति स–अक्षात् । एव । वैश्वानरम् ।
अवेति । रुन्धे । पराचीः । अन्विति । आह । प-
राङ् । इव । हि । सुवर्ग इति सुवः–गः । लोकः ।
[10]समाः । त्वा । अग्ने । ऋतवः । वर्धयन्तु । इति ।
आह । समाभिः । एव । अग्निम् । वर्धयति ॥४३॥
ऋतुभिरित्यृतु–भिः । संवत्सरमिति सं–वत्सरम् ।
विश्वाः । एति । भाहि । प्रदिश इति प्र–दिशः ।

‘ युक्ष्वा हि ’* इत्येतां ददाति । ज्योतिष्मतीं चेमामन्वाह । ता एताः पराच्योनूच्यमानाः चतुर्विंशतिः सम्पद्यन्ते । चतुर्विंशतिरर्धमासा इत्यादि । गतम् । पराचीरिति । अनावृत्ता एव । ‘ अनिगन्तोञ्चतौ ’ इति गतेः प्रकृतिस्वरत्वत् । पराङिति । न कदाचिदिह अनुवर्तते ॥

[10]अथ मन्त्रपदान्यनुसन्धत्ते—समास्त्वेत्यादि । गतम् ॥

*सं. ४-२-९.

इत्याह तस्मादग्निस्सर्वा दिशोऽनु वि
भाति प्रत्यौहतामश्विना मृत्युमस्मा-
दित्याह मृत्युमेवास्मादप नुदत्युद्वयं
तमसस्परीत्याह पाप्मा वै तमः पा-
प्मानमेवास्मादप हन्त्यगन्म ज्यो-
तिरुत्तममित्याहासौ वा आदित्यो
ज्योतिरुत्तममादित्यस्यैव सायुज्यं ग-
च्छति न संवत्सरस्तिष्ठति नास्य

पृथिव्याः । इति । आह । तस्मात् । अग्निः । सर्वाः । दिशः । अनु । वीति । भाति । प्रतीति । औहताम् । अश्विना । मृत्युम् । अस्मात् । इति । आह । मृत्युम् । एव । अस्मात् । अपेति । नुदति । उदिति । वयम् । तमसः । परीति । इति । आह । पाप्मा । वै । तमः । पाप्मानम् । एव । अस्मात् । अपेति । हन्ति । अगन्म । ज्योतिः । उत्तममित्युत्–तमम् । इति । आह । असौ । वै । आदित्यः । ज्योतिः । उत्तममित्युत्–तमम् । आदित्यस्य । एव । सायुज्यम् । गच्छति । [11]न । संवत्सर

[11]न संवत्सर इत्यादि ॥ यस्यैताश्चतुर्विंशतिसामिधेन्यः क्रियन्ते अस्य संवत्सरश्श्रीश्च न तिष्ठति उपकरोत्येव । ज्योतिष्मतीं

श्रीस्तिष्ठति यस्यैताः क्रियन्ते ज्यो-
तिष्मतीमुत्तमामन्वाह ज्योतिरेवा-
स्मा उपरिष्टाद्दधाति सुवर्गस्य लो-
कस्यानुख्यात्यै ॥ ४४ ॥

इति सं-वत्सरः । तिष्ठति । न । अस्य । श्रीः । तिष्ठति । यस्य । एताः । क्रियन्ते । ज्योतिष्मतीम् । उत्तमामित्युत्-तमाम् । अन्विति । आह । ज्योतिः । एव । अस्मै । उपरिष्टात् । दधाति । सुवर्गस्येति सुवः-गस्य । लोकस्य । अनुख्यात्या इत्यनु-ख्यात्यै ॥ ४४ ॥

यावन्तोस्य मुखतश्चित्यंस्य वर्धयत्यादित्यो-
ष्टाविंꣳशतिश्च ॥ ८ ॥

'उद्वयं तमसः'* इत्येतामन्वाह । उपरिष्टाद्धारणेन स्वर्गो लोकः प्रकाशितो भवति । अन्ये आहुः—यस्यैवमेताः क्रियन्ते अस्य संवत्सरश्श्रीश्च न तिष्ठति दीर्घकालौ न स्याताम् । ज्योतिष्मत्या उत्तमत्वे ज्योतिष्मान् भवति ।" संवत्सरेण श्रिया च द्युतिमान् भवति । स्वर्लोकश्चानुज्ञातो भवति । अत्र सामिधेनीनां प्रथमाम्नानेऽपि पश्वपेक्षितत्वात् पशुविधानानन्तरमाप्रीणां ब्राह्मणं, ततः सामिधेनीनां ब्राह्मणमिति ॥

इति पञ्चमे प्रथमे अष्टमोनुवाकः.

* ४-१-७.

षड्भिर्दीक्षयति षड्वा ऋतवं ऋतुभि-
रेवैनं दीक्षयति सप्तभिर्दीक्षयति स-
प्त छन्दाꣳसि छन्दोभिरेवैनं दीक्ष-
यति विश्वे देवस्य नेतुरित्यनुष्टुभो-
त्तमया जुहोति वाग्वा अनुष्टुप्तस्मा-

[1]षड्भिरिति षट्-भिः । दीक्षयति । षट् । वै । ऋतवः । ऋतुभिरित्यृतु-भिः । एव । एनम् । दीक्षयति । [2]सप्तभिरिति सप्त-भिः । दीक्षयति । सप्त। छन्दाꣳसि । छन्दोभिरिति छन्दः-भिः । एव । एनम् । दीक्षयति । विश्वे । देवस्य । नेतुः । इति । अनुष्टुभेत्यनु-स्तुभा । उत्तमयेत्युत्-तमया । जुहोति।वाक् । वै । अनुष्टुबित्यनु-स्तुप् । तस्मात्।

---

[1]षड्भिरित्यादि ॥ 'आकूतिमग्निं'* इत्यादिषड्भिराग्निकीभिः दीक्षाहुतिभिः यजमानं दीक्षयति । स्थिता एव 'आकूत्यै प्रयुजेऽग्नये '† इति पश्चादाग्निकी । 'षट्त्रिचतुर्भ्यो हलादिः' इति विभक्तेरुदात्तत्वम् ॥

[2]सप्तभिरिति ॥ 'विश्वे देवस्य '* इति सप्तमी । 'झल्युपोत्तमम् ' इत्युपोत्तमस्योदात्तत्वम् । उत्तमशब्द उञ्छादित्वादन्तोदात्तः ॥

---

*सं ४-१-९. †सं. १-२-२.

त्प्राणानां वागुत्तमैकस्मादक्षरादनाप्तं
प्रथमं पदं तस्माद्यद्वाचोऽनाप्तं त-
न्मनुष्या उप जीवन्ति पूर्णया जु-

प्राणानामिति प्र–अनानाम् । वाक् । उत्तमेत्युत्–
तमा । [3]एकस्मात् । अक्षरात् । अनाप्तम् । प्रथ-
मम् । पदम् । तस्मात् । यत् । वाचः । अनाप्तम् ।
तत् । मनुष्याः । उपेति । जीवन्ति । [4]पूर्णया ।
जुहोति । पूर्णः । इव । हि । प्रजापतिरिति प्रजा–

[3]एकस्मादित्यादि ॥ एकमक्षरमभिसमीक्ष्य अनाप्तं अपूर्णं प्रथमं पदं पादः अस्मिन् । तस्माद्वाचोऽनाप्तं अपरिपूर्णं तुर्यं मनुष्या उपजीवन्ति 'तुरीयं वाचो मनुष्या वदन्ति '* इति । ननु द्वितीयमपि सप्ताक्षरमेव, सत्यम्, इयादिपूरणेनाष्टाक्षरत्वं भविष्यतीति । अनेनैव न्यायेन प्रथममप्यष्टाक्षरं स्यात्, न, प्रयोजनाभावात् इयादिपूरणाप्रवृत्तेः । न हि न्यूनाक्षरत्वादेव इयादिना पूरयितव्यम् । अपि तु वृत्त्यनुरोधेन । तत्राष्टाक्षरस्य पादस्य वृत्तिलक्षणं पञ्चममक्षरं सप्तमं च लघु स्यात् षष्ठं गुर्विति । न च प्रथमे पादे इयादिना पूरितेऽपि अभीष्टवृत्तिलाभः, सत्यप्यस्मिन् सप्तमस्य गुरुत्वात् षष्ठस्य लघुत्वापत्तेः पञ्चमस्य प्रागेव लघुत्वात् । तस्मात् इयादिपूरणाप्रसङ्गात् प्रथममित्युक्तम् ॥

[4]पूर्णयेति ॥ यस्मादियं द्वितीयादिभिः पादैः पूर्णस्वभावा

*ब्रा. २-८-८.

होति पूर्ण इव हि प्रजापतिः ॥४५॥
प्रजापतेराप्त्यै न्यूनया जुहोति न्यू॰
नाद्धि प्रजापतिः प्रजा असृजत प्र-
जानाꣳ सृष्ट्यै यदर्चिषि प्र वृञ्ज्याद्भू-
तमव रुन्धीत यदङ्गारेषु भविष्यदङ्गा-

पतिः ॥ ४५ ॥ प्रजापतेरिति प्रजा–पतेः । आ-प्त्यै । न्यूनयेति नि–ऊनया । जुहोति । न्यूनादिति नि–ऊनात् । हि । प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । प्रजानामिति प्र–जानाम् । सृष्ट्यै । [5]यत् । अर्चिषि । प्रवृञ्ज्यादिति प्र–वृञ्ज्यात् । भूतम् । अवेति । रुन्धीत । यत् । अङ्गारेषु । भविष्यत् । अङ्गारेषु । प्रे-

तस्मादनया होमः पूरणस्य प्रजापतेराप्त्यै भवति । न्यूनयेति । नितरामूना न्यूना । यस्माच्चेयं प्रथमेन पादेन न्यूनस्वभावा तस्मादनयोर्होमः प्रजानां सृष्ट्यै भवभि । अतो न्यूनात् नितरामूनात् शान्तविकारात् उपादानात् प्रजापतिः प्रजा असृजत मृत्पिण्डादिव घटशरावादिविकारान् कुलालः । तस्मान्नचूनत्वं प्रजासृष्ट्यै भवति । 'हि च' इति निघाताभावः ॥

[5]यदित्यादि ॥ यद्युखामर्चिषि प्रवृञ्ज्यात् पातयेत् भूतमुत्पन्नमेव अवरुन्धीत लभेत । यदङ्गारेष्विति । प्रवृञ्ज्यादित्येव । भविष्य-

रेषु प्र वृणक्ति भविष्यदेवाव रुन्धे
भविष्याद्धि भूयो भूताद्वाभ्यां प्र वृं-
णक्ति द्विपाद्यजमानः प्रतिष्ठित्यै ब्र-
ह्मणा वा एषा यजुषा संभृता यदु-
खा सा यद्भिद्येतार्तिमार्च्छेत् ॥ ४६ ॥
यजमानो हन्येतास्य यज्ञो मित्रैता-

ति । वृणक्ति । भविष्यत् । एव । अवेति । रुन्धे । भविष्यत् । हि । भूयः । भूतात् । द्वाभ्याम् । प्रेति । वृणक्ति । द्विपादिति द्वि-पात् । यजमानः । प्रतिष्ठित्या इति प्रति-स्थित्यै । [6]ब्रह्मणा । वै । एषा । यजुषा । सम्भृतेति सं-भृता । यत् । उखा । सा । यत् । भिद्येत । आर्तिम् । एति । ऋच्छेत् ॥ ४६ ॥ यजमानः । हन्येत । अस्य । यज्ञः । मित्र । एताम् । उखाम् । तप । इति । आह । ब्रह्म । वै । मित्रः ।

---

दिति । अवरुन्धीतेत्येव । तस्मादङ्गारेष्वपि प्रवृणक्ति भविष्यदवरोधनाय । ननु भूतं नावरुध्यते तत्राह—भविष्यद्धि भूतात् बहुतरमतस्तत् भूयस्येति तमिति (?) । अपरिमितत्वात् भविष्यतो भूयस्त्वम् । द्वाभ्यामिति । 'मासुभित्था '* इत्याभ्याम् ॥

[6]ब्रह्मणेति ॥ 'वसवस्त्वा कृण्वन्तु '† इत्यनेन । 'मित्रैतामुखां

---

*सं. ४-१-९. †सं. ४-१-५

मुखां तपेत्याह ब्रह्म वै मित्रो ब्रह्म-
न्नेवैनां प्रतिष्ठापयति नार्तिमार्च्छति
यजमानो नास्य यज्ञो हन्यते यदि
भिद्येत तैरेव कपालैस्सꣳ सृजेथ्सैव
ततः प्रायश्चित्तिर्यो गतश्रीस्स्यान्म-
थित्वा तस्यावं दध्याद्भूतो वा एष

ब्रह्मन्न् । एव । एनाम् । प्रतीति । स्थापयति । न । आर्तिम् । एति । ऋच्छति । यजमानः । न । अस्य । यज्ञः । हन्यते । [7]यदि । भिद्येत । तैः । एव । कपालैः । समिति । सृजेत् । सा । एव । ततः । प्रायश्चित्तिः । [8]यः । गतश्रीरिति गत–श्रीः । स्यात् । मथित्वा । तस्य । अवेति । दध्यात् । भूतः । वै । एषः । सः ।

तप '* इति मित्रायोखा परिदीयते । प्रमितेस्त्रायत इति मित्रः ॥

[7]यदि भिद्येतेति ॥ पुनरुखाकरणे तैरेव कपालैः संसर्जनीयैः संसृजति । मृद्मर्मकपालैः । सैव प्रायश्चित्तिः ततः अपचारदोषात् । प्रायोऽपचारः तन्निवृत्त्यर्थं आज्ञातं प्रायश्चित्तिः । दासीभारादिः । व्यत्ययेन वा प्रयोगः ॥

[8]गतश्रीरिति ॥ शुश्रुवान् ग्रामणी राजन्यः च भूतः प्रभूतः । एषः गतश्रीः । स्वामेव महतीं देवतामुपैति मथित्वाऽवदानेन ॥

*सं. ४-१-९.

स स्वाम् ॥ ४७ ॥ देवतामुपैति यो भूतिकामस्स्याद्य उखायै संभवेत्स एव तस्यं स्यादतो ह्येष संभवत्येष वै स्वयंभूर्नाम भवत्येव यं कामयेत भ्रातृव्यमस्मै जनयेयमित्यन्यतस्तस्याहृत्यावं दध्यात्साक्षादे-

स्वाम् ॥ ४७ ॥ देवताम् । उपेति । एति । [9]यः । भूतिकाम इति भूति–कामः । स्यात् । यः । उखायै । सम्भवेदिति सं–भवेत् । सः । एव । तस्य । स्यात् । अतः । हि । एषः । सम्भवतीति सं–भवति । एषः । वै । स्वयम्भूरिति स्वयं–भूः । नाम । भवति । एव । [10]यम् । कामयेत । भ्रातृव्यम् । अस्मै । जनयेयम् । इति । अन्यतः । तस्य । आहृत्येत्यां–हृत्य । अवेति । दध्यात् । साक्षादिति स–अक्षात् । एव । अस्मै । भ्रातृव्यम् । जनयति । [11]अम्बरीषात् ।

[9]य इति ॥ भूतिकामस्य उखासम्भव एवाग्निः न मथित्वाऽवदातव्यः । संभवतीति । 'हि च' इति निघाताभावः ॥

[10]अन्यत इति ॥ उखाव्यतिरिक्तात् ॥

[11]अम्बरीषादिति ॥ आकूत्येत्येव । अम्बरीषं भर्जनं यत्र लौकिकः पाकः ॥

वास्मै भ्रातृव्यं जनयत्यम्बरीषा-
दन्नंकामस्यावं दध्यादम्बरीषे वा अ-
न्नं भ्रियते सयोन्येवान्नम् ॥४८॥ अवं
रुन्धे मुञ्जानवं दधात्यूर्ग्वै मुञ्जा ऊ-
र्जमेवास्मा अपि दधात्यग्निर्देवेभ्यो
निलांयत स क्रुमुकं प्राविंशत्क्रुमुक-
मवं दधाति यदेवास्य तत्र न्यक्तं त-
देवावं रुन्ध आज्येन सं यौत्येतद्वा

अन्नंकामस्येत्यन्नं–कामस्य । अवेति । दध्यात् । अम्बरीषे । वै । अन्नंम् । भ्रियते । सयोनीति स–योनि । एव । अन्नंम् ॥ ४८ ॥ अवेति । रुन्धे । [12]मुञ्जान् । अवेति । दधाति । ऊर्क् । वै । मुञ्जाः । ऊर्जम् । एव । अस्मै । अपीति । दधाति । [13]अग्निः । देवेभ्यः । निलांयत । सः । क्रुमुकम् । प्रेति । अवि-शत् । क्रुमुकम् । अवेति । दधाति । यत् । एव । अस्य । तत्रं । न्यंक्तमिति नि-अक्तम् । तत् । एव । अवेति । रुन्धे । [14]आज्येन । समिति । यौ-

[12]मुञ्जानित्यादि ॥ गतम् ॥

[13]क्रुमुकमिति ॥ दभ्रं काष्ठशकलं न्यक्तं निलीनं अग्ने रूपम् ॥

[14]आज्येनेत्यादि ॥ गतम् । तेजसेति । समर्धयतीत्येव ॥

अग्नेः प्रियं धाम यदाज्यं प्रियेणैवै-
नं धाम्ना समर्धयत्यथो तेजसा ॥
४९ ॥ वैकङ्कतीमा दधाति भा ए-
वावं रुन्धे शमीमयीमा दधाति शा-
न्त्यै सीद त्वं मातुरस्या उपस्थ
इति तिसृभिर्जातमुपं तिष्ठते त्रयं

ति । एतत् । वै । अग्नेः । प्रियम् । धाम । यत् । आज्यम् । प्रियेण । एव । एनम् । धाम्ना । समिति । अर्धयति । अथो इति । तेजसा ॥ ४९ ॥ [15]वैकङ्कतीम् । एति । दधाति । भाः । एव । अवेति । रुन्धे । शमीमयीमिति शमी–मयीम् । एति । दधाति । शान्त्यै । [16]सीद । त्वम् । मातुः । अस्याः । उपस्थ इत्युप–स्थे । इति । तिसृभिरिति तिसृ–भिः । जातम् । उपेति । तिष्ठते । त्रयः । इमे । लोकाः । एषु । एव । लोकेषु । आविदमित्यां–

[15]वैकङ्कतीमिति ॥ उख्ये जाते 'परस्या अधि'* इति वैकङ्कतीं समिधमादधाति । 'परमस्याः परावतः'* इति शमीमयीमादधाति । 'द्व्यचश्छन्दसि' इति मयट् ॥

[16]सीद त्वमित्यादि ॥ गतम् । आविदं ख्यातिं गच्छतीति,

*सं, ४-१-९.

इमे लोका एष्वेव लोकेष्वाविदं ग-
च्छत्यथो प्राणानेवात्मन्धत्ते ॥५०॥
न ह स्म वै पुराऽग्निरपरशुवृक्णं

विदंम् । गच्छति । अथो इति । प्राणानिति प्र-अनान् । एव । आत्मन्न् । धत्ते ॥ ५० ॥

प्रजापतिर् ऋच्छेत्स्वामेवान्नं तेजसा
चतुस्त्रिꣳशच्च ॥ ९ ॥

[1]न । ह । स्म । वै । पुरा । अग्निः । अपरशु-वृक्णमित्यपरशु-वृक्णम् । दहति । तत् । अस्मै ।

---

'वि भाहि'* इति लिङ्गात् । अथो अपि च प्राणानात्मनि धत्ते 'शिवो भूत्वा मह्यं'* इति लिङ्गात् । 'सुपां सुलुक्' इति सप्तम्या लुक् ॥

इति पञ्चमे प्रथमे नवमोनुवाकः.

---

[1]न ह स्मेति ॥ अपरशुना परशुव्यतिरिक्तेन वृक्णं छिन्नम् । निष्ठायां 'ओदितश्च' इति नत्वम् । तस्यासिद्धत्वात् 'खरि च' इति चर्त्वम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । तच्च अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अपरशुवृक्णं न ददाह अस्वादुत्वात् । 'लट् स्मे' इति लट् । तदपरशुवृक्णमपि

---

*सं. ४-१-९.

दहति तदस्मै प्रयोग एव ऋषिरस्व-
दयद्यदग्ने यानि कानि चेति समि-
धमा दधात्यपरशुवृक्णमेवास्मै स्व-
दयति सर्वमस्मै स्वदते य एवं वे-
दौदुम्बरीमा दधात्यूर्ग्वा उदुम्बर ऊ-
र्जमेवास्मा अपि दधाति प्रजापति-

प्रयोग इति प्र–योगः। एव। ऋषिः। अस्वदयत्। [2]यत्। अग्ने। यानि। कानि। च। इति। समिधमिति सं–इधम्। एति। दधाति। अपरशुवृक्णमित्यपरशु–वृक्णम्। एव। अस्मै। स्वदयति। सर्वम्। अस्मै। स्वदते। यः। एवम्। वेद। औदुम्बरीम्। एति। दधाति। ऊर्क्। वै। उदुम्बरः। ऊर्जम्। एव। अस्मै। अपीति। दधाति। [3]प्रजापतिरिति

---

अस्मै अग्नये। यं प्रयुज्य य एव ऋषिः मन्त्रोऽस्वदयत् स्वादूकृतवान्। ष्वद स्वद आस्वादने, चुरादिरदन्तः॥

[2]कः पुनरसौ प्रयोक्तव्यः ऋषिरित्याह—यदग्न इति॥ पञ्चभिर्मन्त्रैः पञ्चकृत्वः औदुम्बरीं सामिधमादधाति अपरशुवृकणां सर्वमप्यस्मै स्वदयाति। किंच य एवं वेद तस्मै च सर्वं स्वदते। औदुम्बरमिति। 'अनुदात्तादेश्च' इत्यञ्॥

[3]प्रजापतिरित्यादि॥ राक्षोघ्नं रक्षसां हन्तुः अग्नेः स्वं 'यद-

रग्निमसृजत तꣳ सृष्टꣳ रक्षाꣳसि ॥ ५१ ॥ अजिघाꣳसन्त्स एतद्राक्षोघ्नमपश्यत्तेन वै स रक्षाꣳस्यपाहत यद्राक्षोघ्नं भवत्यग्नेरेव तेन जातादक्षाꣳस्यप हन्त्याश्वत्थीमा दधात्यश्वत्थो वै वनस्पतीनाꣳ सपत्नसाहो विजित्यै वैकङ्कतीमा दधाति

प्रजा-पतिः । अग्निम् । असृजत । तम् । सृष्टम् । रक्षाꣳसि ॥ ५१ ॥ अजिघाꣳसन् । सः । एतत् । राक्षोघ्नमिति राक्षः-घ्नम् । अपश्यत् । तेन । वै । सः । रक्षाꣳसि । अपेति । अहत । यत् । राक्षोघ्नमिति राक्षः-घ्नम् । भवति । अग्नेः । एव । तेन । जातात् । रक्षाꣳसि । अपेति । हन्ति । [4]आश्वत्थीम् । एति । दधाति । अश्वत्थः । वै । वनस्प-

ग्ने यानि '* इत्यादिकं सूक्तम् । 'षपूर्वहन्' इत्यल्लोपः । आश्वत्थिमिति । तिस्रो नानावृक्षीया आश्वत्थीं वैकङ्कतीं शमीमयीं इति ॥

[4]समिधमादधाति—'दंष्ट्राभ्याम्'* इति । तिसृभिः सपत्नसाहः सपत्नानां अभिभविता । अश्वत्थशब्दात् 'अनुदात्तादेश्च' इत्यञ् । इतरौ व्याख्यातौ । एवं प्रथमया शत्रूणामभिभवः । द्वितीयया तेजस्वी

*सं. ४-१-१०.

भा एवावं रुन्धे शमीमयीमा दंधा-
ति शान्त्यै सꣳशितं मे ब्रह्मोदेषां
बाहू अंतिरमित्युंत्तमे औदुंम्बरी ॥
५२ ॥ वाचयति ब्रह्मंणैव क्षत्रꣳ
सꣳ श्यंति क्षत्रेण ब्रह्म तस्मांद्रा-

तींनाम् । सपत्नसाह इतिं सपत्न–साहः । विजिं-
त्या इति वि–जित्यै । वैकंङ्कतीम् । एतिं । दधाति ।
भाः । एव । अवेति । रुन्धे । शमीमयीमितिं शमी–
मयींम् । एतिं । दधाति । शान्त्यै । [5]सꣳशितमिति सं-
शितम् । मे । ब्रह्मं । उदितिं । एषाम् । बाहू इतिं । अति-
रम् । इतिं । उत्तमे इत्युंत्–तमे । औदुंम्बरी इतिं ॥ ५२
वाचयति । [6]ब्रह्मंणा । एव । क्षत्रम् । समितिं ।
श्यति । क्षत्रेणं । ब्रह्मं । तस्मांत् । ब्राह्मणः । रा-

भवति । तृतीयया शान्तिः सुखं भवति । तस्मादग्निचितः अग्निवि-
दश्च पापं न कीर्तयेत् न चानिष्टं चिन्तयेत् इति ॥

[5]संशितमित्यादि ॥ एते उत्तमे सूक्तस्य ऋचौ यजमानं वाच-
यति, किं कुर्वन्—औदुम्बरीसमिधौ तूष्णीमादधानः । पूर्ववदङि ‘सु-
पां सुलुक्’ इति द्वितीयाद्विवचनस्य लुक् । ‘वा छन्दसि’
इति वा पूर्वसवर्णः । उत्तमशब्दः उञ्छादिः अन्तोदात्तः ॥

[6]ब्रह्मणैवेति ॥ ब्रह्मक्षत्रशब्दौ जातिवचनौ । संश्यति तीक्ष्णं
करोति । क्षत्रेण ब्रह्म संश्यतीत्येव । तस्मादित्यादि । राज-

ह्मणो राजन्यवानत्यन्यं ब्राह्मणं
तस्माद्राजन्यो ब्राह्मणवानत्यन्य॒ꣳ
राजन्यं मृत्युर्वा एष यदग्निरमृतꣳ
हिरण्यꣳ रुक्ममन्तरं प्रति मुञ्चतेऽमृ-
तमेव मृत्योरन्तर्धत्त एकविꣳशतिनि-

जन्यवानिति राजन्य-वान् । अतीति । अन्यम् ।
ब्राह्मणम् । तस्मात् । राजन्यः । ब्राह्मणवानिति
ब्राह्मण-वान् । अतीति । अन्यम् । राजन्यम् ।
[7]मृत्युः । वै । एषः । यत् । अग्निः । अमृतम् ।
हिरण्यम् । रुक्मम् । अन्तरम् । प्रतीति । मुञ्चते ।
अमृतम् । एव । मृत्योः । अन्तः । धत्ते । [8]एक-
विꣳशति-निर्बाध इत्येकविꣳशति-निर्बाधः । भव-

न्येन सहायेन तद्वान् ब्राह्मणोऽन्यं राजन्यं ब्राह्मणमतिक्रामाति क्रियाबलेन । ससाधनक्रिया उपसर्गेणोच्यते । एतेन राजन्यो व्याख्यातः ॥

[7]मृत्युर्वा इत्यादि ॥ दाहकत्वान्मृत्युरिवाग्निः । अमृतत्वहेतुर्हिरण्यम् । तस्मात् सूत्रोतं रुक्ममन्तरं निर्बाधं प्रतिमुञ्चते यजमानः । अमृतमेव कृत्वा मृत्योरन्तर्हितं करोति वृत्राहको हिरण्यजितोरो*रुक्मम् ॥

[8]एकविंशतिनिर्बाध इति ॥ निर्बाधः निष्फलानि । पञ्च-

*मित्रहातो हिरण्यचितो.

बाधो भवत्येकविंशतिर्वै देवलोका द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्यः ॥५३॥ एकविंश एतावन्तो वै देवलोकास्तेभ्य एव भ्रातृव्यमन्तरेति निर्बाधैर्वै देवा असुरान्निर्बाधेऽकुर्वत तन्निर्बाधानां निर्बाधत्वं निर्बाधी भवति भ्रातृव्यानेव

ति । एकविंशतिरित्येक–विंशतिः । वै । देवलोका इति देव–लोकाः । द्वादश । मासाः । पञ्च । ऋतवः । त्रयः । इमे । लोकाः । असौ । आदित्यः ॥ ५३ ॥ एकविंश इत्येक–विंशः । एतावन्तः । वै । देवलोका इति देव–लोकाः । तेभ्यः । एव । भ्रातृव्यम् । अन्तः । एति । निर्बाधैरिति निः–बाधैः । वै । देवाः । असुरान् । निर्बाध इति निः–बाधे । अकुर्वत । तत् । निर्बाधानामिति निः–बाधानाम् । निर्बाधत्वमिति निर्बाध–त्वम् । निर्बाधीति निः–बाधी । भवति । भ्रातृव्यान् । एव । निर्बाध इति निः–बाधे । कुरुते ।

---

र्तवः । हेमन्तशिशिरयोरेकत्वात् । निश्चयेन बाध्यते भ्रातृव्यः एभिरिति निर्बाधः ॥

निर्बाधे कुरुते सावित्रिया प्रतिं
मुञ्चते प्रसूत्यै नक्तोषासेत्युत्तरयाऽ-
होरात्राभ्यामेवैनमुद्यच्छते देवा
अग्निं धारयन्द्रविणोदा इत्याह प्रा-
णा वै देवा द्रविणोदा अहोरात्रा-
भ्यामेवैनमुद्यत्य ॥ ५४ ॥ प्राणै-

[9]सावित्रिया । प्रतीति । मुञ्चते । प्रसूत्या इति प्र-सूत्यै । नक्तोषासा । इति । उत्तरयेत्युत्-तरया । अहोरात्राभ्यामित्यहः-रात्राभ्याम् । एव । एनम् । उदिति । यच्छते । [10]देवाः । अग्निम् । धारयन् । द्रविणोदा इति द्रविणः-दाः । इति । आह । प्राणा इति प्र-अनाः । वै । देवाः । द्रविणोदा इति द्रविणः-दाः । अहोरात्राभ्यामित्यहः-रात्रा-

[9]सावित्रियेति ॥ 'विश्वा रूपाणि'* इत्यनया शिक्यपाशं प्रतिमुञ्चते तस्यानुज्ञयेति । नक्तोषासेति । इयमपि शिक्यपाश-प्रतिमोचनी । रुक्मपाशप्रतिमोचनी इत्येके । उत्तरयेति । प्रति-मुञ्चतीत्येव । अहोरात्राभ्यामेवैनमुद्यच्छते उग्राजानिदेवैर्धारितम् । 'समुदाङ्भ्यः' इत्यात्मनेपदम् ॥

[10]यदुक्तं प्राणैर्दाधारेति तदाह—देवा अग्निमित्यादि ॥ द्रवि-णोदा द्रविणस्य दाता । छान्दसः सकारोपजनः । शब्दान्तरं

*सं. ४-१-१०.

दाधारासीनः प्रति मुञ्चते तस्मा-
दासीनाः प्रजाः प्र जायन्ते कृष्णा-
जिनमुत्तरं तेजो वै हिरण्यं ब्रह्म
कृष्णाजिनं तेजसा चैवैनं ब्रह्मणा
चोभयतः परि गृह्णाति षडुद्यामः२

भ्याम् । एव । एनम् । उद्यत्येत्युत्–यत्य ॥५४॥
प्राणैरिति प्र–अनैः । दाधार । [11]आसीनः । प्रतीति । मुञ्चते । तस्मात् । आसीनाः । प्रजा इति प्र–जाः । प्रेति । जायन्ते । कृष्णाजिनमिति कृष्ण–अजिनम् । उत्तरमित्युत्–तरम् । तेजः । वै । हिरण्यम् । ब्रह्म । कृष्णाजिनमिति कृष्ण–अजिनम् । तेजसा । च । एव । एनम् । ब्रह्मणा । च । उभयतः । परीति । गृह्णाति । [12]षडुद्याममिति

वा सकारान्तं द्रष्टव्यम् । दाधारेति छान्दसो लिट् । 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् ॥

[11]आसीन इति ॥ रुक्मं शिक्यं च पाशं च । उत्तरमिति । रुक्मशिक्यपाशयोरुपरि उत्तरलोमेत्येके । तेजः तेजोहेतुः । ब्रह्मेति । ब्रह्मवर्चसहेतुः । उभयत इति । अन्तः बहिश्च । आद्यादिभ्यस्तसिः सश्चेति तसि लिति प्रत्ययात् पूर्वस्योदात्तत्वम् ॥

[12]षडुद्याममिति ॥ उद्यामाः शिक्यपादाः । संवत्सरेणेति । उद्यछत इत्येव । मौञ्जमित्यादि । गतम् ॥

शिक्यं भवति षड्वा ऋतवं ऋतुभिं-
रेवैनमुद्यंच्छते यद्द्वादंशोद्यामः संव-
थ्सरेणैव मौञ्जं भंवत्यूर्ग्वै मुञ्जां ऊ-
र्जैवैनः समंर्धयति सुपर्णोऽसि
गरुत्मानित्यवेंक्षते रूपमेवास्यैतन्मं-
हिमानं व्याचंष्टे दिवं गच्छ सुवंः

षट्–उद्यामम् । शिक्यंम् । भवति । षट् । वै । ऋतवंः । ऋतुभिरित्यृतु–भिः । एव । एनम् । उदिति । यच्छते । यत् । द्वादंशोद्याममिति द्वादंश–उद्यामम् । संवत्सरेणेति सं–वत्सरेणं । एव । मौञ्जम् । भवति । ऊर्क् । वै । मुञ्जाः । ऊर्जा । एव । एनम् । समिति । अर्धयति । [13]सुपर्ण इति सु–पर्णः । असि । गरुत्मान् । इति । अवेति । ईक्षते । रूपम् । एव । अस्य । एतत् । महिमानम् । व्याचंष्ट इति वि–आचंष्टे । [14]दिवम् । गच्छ । सुवंः । पत । इति । आह । सुवर्गमिति

[13] ‘ सुपर्णोसि गरुत्मान् ’ इत्यवेक्षते ॥*

[14] ‘ दिवं गच्छ सुवः पत ’* इत्येनं उद्गृह्णाति ॥

इति पञ्चमे प्रथमे दशमोनुवाकः.

*सं. ४-१-१०.

प्रेतेत्याह सुवर्गमेवैनं लोकं गमयति ॥ ५५ ॥

समिद्धो अञ्जन्कृदरं मतीनां घृतमग्ने मधुमत्पिन्वमानः। वाजी वहन्वा-

सुवः–गम् । एव । एनम् । लोकम् । गमयति ॥५५॥

रक्षाꣳस्यौदुम्बरी आदित्य उद्यत्य
सं चतुर्विꣳशतिश्च ॥ १० ॥

[1]समिद्ध इति सं–इद्धः । अञ्जन् । कृदरम् । मतीनाम् । घृतम् । अग्ने । मधुमदिति मधु–मत् ।

---

[1]अथ अश्वमेधे अश्वस्याप्रियः प्रयाजानां याज्याः एकादश—समिद्धो अञ्जन्निति ॥ त्रैष्टुभः सर्वोनुवाकः । अग्निकाण्डमध्ये वैश्वदेवं काण्डम् । तत्र प्रथमा—समिद्धः सन्दीप्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अञ्जन् प्रकाशयन् । अञ्जू व्यक्तिश्लक्षणगतिषु । कृदरं आवपनं कुसूलादिकं तत्स्थानीयं मतीनां ज्ञानानां चित्तं प्रकाशताम् । तादात्म्यात्ताच्छब्द्यम् । यद्वा—मतीनां मननीयानां हविषां कृदरं कृदरस्थानीयं आत्मीयं रूपं प्रकाशयन् । घृतं आज्यं मधुमत् मधुररसवत् पिन्वमानः पिन्वन् पिबन् । पिब सेचने इदानीं पानकर्मा । यद्वा—घृतमुदकं पिन्वमानः सिञ्चन् यागद्वारेण वर्षन् । हे अग्ने जातवेदः जातानां वेदितः । 'गतिकारकयोरपि' इत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च । बहुव्रीहिर्वा—हे जातधन ! वाजी बलवान् वेगवान्वा अश्वतुल्यो वा ।

जिनं जातवेदो देवानां वक्षि प्रिय-
मा सधस्थम्। घृतेनाञ्जन्थ्सं पथो
देवयानान्प्र जानन्वाज्यप्येतु देवान्।
अनु त्वा सप्ते प्रदिशस्सचन्ताꣳ स्व-

पिन्वंमानः। वाजी। वहन्न्। वाजिनम्। जातवेद इति जात-वेदः। देवानाम्। वक्षि। प्रियम्। एति। सधस्थमिति सध-स्थम्। [2]घृतेन। अञ्जन्। समिति। पथः। देवयानानिति देव-यानान्। प्रजानन्निति प्र-जानन्। वाजी। अपीति। एतु। देवान्। अन्विति। त्वा। सप्ते। प्रदिश इति प्र-दिशः। सचन्ताम्। स्वधामिति स्व-धाम्। अ-

---

वाजिनं इमं अश्वं प्रियं प्रीतिहेतुं अवहन्। देवानां सधस्थं सह-स्थानं यत्र देवाः सहासते तत् स्थानं आवक्षि आवह प्रापय तेषां भोजनार्थम्। 'सुपि स्थः' इति कः। 'सधमाधस्थयोः' इति सधादेशः। वहेर्लेटि शपो लुक् ॥

[2]अथ द्वितीया—घृतेनेति ॥ घृतेन हुतेन हेतुना अयं वाजी अश्वः देवयानान् देवा यैर्गच्छन्ति तान् पथः मार्गान् अपितृयाणान् अञ्जन् प्रकाशयन् समेतु सङ्गच्छतु। एत्विति वक्ष्यमाण-मन्त्रापि सम्बध्यते। यद्वा—देवयानान् पथः समञ्जन् सम्यक् प्रकाशयन् जानन् प्रजानन् देवानामप्येतु देवैरेकीभवतु। हे सप्ते अश्व! त्वं प्रदिशः प्रधाना दिशः अन्याश्च अनुसचन्तां अनुसेवन्तां आनु-

धामुस्मै यजमानाय धेहि । ईड्यश्चा-
सि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यं-
श्च सप्ते । अग्निष्ट्वा ॥५६॥ देवैर्वसु-
भिस्सजोषाः प्रीतं वह्निं वहतु जा-
तवेदाः । स्तीर्णं बुर्हिस्सुष्टरीमा जु-

स्मै । यजमानाय । धेहि । [3]ईड्यः । च । असि । वन्द्यः ।
च । वाजिन् । आशुः । च । असि । मेध्यः । च ।
सप्ते । अग्निः । त्वा ॥५६॥ देवैः । वसुभिरिति वसु-
भिः । सजोषा इति स-जोषाः । प्रीतम् । वह्निम् ।
वहतु । जातवेदा इति जात-वेदाः । [4]स्तीर्णम् ।

---

कूल्यं त्वयि भजन्ताम् । त्वमप्यस्मै यजमानाय स्वधां अन्नं धेहि देहि ॥

[3]अथ तृतीया—ईड्य इति ॥ हे वाजिन्! अन्नहेतो सप्ते सर्पक अश्व ईड्यः स्तुत्यः असि । त्वं वन्द्यः नमस्कार्यश्चासि । 'ईडवन्द-नृशंस' इत्याद्युदात्तत्वम् । 'चवायोगे प्रथमा' इत्याख्यातं न निहन्यते । आशुश्च शीघ्रश्चासि । पूर्ववन्निघाताभावः । मेध्यो मेधार्हश्चासि । अयमग्निः वसुभिः देवैः सजोषाः समानप्रीतिः । 'समानस्य छन्दसि' इति सभावः । जातवेदाः जातानां वेदि-ता त्वं प्रीतं तृप्तं वह्निं वोढारं वहतु प्रापयतु देवसका-शम् । 'युष्मत्तत्त' इत्यादिना संहितायां षत्वम् ॥

[4]चतुर्थी—स्तीर्णमिति ॥ स्तीर्णं बर्हिः । गतम् । सुष्टरीम

षाणोरु पृथु प्रथमानं पृथिव्याम् ।
देवेभिर्युक्तमदितिस्सजोषास्स्योनं
कृण्वाना सुविते दधातु । एता उं

बर्हिः । सुष्टरीमेति सु–स्तरीम । जुषाणा । उरु ।
पृथु । प्रथमानम् । पृथिव्याम् । देवेभिः । युक्तम् ।
अदितिः । सजोषा इति स–जोषाः । स्योनम् ।
कृण्वाना । सुविते । दधातु । [5]एताः । उ । वः ।
सुभगा इति सु–भगाः । विश्वरूपा इति विश्व–

---

शोभनस्तरणम् । स्तृणातेरौणादिक इमनिच्, वर्णव्यत्ययेन दीर्घत्वम् । बहुव्रीहौ सुषामादित्वात् षत्वम् । 'सोर्मनसी' इत्युत्तरपदाद्युदात्तत्वम् । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । उरु महत् पृथु विस्तीर्णं भूयोपि पृथिव्यां प्रथमानं यावदियं पृथिवी विस्तीर्णा मही तावत्प्रथमानं देवेभिः देवैः युक्तं जुषाणा जुषमाणा सेवमाना । छान्दसः शपो लुक्, व्यत्ययेन सार्वधातुकानुदात्तत्वाभावः । सजोषाः समानप्रीतिः । देवैः । अदितिः देवमाता स्योनं सुखस्थानं कुर्वाणा सुविते सुगते शोभना गतिर्यत्र तत्र स्थाने इमं अश्वं दधातु स्थापयतु । 'तन्वादीनां छन्दसि बहुळम्' इति सोरुवङादेशः । विकृतत्वादनवग्रहः । 'नञ्सुभ्यां' इत्युत्तरपदान्तोदात्तत्वम् ॥

[5]पञ्चमी—एता इति ॥ उ इत्यवधारणे । एता एव सत्यः एतादृश्य एव सर्वाः कीदृश्यः सुभगाः शोभनश्रीकाः । आद्यु-

वस्सुभगा विश्वरूपा वि पक्षोभिश्श्र-
यमाणा उदातैः। ऋष्वास्सतीः कव-
षश्शुम्भमाना द्वारो देवीस्सुप्रायणा
भवन्तु। अन्तरा मित्रावरुणा चरन्ती

रूपाः । वीति । पक्षोभिरिति पक्षः–भिः । श्रयमाणाः । उदिति । आतैः । ऋष्वाः । सतीः । कवषः । शुम्भमानाः । द्वारः । देवीः । सुप्रायणा इति सु–प्रायणाः । भवन्तु । [6]अन्तरा । मित्रावरुणेति मित्रा–वरुणा । चरन्ती इति ।

---

दात्तात् ‘ द्व्यचश्छन्दसि ’ इत्युत्तरपदाद्युदात्तत्वम् । विश्वरूपाः नानारूपाः । ‘ बहुव्रीहौ विश्वं संज्ञायाम् ’ इति पूर्वपदान्तोदात्तत्वम् । पक्षोभिः पक्षस्थानीयैः आतैः दिग्भिः स [ता] ह्युच्छ्रियमाणा ऋष्वा महत्यः गतागतपर्याप्ताः । ऋष गतौ, औणादिको वप्रत्ययः । सतीः सत्यः एवंगुणा एव सर्वदा भवन्त्यः । ‘ वा छन्दसि ’ इति पूर्वसवर्णदीर्घत्वम् । कवषः कवाटवत्यः तेन शुम्भमानाः । ‘ सुपां सुलुक् ’ इति स्वादेशः । यद्वा—‘ तदाचष्टे ’ इति णिजन्तात् क्विप् । कवषः कवाटवत्यः ईदृश्यो द्वारो देव्यः सुप्रायणाः सुखेन प्राप्याः युष्माकं हे ऋत्विग्यजमानाः! भवन्तु । ‘ छन्दसि गत्यर्थेभ्यः ’ इति विच् ॥

[6]अथ षष्ठी—अन्तरेति ॥ मित्रावरुणदेवत्वादेवाहोरात्रयोस्ताच्छब्द्यम् । ‘ अन्तरान्तरेण ’ इति द्वितीया । मित्रावरुणयोः

मुखँ यज्ञानांमभि सँविदाने। उषासां वाम् ॥ ५७ ॥ सुहिरण्ये सुंशिल्पे ऋतस्य योनांविह सांदयामि। प्रथ-

मुखंम् । यज्ञानांम् । अभीतिं । संविदाने इतिं सं-विदाने । उषासां । वाम् ॥ ५७ ॥ सुहि-रण्ये इतिं सु-हिरण्ये । सुशिल्पे इतिं सु-शिल्पे। ऋतस्यं । योनौं । इह । सादयामि । [7]प्रथमा । वाम् । सरथिनेतिं स-रथिनां । सुवर्णेति सु-व-

अहोरात्रयोर्मध्ये । 'सुपां सुलुक्' इत्याकारः । 'देवताद्वन्द्वे च' इत्यानङ् । चरन्ती चरन्त्यौ । पूर्ववत् सवर्णदीर्घत्वम् । यज्ञानां मुखं प्रारम्भमभिलक्ष्य संविदाने ऐकमत्यं गते । 'समोगमृच्छि' इत्यात्मने पदम् । सुहिरण्ये शोभनं हितत्वं रमणीयत्वं च ययोः सुशिल्पे शोभननैपुण्ये । उभयत्र 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । ईदृश्यौ उषासा उषसौ । पूर्ववदाकारः, छान्दसो वर्णविकारः । पूर्वस्य उषसोवस्थाया द्वयोरहोरत्रयोरपि विद्यमानत्वात् द्वित्वम् । ऋतस्य यज्ञस्य योनौ इह अश्वे सादयामि स्थापयामि । निमित्तात्सप्तमी, अश्वनिमित्तमद्यप्रवर्तयामि । वां युवयोर्यज्ञस्य योनौ हे दम्पती! । यद्वा—होतारावेवोच्येते उषासेति, मित्रावरुणौ देवते अन्तराप्रवर्तमानौ अहोरात्रौ यज्ञयोगार्थं स्थापयामीति । समानमन्यत् ॥

[7]सप्तमी—प्रथमा वामिति ॥ हे दम्पती! युवां युवयोरर्थाय ईदृशौ देवौ होतारौ अपिप्रयं प्रीणयामि । प्रीञ् तर्पणे,

मा वा॑ꣳ सर॒थिना॑ सु॒वर्णा॑ दे॒वौ प॒-
श्यन्ता॒ भुव॑नानि॒ विश्वा॑। अपि॑प्रथं॒
चोद॑ना वां॒ मिमा॑ना॒ होता॑रा॒ ज्योति॑ः
प्र॒दिशा॑ दि॒शन्ता॑। आ॒दि॒त्यैर्नो॒ भार॑-
ती वष्टु य॒ज्ञꣳ सर॑स्वती स॒ह रु॒द्रैर्नं॑

र्णा॑। दे॒वौ। पश्य॑न्तौ। भुव॑नानि। विश्वा॑। अपि॑-
प्रथम्। चोद॑ना। वा॒म्। मिमा॑ना। होता॑रा।
ज्योति॑ः। प्र॒दिशेति॑ प्र-दिशा॑। दि॒शन्ता॑। [8]आ॒दि॒-
त्यैः। न॒ः। भार॑ती। व॒ष्टु। य॒ज्ञम्। सर॑स्वती।
स॒ह। रु॒द्रैः। न॒ः। आ॒वी॒त्। इडा॑। उप॑हू॒तेत्युप॑-

---

छान्दसो लङ्, 'बहुलं छन्दसि' इति शपः श्लुः, 'नाभ्यस्तस्य' इति गुणाभावो व्यत्ययेन प्रवर्तते। कीदृशौ—प्रथमा प्रथमौ प्रधानौ। पूर्ववदाकारः। सरथिना सरथिनौ समानरथः सरथः तद्वन्तौ। सुवर्णा शोभनवर्णौ देवौ दीप्तिमन्तौ विश्वा भुवनानि भूतजातानि वां युवयोः चोदना चोदितानि विहितानि कर्माणि। पूर्ववदाकारः। मिमाना। यद्वा—चोदना चोदनौ कर्मणा मिमाना मानकुशलौ ज्योतिः प्रकाशं प्रदिशा प्रधानदिग्भिः दिशन्ता विसृजन्तौ। सर्वत्रैवाकारः॥

[8]अष्टमी—आदित्यैरिति॥ आदित्यैस्सह नः अस्माकं यज्ञं भारती देवी वष्टु कामयताम्। वश कान्तौ। रुद्रैस्सह सरस्वती देवी नः अस्मान् आवीत् अवतु। अस्माकं वा यज्ञमवतु।

आवीत्। इडोपहूता वसुभिस्सजोषा
यज्ञं नो देवीरमृतेषु धत्त। त्वष्टा वी-
रं देवकामं जजान त्वष्टुरर्वा जायत
आशुरश्वः ॥ ५८ ॥ त्वष्टेदं विश्वं
भुवनं जजान बहोः कर्तारमिह यं-

हूता । वसुभिरिति वसु-भिः । सजोषा इति स-
जोषाः । यज्ञम् । नः । देवीः । अमृतेषु । धत्त ।
[9]त्वष्टा । वीरम् । देवकाममिति देव-कामम् । ज-
जान । त्वष्टुः । अर्वा । जायते । आशुः । अश्वः
॥ ५८ ॥ त्वष्टा । इदम् । विश्वम् । भुवनम् । ज-
जान । बहोः । कर्तारम् । इह । यक्षि । होतः ।

---

छान्दसो लुङ् । इडा देवी अस्माभिः आहूता वसुभिः सजोषाः समानप्रीतिः अस्माकमवत्वित्येव । किं बहुना, देवी देव्यः यूयं तिस्रोपि इडा सरस्वती भारती च नः अस्माकं यज्ञं अमृतेषु अविद्यमानमरणेषु देवेषु धत्त स्थापयत । 'नञो जरमर' इत्युत्तरपदाद्युदात्तत्वम् ॥

[9]नवमी—त्वष्टेति ॥ त्वष्टा देवः वीरं विक्रान्तं देवकामं देवान् कामयमानम् । 'शीलिकामि' इति णः, पूर्वपदप्रकृतिस्वरत्वं च । जजान जनयति । तस्मादेवं बहोः सर्वस्य कर्तारं त्वष्टारं हे होतः! इह अस्मिन् कर्मणि यक्षि यज । लेटि 'बहुलं छन्दसि' इति शपो लुक् ॥

क्षि होतः । अश्वो घृतेन त्मन्या स-
मंक्त उप देवाꣳ ऋतुशः पाथ एतु ।
वनस्पतिर्देवलोकं प्रजानन्नग्निना ह-
व्या स्वदितानि वक्षत् । प्रजापते-

[10]अश्वः । घृतेन । त्मन्या । समक्त इति सं-अक्तः ।
उपेति । देवान् । ऋतुश इत्यृतु-शः । पाथः ।
एतु । वनस्पतिः । देवलोकमिति देव-लोकम् ।
प्रजानन्निति प्र-जानन् । अग्निना । हव्या । स्व-
दितानि । वक्षत् । [11]प्रजापतेरिति प्रजा-पतेः ।

---

[10]दशमी—अश्व इति ॥ अश्वोऽयं घृतेन समक्तः सर्वात्मना अभ्यक्तः त्मना आत्मनैव स्वभावत एव स्वादुभूत इति यावत् । 'सुपां सुलुक्' इति 'मन्त्रेष्वाङ्यादेः' इत्याकारलोपः । पाथोऽन्नं स्वादु भूत्वा देवानुपैतु उपगच्छतु ऋतुशः ऋतावृतौ काले 'सङ्ख्यैकवचनाच्च' इति शस् । देवानित्यस्मिन् नकारस्य 'दीर्घादटि समानपादे' इति संहितायां रुत्वम् । वनस्पतिः वानस्पत्योऽग्निः । विकारे प्रकृतिशब्दः, सुट्स्वरावुक्तौ । देवलोकं प्रजानन् अग्निना आहवनीयेन सह स्वदितानि स्वादूकृतानि हव्या हव्यानि वक्षत् वहतु । 'शेश्छन्दसि' इति लोपः । वहेर्लेटि 'सिब्बहुलं लेटि' इति सिप् ॥

[11]एकादशी—प्रजापतेरिति ॥ प्रजापतेः यजमानस्य तपसा अनेन कर्मणा वावृधानः वर्धमानः । छान्दसस्य लिटः कानजा-

स्तपंसा वावृधानस्सद्यो जातो द-
धिषे यज्ञमंग्ने। स्वाहांकृतेन हविषां
पुरोगा याहि साध्या हविरंदन्तु दे-
वाः ॥ ५९ ॥

तपंसा । वावृधानः । सद्यः । जातः । दधिषे ।
यज्ञम् । अग्ने । स्वाहांकृतेनेति स्वाहां–कृतेन ।
हविषां । पुरोगा इति पुरः–गाः । याहि । साध्या ।
हविः । अदन्तु । देवाः ॥ ५९ ॥

अग्निष्वां वामश्वो द्विचंत्वारिꣳशच्च ॥ ११ ॥

सावित्राणि व्यृंद्धमुत्क्रांम देवस्यं खनाति क्रूरं
वांरुणस्सप्तभिरेकांविꣳशत्या षड्भिर्न हं स्म स-
मिद्धो अञ्जन्नेकांदश ॥ ११ ॥

सावित्राण्युत्क्रांम क्रूरं वांरुणः पशवंस्स्युर्न हं

---

देशः । सद्योजातः जातमात्र एव यज्ञं अध्वरं दधिषे धारयसि
अग्ने! । छान्दसो लिट् । स्वाहाकृतेन स्वाहाकारेण संस्कृतेन अ-
नेन हविषा सह याहि गच्छ देवान् । स्वाहाशब्दस्य ऊर्यादि-
त्वेन गतित्वात् 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ।
हे पुरोगाः प्रथमगामिन्! । 'जनसन' इति विट्, 'विड्वनोः'
इत्यात्वम् । साध्या साधितेन हविषा । यद्वा—साधु याहि

स्म॒ नव॑पञ्चा॒शत् ॥ ५९ ॥ सा॒वि॒त्राणि॑ ह॒विरं॑दन्तु दे॒वाः ॥ हरिः ओम् ॥ श्रीकृष्णार्पणमस्तु. ॥

## पञ्चमकाण्डे प्रथमः प्रश्नस्समाप्तः.

---

साधु हविरदन्तु देवाः । 'सुपां सुलुक्' इति विभक्तेः ध्यादेशः टिलोपः, उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये पञ्चमे काण्डे प्रथमे प्रपाठके एकादशोनुवाकः.

समाप्तः प्रपाठकः.

हरिः ॐ.

## पञ्चमकाण्डे द्वितीयप्रश्नः.

विष्णुंमुखा वै देवाश्छन्दोंभिरिमा-
न्लोकानंनपजय्यमभ्यंजयन् यद्वि-
ष्णुक्रमान्क्रमंते विष्णुरेव भूत्वा
यजंमानश्छन्दोंभिरिमान्लोकानंन-
पजय्यमभि जंयति विष्णोः क्रमों-
स्यभिमातिहेत्यांह गायत्री वै पृंथि-

[1]विष्णुंमुखा इति विष्णु–मुखाः । वै । देवाः । छन्दोंभिरिति छन्दः–भिः । इमान् । लोकान् । अनपजय्यमित्यंनप–जय्यम् । अभीति । अजयन्न् । यत् । विष्णुक्रमानिति विष्णु–क्रमान् । क्रमंते । विष्णुः । एव । भूत्वा । यजंमानः । छन्दोंभिरिति छन्दः–भिः । इमान् । लोकान् । अनपजय्यमित्यंनप–जय्यम् । अभीति । जयति । विष्णोः । क्रमः । असि । अभिमातिहेत्यंभिमाति–हा । इति । आह । गायत्री । वै । पृथिवी । त्रैष्टुंभम् । अ-

[1]पुनरप्यग्निकाण्डमेव—विष्णुमुखा इत्यादि ॥ विष्णुप्रधानभूताः देवाः अनपजय्यं अपजेतुं न शक्यत इति । 'अचो यत्,' 'क्षय्यजय्यौ शक्यार्थे' इति अयादेशो निपात्यते। 'ययतोश्चातदर्थे' इति उत्तरपदान्तोदात्तत्वम् । विष्णुक्रमाः

वी त्रैष्टुभमन्तरिक्षं जागती द्यौरा-
नुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान्
यथापूर्वमभि जयति प्रजापतिरग्नि-
मसृजत सोऽस्मात्सृष्टः ॥ १ ॥ परां-
ङैत्तमेतयाऽन्वैदक्रन्ददिति तया वै
सोऽग्नेः प्रियं धामावारुन्ध यदेताम-
न्वाहाग्नेरेवैतया प्रियं धामाव रुन्ध

न्तरिक्षम् । जागती । द्यौः । आनुष्टुभीरित्यानु–स्तु-
भीः । दिशः । छन्दोभिरिति छन्दः–भिः । एव ।
इमान् । लोकान् । यथापूर्वमिति यथा–पूर्वम् ।
अभीति । जयति । प्रजापतिरिति प्रजा–पतिः ।
अग्निम् । असृजत । सः । अस्मात् । सृष्टः ॥ १ ॥
पराङ् । ऐत् । तम् । एतया । अन्विति । ऐत् ।
अक्रन्दत् । इति । तया । वै । सः । अग्नेः । प्रि-
यम् । धाम । अवेति । अरुन्ध । यत् । एताम् ।
अन्वाहेत्यनु–आह । अग्नेः । एव । एतया । प्रि-

'विष्णोः क्रमोसि'* इत्यादयः । गायत्रीत्यादि । तदधीनजयत्वात् तदीयत्वम् । त्रिष्टुब्जगत्यनुष्टुप्शब्देभ्यः उत्सादित्वादञ् । विष्णुक्रमानन्तरं जपतीत्यर्थः ॥

*सं. ४-२-१.

ई॒श्व॒रो वा ए॒ष परा॒ङ्प्र॒द॒घो॒ यो वि॒-
ष्णु॒क्र॒मान्क्रम॑ते च॒त॒सृ॒भि॒रा व॑र्तते
च॒त्वारि॒ छन्दा॑ꣳसि॒ छन्दा॑ꣳसि॒ ख-
लु वा अ॒ग्नेः प्रि॒या त॒नूः प्रि॒याम॒-
वास्य॑ त॒नुव॑म॒भि ॥ २ ॥ प॒र्याव॑र्तते

यम् । धाम॑ । अवेति॑ । रु॒न्धे॒ । [2]ई॒श्व॒रः । वै । ए॒षः । पराङ् । प्र॒द॒घ॒ इति॑ प्र–द॒घः॑ । यः । वि॒ष्णु॒क्र॒मानिति॑ विष्णु–क्र॒मान् । क्रम॑ते । च॒त॒सृ॒भि॒रिति॑ च॒त॒-सृ–भि॒ः । एति॑ । व॒र्त॒ते॒ । [3]च॒त्वारि॑ । छन्दा॑ꣳसि । छन्दा॑ꣳसि । ख॒लु॑ । वै । अ॒ग्नेः । प्रि॒या । त॒नूः । प्रि॒याम् । ए॒व । अ॒स्य॒ । त॒नुव॑म् । अ॒भीति॑ ॥ २ ॥ प॒र्याव॑र्तत॒ इति॑ परि–आव॑र्तते । द॒क्षि॒णा । प॒र्याव॑र्तत॒ इति॑ परि–आव॑र्तते । स्वम् । ए॒व । वी॒र्य॑म् ।

[2]ईश्वरो वा इत्यादि ॥ विष्णुक्रमाणां क्रमिता पराङेव प्रदघः प्रस्थातुमीश्वरः । दघेः 'ईश्वरे तोसुन्कसुनौ' इति कसुन् । चतसृभिरिति । 'अग्नेऽभ्यावर्तिन्'* इत्यादिभिः चतसृभिः ऋग्भिः दक्षिणमंसमभिपर्यावर्तते । 'झल्युपोत्तमम्' इत्युपोत्तमस्योदात्तत्वम् ॥

[3]छन्दांसि खल्वित्यादि ॥ प्रधानसाधनत्वात् शरीरमेवाग्नेः छन्दांसि । तस्मात् चतुस्सङ्ख्यान्वयात् प्रियामग्नेः तनुवमभिपर्याव-

*सं. ४-२-१.

दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोर्ध आत्मनो वीर्यावत्तरोथो आदित्यस्यैवावृतमनु पर्यावर्तते शुनश्शेपमाजीगर्तिं वरुणोऽगृह्णात्स एतां वारुणीमपश्यत्त-

अन्विति । पर्यावर्तत इति परि—आवर्तते । तस्मात् । दक्षिणः । अर्धः । आत्मनः । वीर्यावत्तर इति वीर्यावत्—तरः । अथो इति । आदित्यस्य । एव । आवृतमित्या—वृतम् । अन्विति । पर्यावर्तत इति परि—आवर्तते । [4]शुनश्शेपम् । आजीगर्तिम् । वरुणः । अगृह्णात् । सः । एताम् । वारुणीम् ।

र्तते । दक्षिणेत्यादि । गतम् । आत्मनः शरीरस्य वीर्यावत्तरः अतिशयेन वीर्यवान् । छान्दसं दीर्घत्वम् । अथो अपि च आदित्यस्यैवावृतं पर्यावृत्तिं अनु लक्षीकृत्य पर्यावर्तते । ननु अप्रदक्षिणमेव आदित्यो गच्छति—तथा हि, अश्विन्यां दृष्टो भगवान् कतिपयदिवसव्यतिक्रमे भरण्यामुपलभ्यते, ततः कृत्तिकासु. सत्यं, इदं तु ध्रुवा धारात् हात्*(?) क्षिप्रं ज्योतिश्चक्रं प्रदक्षिणं भ्रमति । तत्रस्थोऽयमपि भगवान् आराधनवशेन प्रदक्षिणं पर्यावर्तमानो लौकिकैः अभिमन्यते । तदभिप्रायमिदं ब्राह्मणमिति ॥

[4]शुनश्शेपो नामाजीगर्तपुत्रः । वारुणीं 'उदुत्तमम्'† इत्येतां

*ध्रुवा रयात् हात्. †सं. ४-२-१.

या वै स आत्मानं वरुणपाशादमु-
ञ्चद्वरुणो वा एतं गृह्णाति य उखां
प्रतिमुञ्चत उदुत्तमं वरुण पाशम-
स्मदित्याहात्मानमेवैतया ॥ ३ ॥
वरुणपाशान्मुञ्चत्या त्वाऽहार्षमि-
त्याहा ह्येनꣳ हरति ध्रुवस्तिष्ठाविचा-
चलिरित्याह प्रतिष्ठित्यै विशस्त्वा
सर्वा वाञ्छन्त्वित्याह विशैवैनꣳ स-

अपश्यत् । तया । वै । सः । आत्मानम् । वरुणपाशादिति वरुण-पाशात् । अमुञ्चत् । वरुणः । वै । एतम् । गृह्णाति । यः । उखाम् । प्रतिमुञ्चत इति प्रति-मुञ्चते । उदिति । उत्तममित्युत्-तमम् । वरुण । पाशम् । अस्मत् । इति । आह । आत्मानम् । एव । एतया ॥ ३ ॥ वरुणपाशादिति वरुण-पाशात् । मुञ्चति । एति । त्वा । अहार्षम् । इति । आह । एति । हि । एनम् । हरति । ध्रुवः । तिष्ठ । अविचाचलिरित्यवि-चाचलिः । इति । आह । प्रतिष्ठित्या इति प्रति-स्थित्यै । विशः । त्वा । सर्वाः ।

---

अपश्यत् । तेन स एवास्य ऋषिः । अनया अस्य शिक्यपाशं मुञ्चते । शुनश्शेपस्य वनस्पत्यादित्वात् पूर्वोत्तरपदयोः युगपत्

मर्धयत्यस्मिन्राष्ट्रमधिश्रयेत्याह रा-
ष्ट्रमेवास्मिन्ध्रुवमकर्यं कामयेत रा-
ष्ट्रꣳ स्यादिति तं मनसा ध्यायेद्रा-
ष्ट्रमेव भवति ॥ ४ ॥ अग्रे बृहन्नुष-
सामूर्ध्वो अस्थादित्याहाग्रमेवैनꣳ
समानानां करोति निर्जग्मिवान्त-
मस इत्याह तम एवास्मादप हन्ति
ज्योतिषाऽगादित्याह ज्योतिरेवा-

वाञ्छन्तु । इति । आह । विशा । एव । एनम् । स-
मिति । अर्धयति । अस्मिन्न् । राष्ट्रम् । अधीति । श्र-
य । इति । आह । राष्ट्रम् । एव । अस्मिन्न् । ध्रुवम् ।
अकः । यम् । कामयेत । राष्ट्रम् । स्यात् । इति ।
तम् । मनसा । ध्यायेत् । राष्ट्रम् । एव । भवति ॥
४ ॥ अग्रे । बृहन्न् । उषसाम् । ऊर्ध्वः । अस्थात् ।
इति । आह । अग्रम् । एव । एनम् । समानानाम् ।
करोति । निर्जग्मिवानिति निः—जग्मिवान् । तम-
सः । इति । आह । तमः । एव । अस्मात् । अपेति ।

---

प्रकृतिस्वरत्वम् । आत्वाऽहार्षमिति । द्वाभ्यामेनं हरति । ध्रुवमक-
रिति । ध्रुवं अचलितं करोति । छान्दसो लुङ् । 'मन्त्रे

स्मिंन्दधाति चतसृभिरासादयति च-
त्वारि छन्दांसि छन्दोंभिरेवाति-
च्छन्दसोत्तमया वर्ष्म वा एषा छ-
न्दसां यदतिच्छन्दा वर्ष्मैवैनं स-
मानानां करोति सद्वती ॥ ५ ॥ भ-

हन्ति । ज्योतिषा । एति । अगात् । इति । आह । ज्योतिः । एव । अस्मिन्न् । दधाति । [5]चतसृभिरिति चतसृ-भिः । सादयति । चत्वारि । छन्दांसि । छन्दोभिरिति छन्दः-भिः । एव । आतिच्छन्दसे-त्यति-छन्दसा । उत्तमयेत्युत्-तमया । वर्ष्म । वै । एषा । छन्दसाम् । यत् । अतिच्छन्दा इत्य-ति-छन्दाः । वर्ष्म । एव । एनम् । समानानाम् । करोति । सद्वतीति सत्-वती ॥ ५ ॥ भवति । सत्त्वमिति सत्-त्वम् । एव । एनम् । गमयति ।

---

घस ' इति च्लेर्लुक् । ध्रुवत्वं राष्ट्रस्य नित्यसंबन्धः । नित्यं राष्ट्रं स्यादिति यावत् । अग्रमधिप्रधानम् । गतमन्यत् ॥

[5]चतसृभिरिति ॥ अन्तर्वेद्येनमासादयति । छन्दोभिरेवेति । सादयतीत्येव । अतिच्छन्दसोत्तमयेति । सादयतीत्येव । ' हंसश्शुचिषत् '* इति जगती अतिच्छन्दाः । उत्तमशब्द उञ्छादिः । वर्ष्म

---

*सं. ४-२-१.

वति सत्त्वमेवैनं गमयति वात्सप्रे-
णोप तिष्ठत एतेन वै वत्सप्रीर्भा-
लन्दनोऽग्नेः प्रियं धामावारुन्धाग्ने-
रेवैतेन प्रियं धामाव रुन्ध एकादशं
भवत्येकधैव यजमाने वीर्यं दधाति
स्तोमेन वै देवा अस्मिंल्लोक आर्ध्नु-

[6]वात्सप्रेणेति वात्स–प्रेण । उपेति । तिष्ठते । एतेन । वै । वत्सप्रीरिति वत्स–प्रीः । भालन्दनः । अग्नेः । प्रियम् । धाम । अवेति । अरुन्ध । अग्नेः । एव । एतेन । प्रियम् । धाम । अवेति । रुन्धे । एकादशम् । भवति । एकधेत्येक–धा । एव । यजमाने । वीर्यम् । दधाति । स्तोमेन । वै । देवाः । अस्मिन् । लोके । आर्ध्नुवन् । छन्दोभिरिति छन्दः–भिः । अमुष्मिन् । स्तोमस्य । इव । खलु ।

उच्छ्रायः । सद्वती सच्छब्दवती उत्तमा भवति । भूम्नि वतुप् ॥

[6]वात्सप्रेणेति ॥ 'दिवस्परि '* इत्येकादशर्चं सूक्तं वात्सप्रम् । तेन उख्यं प्रातरग्निमुपतिष्ठते । अथास्य वात्सप्रत्वं निर्वक्ति—एतेन वा इत्यादि । वत्सप्रीर्नाम भलन्दनस्य पुत्रः । शिवाद्यणन्तः । एकादशर्चः परिमाणमस्येति स्तोमे डविधिः । किमस्य स्तोमस्य स्तो-

*सं. ४-२-२.

वञ्छन्दोभिरमुष्मिन्थ्स्तोमंस्थ्येव ख-
लु वा एतद्रूपं यद्वात्सप्रं यद्वात्स-
प्रेणोपतिष्ठते ॥ ६ ॥ इममेव तेनं
लोकमभि जयति यद्विष्णुक्रमान्क्र-
मंतेऽमुमेव तैर्लोकमभि जंयति पू-
र्वेद्युः प्र क्रामत्युत्तरेद्युरुपं तिष्ठते त-

वै । एतत् । रूपम् । यत् । वात्सप्रमिति वात्स-
प्रम् । यत् । वात्सप्रेणेति वात्स–प्रेण । उपतिष्ठत
इत्युप–तिष्ठते ॥ ६ ॥ इमम् । एव । तेन । लो-
कम् । अभीति । जयति । यत् । विष्णुक्रमानिति
विष्णु–क्रमान् । क्रमंते । अमुम् । एव । तैः ।
लोकम् । अभीति । जयति । [7]पूर्वेद्युः । प्रेति ।
क्रामति । उत्तरेद्युः । उपेति । तिष्ठते । तस्मात् ।

---

मत्वं यदाह—स्तोमेन वा इति । एकधैवेति । एकस्तोमत्वादेका-
दशानाम् ॥

[7]पूर्वेद्युरिति ॥ पूर्वस्मिन् अहनि प्रक्रामति विष्णुक्रमान् क्रा-
मति । उत्तरेऽद्युः उत्तरेऽहनि उपतिष्ठते वात्सप्रेण । ‘ सद्यः
परुत् ’ इत्यादौ द्वे एते निपात्येते । तस्मादित्यादि । गतम् । अ-
लब्धस्य लाभो योगः, लब्धस्य पालनं क्षेमः । काश्चित्प्रजाः
योगः श्रेयानिति मन्यन्ते या आर्जनशीला बहुव्ययाः । का-
श्चित् क्षेम एव श्रेयानिति मन्यन्ते या आर्जनशीला व्ययभीरवः ।

स्माद्योगेऽन्यासां प्रजानां मनः क्षेमेऽन्यासां तस्माद्यायावरः क्षेम्यस्येशे तस्माद्यायावरः क्षेम्यमध्यवस्यति मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्यै ॥ ७ ॥

योगे । अन्यासाम् । प्रजानामिति प्र-जानाम् । मनः । क्षेमे । अन्यासाम् । तस्मात् । यायावरः । क्षेम्यस्य । ईशे । तस्मात् । यायावरः । क्षेम्यम् । अध्यवस्यतीत्यधि-अवस्यति । [8]मुष्टी इति । करोति । वाचम् । यच्छति । यज्ञस्य । धृत्यै ॥ ७ ॥

सृष्टोऽभ्येतया भवति सद्वत्युपतिष्ठते द्विचत्वारिंशच्च ॥ १ ॥

क्षेमेऽन्यासामिति । प्रजानां मन इत्येव । क्रमेणोपस्थानवैलक्षण्यहेतुकं प्रजानां मनः मनोवैलक्षण्यमिति । तस्मात् यायावरः यानशीलः यजमानः क्षेम्यस्य ईशे ईष्टे न योगमर्हति । 'यश्च यङः' इति वरच् । 'स्व औत्यक्षेम्य स्येश'(?) इत्यादिना स्वार्थे क्षेमशब्दाद्यः । 'लोपस्त आत्मनेपदेषु' इति ईष्ट इत्यत्र तलोपः । यस्मात् एवं यायावरः क्षेममेवार्हति तस्मादेव यायावरः क्षेममेव कर्तुमध्यवस्यति न योगमितीत्याह । एवमत्र प्रयाणं कर्तव्यमिति सूचितं भवति ॥

[8]मुष्टीत्यादि ॥ प्रकृतिवत् ॥

इति पञ्चमे द्वितीये प्रथमोनुवाकः.

अन्नपतेऽन्नस्य नो देहीत्याहाग्निर्वा
अन्नपतिस्स एवास्मा अन्नं प्र यच्छ-
त्यनमीवस्यं शुष्मिण इत्याहायक्ष्म-
स्येति वावैतदाह प्र प्रदातारं ता-
रिष ऊर्जं नो धेहि द्विपदे चतुष्पद
इत्याहाशिषमेवैतामा शास्त उदु त्वा

[1]अन्नपत इत्यन्न–पते । अन्नस्य । नः । देहि । इति । आह । अग्निः । वै । अन्नपतिरित्यन्न–पतिः । सः । एव । अस्मै । अन्नम् । प्रेति । यच्छति । अनमीवस्यं । शुष्मिणः । इति । आह । अयक्ष्मस्यं । इति । वाव । एतत् । आह । प्रेति । प्रदातारमिति प्र–दातारम् । तारिषः । ऊर्जम् । नः । धेहि । द्विपद इति द्वि–पदे । चतुष्पद इति चतुः–पदे । इति । आह । आशिषमित्या–शिषम् । एव । एताम् । एति । शास्ते । [2]उदिति । उ । त्वा । विश्वे । देवाः । इति । आह । प्राणा इति प्र–अ-

[1]पूर्वेद्युरेवास्मै अन्नवतीं समिधमभ्यादधाति जपति वा—अन्नपतेऽन्नस्य नो देहीति ॥ अयक्ष्मस्येति । अनमीवशब्दस्य व्याख्या । आशिषमिति । प्रदातारं यजमानं प्रतारिषः वर्धय अस्माकं द्विपदे चतुष्पदे च ऊर्जं धेहि इतीयमाशीः ॥

[2]उदु त्वेति ॥ उख्यमुद्यच्छते । (यानामहे) । चित्तायेति । अभि-

विश्वे देवा इत्याह प्राणा वै विश्वे देवाः ॥ ८ ॥ प्राणैरेवैनमुद्यच्छतेऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनꣳ समर्धयति चतसृभिरा सादयति चत्वारि छन्दाꣳसि छन्दोभिरेवातिच्छन्दसोत्तमया वर्ष्म वा एषा छन्दसां यदतिच्छन्दा वर्ष्मैवैनꣳ स-

नाः । वै । विश्वे । देवाः ॥ ८ ॥ प्राणैरिति प्र-अनैः । एव । एनम् । उदिति । यच्छते । अग्ने । भरन्तु । चित्तिभिरिति चित्ति-भिः । इति । आह । यस्मै । एव । एनम् । चित्ताय । उद्यच्छत इत्युत्-यच्छते । तेन । एव । एनम् । समिति । अर्धयति । चतसृभिरिति चतसृ-भिः । एति । सादयति । चत्वारि । छन्दाꣳसि । छन्दोभिरिति छन्दः-भिः । एव । अतिच्छन्दसेत्यति-छन्दसा । उत्तमयेत्युत्-तमया । वर्ष्म । वै । एषा । छन्दसाम् ।

---

प्रेतार्थाय । चतसृभिः इति । प्रयातुकामोऽयं 'सीद त्वं मातुः'* इत्यादिभिश्चतसृभिः प्रथमानुवाकाम्नाताभिः द्वीषे शकटे प्रउगे

---

*सं. ४-२-१.

मानानां करोति संद्वती भवति सत्त्व-
मेवैनं गमयति प्रेदंग्ने ज्योतिष्मान् ॥
१॥ याहीत्यांह ज्योतिरेवास्मिन्दधा-
ति तनुवा वा एष हिनस्ति यꣳ हि-
नस्ति मा हिꣳसीस्तनुवां प्रजा इ-
त्यांह प्रजाभ्यं एवैनꣳ शमयति र-
क्षाꣳसि वा एतद्यज्ञꣳ संचन्ते यदनं

यत् । अतिच्छन्दा इत्यति–छन्दाः । वर्ष्मं । एव ।
एनम् । समानानांम् । करोति । सद्वतीति सत्–
वती । भवति । सत्त्वमिति सत्–त्वम् । एव । ए-
नम् । गमयति । प्रेति । इत् । अग्ने । ज्योतिष्मान्
॥ १ ॥ याहि । इति । आह । ज्योतिः । एव । अ-
स्मिन् । दधाति । तनुवा । वै । एषः । हिनस्ति ।
यम् । हिनस्ति । मा । हिꣳसीः । तनुवां । प्रजा
इति प्र–जाः । इति । आह । प्रजाभ्य इति प्र–
जाभ्यः । एव । एनम् । शमयति । [3]रक्षाꣳसि ।
वै । एतत् । यज्ञम् । सचन्ते । यत् । अनः । उ-

उख्यमासादयति । चत्वारीत्यादि । गतम्* । प्रेदग्न इति । प्रयाण-
मन्त्रः । तनुवेत्यादि । गतम् ॥

[3]रक्षांसीत्यादि ॥ सचन्ते सेचन्ते । उत्सर्जति शब्दं करोति ।

*सं. ५-२-१.[5]

उथ्सर्जत्यक्रंन्ददित्यन्वाह रक्षंसामप॑हत्या अनंसा वहन्त्यपचितिमेवा स्मिन्दधाति तस्मादनस्वी च रथी चातिथीनामपचिततमौ ॥१०॥ अपचितिमान्भवति य एवं वेद सामिधाऽग्निं दुवस्यतेतिं घृतानुषिक्तामवसिते समिधमा दधाति यथाऽतिथ-

त्सर्जतीत्युत्–सर्जति । अक्रंन्दत् । इति । अन्वितिं । आह । रक्षंसाम् । अपंहत्या इत्यपं–हत्यै । अनंसा । वहन्ति । अपचितिमित्यप–चितिम् । एव । अस्मिन्न् । दधाति । तस्मात् । अनस्वी । च । रथी । च । अतिथीनाम् । अपचिततमावित्यपचित–तमौ ॥ १० ॥ अपचितिमानित्यपचिति–मान् । भवति । यः । एवम् । वेद । समिधेति सं–इधा । अग्निम् । दुवस्यत । इति । घृतानुषिक्तामिति घृत–अनुषिक्ताम् । अवसित इत्यव–सिते । समिधमिति सं–इधम् । एति । दधाति । य-

तस्मात्प्रयाणकाले अक्षशब्दे सति 'अक्रन्ददग्निः'* इति पुरस्तादाम्नातामृचमाह । अनसेत्यादि । अपचितिः पूजा । घृतानुषिक्तामि-

*सं. ४-२-२.

य आगताय सर्पिष्वदातिथ्यं क्रियते तादृगेव तद्गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्योऽप्सु भस्म प्र वेशयत्यप्सुयोनिर्वा अग्निस्स्वामेवैनं योनिं गमयति तिसृभिः प्र

था । अतिथये । आगतायेत्या–गताय । सर्पिष्वत् । आतिथ्यम् । क्रियते । तादृक् । एव । तत् । गायत्रिया । ब्राह्मणस्य । गायत्रः । हि । ब्राह्मणः । त्रिष्टुभा । राजन्यस्य । त्रैष्टुभः । हि । राजन्यः । अप्स्वित्यप्–सु । भस्म । प्रेति । वेशयति । अप्सुयोनिरित्यप्सु–योनिः । वै । अग्निः । स्वाम् । एव । एनम् । योनिम् । गमयति । [4]तिसृभिरिति तिसृ–

ति । घृतेन अनुषिक्तां समिधमवसिते प्रयाणे आदधाति । यथेत्यादि । गतम् । 'समिधाऽग्निम्'* इति गायत्री । 'प्र प्रायम्'* इति त्रिष्टुप् । अप्स्वित्यादि । भस्म चेति वर्तते । अप्सु प्रवेशयति । अप्सु योनिरस्येति व्यधिकरणो बहुव्रीहिः । 'अपो योनि यन्मतुषु' इति सप्तम्या अलुक् ॥

[4]तिसृभिरिति ॥ 'आपो देवीः प्रति गृह्णीत'* इत्यादिभिः । परा वा इत्यादि । परावपति विनाशयति । ज्योतिष्मतीभ्यां 'प्रसद्य'*

*सं. ४-२-३.

वेशयति त्रिवृद्वै॥११॥ अग्निर्यावाने-
वाग्निस्तं प्रतिष्ठां गमयति परा वा ए-
षोऽग्निं वपति योऽप्सु भस्म प्रवेशयं-
ति ज्योतिष्मतीभ्यामवं दधाति ज्यो-
तिरेवास्मिन्दधाति द्वाभ्यां प्रतिष्ठित्यै
परा वा एष प्रजां पशून् वपति
योऽप्सु भस्म प्रवेशयति पुनरूर्जा

भिः । प्रेति । वेशयति । त्रिवृदिति त्रि-वृत् । वै ॥
॥ ११ ॥ अग्निः । यावान् । एव । अग्निः । तम् ।
प्रतिष्ठामिति प्रति-स्थाम् । गमयति । परेति । वै ।
एषः । अग्निम् । वपति । यः । अप्स्वित्यप्-सु । भ-
स्म । प्रवेशयतीति प्र-वेशयति । ज्योतिष्मती-
भ्याम् । अवेति । दधाति । ज्योतिः । एव । अ-
स्मिन् । दधाति । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति-
स्थित्यै । परेति । वै । एषः । प्रजामिति प्र-जाम् ।
पशून् । वपति । यः । अप्स्वित्यप्-सु । भस्म ।
प्रवेशयतीति प्र-वेशयति । पुनः । ऊर्जा । सह ।
रय्या । इति । पुनः । उदैतीत्युत्-ऐति । प्रजा-

---

इत्याभ्यां द्वाभ्यामवदधातीत्येव । परा वा इत्यादि । गतम् । 'पुन-

सह रय्येति पुनरूर्जेति प्रजामेव प-
शूनात्मन्धत्ते पुनस्त्वाऽऽदित्याः॥१२
रुद्रा वसवस्समिन्धतामित्याहैता वा
एतं देवता अग्रे समैन्धत ताभिरे-
वैनꣳ समिन्धे बोधा स बोधीत्युप
तिष्ठते बोधयत्येवैनं तस्माथ्सुप्त्वा प्र-
जाः प्र बुध्यन्ते यथास्थानमुप ति-

मिति प्र-जाम् । एव । पशून् । आत्मन्न् । धत्ते ।
5 पुनः । त्वा । आदित्याः ॥ १२ ॥ रुद्राः । वसवः ।
समिति । इन्धताम् । इति । आह । एताः । वै ।
एतम् । देवताः । अग्रे । समिति । ऐन्धत । ता-
भिः । एव । एनम् । समिति । इन्धे । बोध । सः ।
बोधि । इति । उपेति । तिष्ठते । बोधयति । एव ।
एनम् । तस्मात् । सुप्त्वा । प्रजा इति प्र-जाः ।
प्रेति । बुध्यन्ते । यथास्थानमिति यथा-स्थानम् ।

---

रूर्जा नि वर्तस्व'* 'सह रय्या नि वर्तस्व'* इति द्वाभ्यां अङ्गचः पुनरागच्छति पुनरोप्तात् पुनराहृत्य आत्मनि स्थापयति ॥

5 अथ उख्यस्य उपसमिन्धनम्—पुनस्त्वेति ॥ अथ 'बोधा नो अस्य'* 'स बोधि सूरिः'* ति द्वाभ्यामुपतिष्ठते । यथास्थानमिति ।

---

*सं, ४-१-३.

ष्ठते तस्माद्यथास्थानं पशवः पुनरे-
त्योप तिष्ठन्ते ॥ १३ ॥
यावती वै पृथिवी तस्यै यम आ-
धिपत्यं परीयाय यो वै यमं देवय-

उपेति । तिष्ठते । तस्मात् । यथास्थानमिति यथा–स्थानम् । पशवः । पुनः । एत्येत्या–इत्य । उपेति । तिष्ठन्ते ॥ १३ ॥

वै विश्वे देवा ज्योतिष्मानपचिततमौ त्रिवृ-
द्वा आदित्या द्विचत्वारिंशञ्च ॥२॥

[1]यावती । वै । पृथिवी । तस्यै । यमः । आधिपत्यमित्याधि–पत्यम् । परीति । इयाय । यः । वै । यमम् । देवयजनमिति देव–यजनम् । अ-

यथाहृतं परिहृत्य पुनर्यजमानायतने तिष्ठन्नुपतिष्ठते । तस्मात् पुनरागत्य पशवो यथास्थानमुपतिष्ठन्ते । तिष्ठतेः 'अकर्मकाच्च' इत्यात्मनेपदम् ॥

इति पञ्चमे द्वितीये द्वितीयोनुवाकः.

[1]यावती वा इत्यादि ॥ 'अपेत वीत'* इति देवयजनाध्यवसानमन्त्रः । यममिति । 'अकथितं च' इति कर्मत्वम् ॥

*सं. ४-२-४.

जंनमस्या अनिर्याच्याग्निं चिनुते यमायैनꣳ स चिनुतेऽपेतेत्यध्यवंसायति यममेव देवयजंनमस्यै निर्याच्यात्मनेऽग्निं चिनुत इष्वग्रेण वा अस्या अनांमृतमिच्छन्तो नाविन्दन्ते देवा एतद्यजुंरपश्यन्नपेतेति यदेतेनांध्यवसाययंति ॥ १४ ॥ अ-

स्याः । अनिर्याच्येत्यनिंः–याच्य । अग्निम् । चिनुते । यमायं । एनम् । सः । चिनुते । अपेति । इत । इति । अध्यवंसाययतीत्यंधि–अवंसाययति । यमम् । एव । देवयजंनमितिं देव–यजंनम् । अस्यै । निर्याच्येतिं निः–याच्यं । आत्मने । अग्निम् । चिनुते । [2]इष्वग्रेणेतीषु–अग्रेणं । वै । अस्याः । अनांमृतमित्यनां–मृतम् । इच्छन्तः । न । अविन्दन्न् । ते । देवाः । एतत् । यजुः । अपश्यन्न् । अपेति । इत । इति । यत् । एतेनं । अध्यवसाययतीत्यंधि–अवसाययंति ॥ १४ ॥ अनांमृत इत्य-

---

[2]इष्वग्रेणेति ॥ इष्वग्रमात्रया अस्याः सम्बन्धिनं एकदेशं अनामृतं अमृतैरपि रहितमिच्छन्तः अन्विच्छन्तोऽपि नाविन्दन् नाल-

नांमृत एवाग्निं चिनुत उद्घ्नन्ति य-
देवास्यां अमेध्यं तदपं हन्त्यपोऽवों-
क्षति शान्त्यै सिकंता नि वंपत्येत-
द्वा अग्नेर्वैश्वानरस्यं रूपꣳ रूपेणैव
वैश्वानरमवं रुन्ध ऊषान्नि वंपति
पुष्टिर्वा एषा प्रजननं यदूषाः पुष्टयां-
मेव प्रजननेऽग्निं चिनुतेऽथों संज्ञानं

नां–मृते । एव । अग्निम् । चिनुते । [3]उदिति । हन्ति । यत् । एव । अस्याः । अमेध्यम् । तत् । अपेति । हन्ति । अपः । अवेति । उक्षति । शान्त्यै । सिकंताः । नीति । वपति । एतत् । वै । अग्नेः । वैश्वानरस्यं । रूपम् । रूपेणं । एव । वैश्वानरम् । अवेति । रुन्धे । ऊषान् । नीति । वपति । पुष्टिः । वै । एषा । प्रजननमिति प्र–जननम् । यत् । ऊषाः । पुष्टयाम् । एव । प्रजनन इति प्र–जनने । अग्निम् ।

---

भन्त । अनामृत एवेति । प्रेतानामृतप [मृतादप] सारितत्वात् ॥

[3]उद्घन्तीत्यादि ॥ गतम् । सिकतादयः सम्भारा गार्हपत्यायतने निवप्तव्याः । पुष्टिर्वा इत्यादि । पुष्टिहेतवः प्रजननहेतवश्चोषाः, तादृशे प्रदेशे अग्निश्चितो भवति तेषां निवपनेन । अथो अपिच ।

एव संज्ञानꣳ ह्यैतत् ॥ १५ ॥ पशूनां यदूषा द्यावापृथिवी सहास्तां ते वियती अब्रूतामस्त्वेव नौ सह यज्ञियमिति यदमुष्या यज्ञियमासीत्तदस्यामदधात्त ऊषा अभवन् यदस्या यज्ञियमासीत्तदमुष्यामद-

चिनुते । अथो इति । संज्ञान इति सं–ज्ञाने । एव । संज्ञानमिति सं–ज्ञानम् । हि । एतत् ॥ १५ ॥ पशूनाम् । यत् । ऊषाः । [4]द्यावापृथिवी इति द्यावा–पृथिवी । सह । आस्ताम् । ते इति । वियती इति वि–यती । अब्रूताम् । अस्तु । एव । नौ । सह । यज्ञियम् । इति । यत् । अमुष्याः । यज्ञियम् । आसीत् । तत् । अस्याम् । अदधात् । ते । ऊषाः । अभवन् । यत् । अस्याः । यज्ञियम् । आ-

---

संज्ञान एवेति । अग्निं चिनुत इत्येव । सम्यक् ज्ञायन्ते पशवो यैः तादृशा ऊषाः ॥

[4]द्यावापृथिवी इत्यादि॥ वियती वियत्यौ विगच्छन्त्यौ । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । 'शतुरनुमः' इति नद्या उदात्तत्वम् । 'देवताद्वन्द्वे च' इति द्यावापृथिवीशब्द आद्युदात्तः । अस्त्वेवेति । नौ आवयोः यद्यज्ञियं यज्ञार्हं रूपं तत्सहैवास्त्विति वि-

धात्तदुदश्चन्द्रमंसि कृष्णमूषांन्निव-
पंन्नदो ध्यायेद्द्यावांपृथिव्योरेव यु-
ज्ञियेऽग्निं चिनुतेऽयꣳ सो अग्निरि-
ति विश्वामिंत्रस्य ॥ १६ ॥ सूक्तं
भंवत्येतेन वै विश्वामिंत्रोऽग्नेः प्रियं
धामावांरुन्धाग्नेरेवैतेनं प्रियं धामाव
रुन्धे छन्दोंभिर्वै देवास्सुंवर्गं लोक-

सींत् । तत् । अमुष्याम् । अदधात् । तत् । अ-
दः । चन्द्रमंसि । कृष्णम् । ऊषान् । निवपन्निति
नि–वपन् । अदः । ध्यायेत् । द्यावांपृथिव्योरिति
द्यावां–पृथिव्योः । एव । यज्ञियें । अग्निम् । चिनु-
ते । [5]अयम् । सः । अग्निः । इति । विश्वामित्र-
स्येति विश्व–मित्रस्य ॥ १६ । सूक्तमिति सु–उ-
क्तम् । भवति । एतेन । वै । विश्वामित्र इति वि-
श्व–मित्रः । अग्नेः । प्रियम् । धामं । अवेति । अ-
रुन्ध । अग्नेः । एव । एतेन । प्रियम् । धामं ।

---

श्लेषारम्भे अब्रूताम् । यदित्यादि । गतम् । अदो ध्यायेदिति । यददः चन्द्रमसि कृष्णं तदिहास्त्विति ॥

[5]अयं स इत्यादि ॥ एतद्विश्वामित्रस्य सूक्तं षड्डचम् । आद्याभिः चतसृभिः गार्हपत्यचितौ चतस्रः प्राचीर्याः पुनरिष्टकाः

मायुश्चतस्रः प्राचीरुप दधाति चत्वा-
रि छन्दाꣳसि छन्दोभिरेव तद्यजं-
मानस्सुवर्गं लोकमेति तेषाꣳसुवर्गं
लोकं यतां दिशस्समव्लीयन्त ते द्वे
पुरस्तांथ्समीची उपादधत द्वे॥१७॥
पश्चाथ्समीची ताभिर्वै ते दिशोऽ-

अवेति । रुन्धे । छन्दोभिरिति छन्दः–भिः । वै । देवाः । सुवर्गमिति सुवः–गम् । लोकम् । आयन्न् । चतस्रः । प्राचीः । उपेति । दधाति । चत्वारि । छन्दाꣳसि । छन्दोभिरिति छन्दः–भिः । एव । तत् । यजमानः । सुवर्गमिति सुवः–गम् । लोकम् । एति । [6]तेषाम् । सुवर्गमिति सुवः–गम् । लोकम् । यताम् । दिशः । समिति । अव्लीयन्त । ते । द्वे इति । पुरस्तात् । समीची इति । उपेति । अदधत । द्वे इति ॥ १७ ॥ पश्चात् । समीची इति । ताभिः । वै । ते । दिशः । अदृꣳहन्न् । यत् । द्वे

प्रतिमन्त्रमुपदधाति । 'मित्रे चर्षौ' इति पूर्वपदस्य दीर्घत्वम् । अन्तोदात्तत्वं च । चतुस्सङ्ख्यान्वयाच्छन्दोलाभः ॥

[6]तेषामिति ॥ देवानां यतां गच्छताम् । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । समव्लीयन्त, व्ली विशरणे । त इति । देवाः पुरस्तात्

दृꣳहन् यद्वे पुरस्तांथ्समीचीं उप-
दधांति द्वे पश्चाथ्समीचीं दिशां वि-
धृंत्या अथो पशवो वै छन्दाꣳसि
पशूनेवास्मैं समींचो दधात्यष्टावुपं
दधात्यष्टाक्षंरा गायत्री गांयत्रोंऽग्नि-
र्यावांनेवाग्निस्तं चिनुतेऽष्टावुपं दधा-
त्यष्टाक्षंरा गायत्री गांयत्री सुंवर्गं

इतिं । पुरस्तांत् । समीची इतिं । उपदधातीत्युंप-दधांति । द्वे इतिं । पश्चात् । समीची इतिं । दिशाम् । विधृंत्या इति वि-धृत्यै । अथो इतिं । पशवः । वै । छन्दाꣳसि । पशून् । एव । अस्मै । समीचः । दधाति । [7]अष्टौ । उपेतिं । दधाति । अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री । गायत्रः । अग्निः । यावान् । एव । अग्निः । तम् । चिनुते । अष्टौ । उपेतिं । दधाति । अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री । गायत्री । सुवर्गमितिं सुवः-गम् । लो-

पूर्वस्यां दिशि द्वे इष्टके सङ्गते दक्षिणामुत्तरां चोपादधत 'चिदसि, परिचिदसि'* इत्याभ्याम् । ताभिः इष्टकाभिः । अथो अपि च । चतुस्सङ्ख्यान्वयात् पश्चात्तु [पशुसाधन] छन्दोलाभः ॥

[7]अष्टावित्यादि ॥ गतम् । अञ्जसेति । ऋजुना मार्गेण ॥

*सं, ४-२-४.

लोकमञ्जसा वेद सुवर्गस्यं लोकस्यं ॥ १८ ॥ प्रज्ञांत्यै त्रयोदश लोकंपृणा उप दधात्येकंविꣳशतिस्सं पंद्यन्ते प्रतिष्ठा वा एंकविꣳशः प्रंतिष्ठा गार्हंपत्य एकविꣳशस्यैव प्रंतिष्ठां गार्हंपत्यमनु प्रतिं तिष्ठति

कम् । अञ्जसा । वेद । सुवर्गस्येति सुवः–गस्यं । लोकस्यं ॥ १८ ॥ प्रज्ञांत्या इति प्र–ज्ञात्यै । [8] त्रयोदशेति त्रयः–दश । लोकंपृणा इति लोकं–पृणाः । उपेति । दधाति । एकंविꣳशतिरित्येकं–विꣳशतिः । समिति । पद्यन्ते । प्रतिष्ठेति प्रति–स्था । वै । एकविꣳश इत्येक–विꣳशः । प्रतिष्ठेति प्रति–स्था । गार्हंपत्य इति गार्ह–पत्यः । एकविꣳशस्येत्येक–विꣳशस्यं । एव । प्रतिष्ठामिति

[8]त्रयोदशेति ॥ इमावष्टौ एका चितिः । त्रयोदशभिः लोकंपृणाभिः प्रदक्षिणं चिनोति 'लोकं पृण'* इत्यनया । लोकं स्थानं अन्याभिः अनाक्रान्तमवकाशं पृणाति पूरयतीति लोकंपृणा । इगुपधलक्षणः कः । छान्दसो द्वितीयाया अलुक् । 'लोकस्य पृणे मुम्वक्तव्यः' इति मुम् । त्रयश्च दश च त्रयोदश । 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । एकविंशति-

*सं. ४-२-४.

प्रत्यग्निं चिक्यानस्तिष्ठति य एवं वेद
पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः
पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव
पशूनव रुन्धे त्रिचितीकं चिन्वीत
द्वितीयं चिन्वानस्त्रय इमे लोका
एष्वेव लोकेषु ॥ ११ ॥ प्रति तिष्ठ-

प्रति–स्थाम् । गार्हपत्यमिति गार्ह–पत्यम् । अनु । प्रतीति । तिष्ठति । प्रतीति । अग्निम् । चिक्यानः । तिष्ठति । यः । एवम् । वेद । [9]पञ्चचितीकमिति पञ्च–चितीकम् । चिन्वीत । प्रथमम् । चिन्वानः । पाङ्क्तः । यज्ञः । पाङ्क्ताः । पशवः । यज्ञम् । एव । पशून् । अवेति । रुन्धे । त्रिचितीकमिति त्रि–चितीकम् । चिन्वीत । द्वितीयम् । चिन्वानः । त्रयः । इमे । लोकाः । एषु । एव । लोकेषु ॥ ११ ॥ प्र-

---

रिति । प्रतिष्ठेति । तद्धेतुत्वात्ताच्छब्द्यम् । एकविंशस्य प्रतिष्ठां गार्हपत्यं च अनुप्रतिष्ठितो भवति । एवं वेदिता अग्निं चितवान् प्रतिष्ठितो भवति । 'विभाषा चेः' इति लिटि कुत्वम् ॥

[9]पञ्चचितीकमिति ॥ 'चितेः कपि' इति दीर्घत्वम् । पाङ्क्तो यज्ञ इति । धानादिपञ्चकसाध्यत्वात् । पङ्क्तिशब्द उत्सादिः । एकधेति । एकेन प्रकारेण वर्तन्ते । एकवृतैवेति । एकधैव वृ-

त्येकंचितीकं चिन्वीत तृतीयं चि-
न्वान एकधा वै सुवर्गो लोक एक-
वृतैव सुवर्गं लोकमेति पुरीषेणाभ्यूं-
हति तस्मान्माꣳसेनास्थि छन्नं न
दुश्चर्मा भवति य एवं वेद पञ्च चि-
तयो भवन्ति पञ्चभिः पुरीषैरभ्यूंहति-

तीति । तिष्ठति । एकंचितीकामित्येकं-चितीकम् । चिन्वीत । तृतीयम् । चिन्वानः । एकधेत्येक-धा । वै । सुवर्ग इति सुवः-गः । लोकः । एकवृतेत्येक -वृता । एव । सुवर्गमिति सुवः-गम् । लोकम् । एति । पुरीषेण । अभीति । ऊहति । तस्मात् । माꣳसेन । अस्थि । छन्नम् । न । दुश्चर्मेति दुः-चर्मा । भवति । यः । एवम् । वेद । [10]पञ्च । चि-तयः । भवन्ति । पञ्चभिरिति पञ्च-भिः । पुरीषैः ।

ताम् । पुरीषेणेति । पुरीषया मृत्तिकया । दुश्चर्मेति । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥

[10]पञ्च चितय इत्यादि ॥ गतम् । 'झल्युपोत्तमम्' इति उपोत्तमस्योदात्तत्वम् ॥

इति पञ्चमे द्वितीये तृतीयोऽनुवाकः.

दश सं पद्यन्ते दशाक्षरा विरा-
डन्नं विराड्विराज्येवान्नाद्ये प्रति ति-
ष्ठति ॥ २० ॥

वि वा एतौ द्विषाते यश्च पुराऽग्नि-
र्यश्चोखायाꣳ समितमिति चतसृ-

अभीति । ऊहति । दश । समिति । पद्यन्ते । दशाक्षरेति दश–अक्षरा । विराडिति वि–राट् । अन्नम् । विराडिति वि–राट् । विराजीति वि–राजि । एव । अन्नाद्य इत्यन्न–अद्ये । प्रतीति । तिष्ठति ॥ २०

अध्यवसाययन्ति ह्येतद्विश्वामित्रस्यादधत
द्वे लोकस्य लोकेषु सप्तचत्वारिꣳशच्च ॥ ३ ॥

[1]वीति । वै । एतौ । द्विषाते इति । यः । च । पुरा । अग्निः । यः । च । उखायाम् । समिति । इतम् । इति । चतसृभिरिति चतसृ–भिः । सम् ।

---

[1]वि वा इत्यादि ॥ पुरातनो गार्हपत्याग्निः प्रतिसमेधीयः उख्योऽन्यः । एतौ सह न्युप्यमानौ द्विषाते । तस्मात् 'समितं'* इति चतसृभिः संनिवपति । एतदुक्तं भवति—उख्यमध्वर्युरादत्ते । प्रतिसमेधनीयं प्रतिप्रस्थाता । तौ पुरस्तात् प्रत्यञ्चौ गार्हपत्यचितौ अग्नी संनिवपत इति ॥

---

*सं. ४-२-५.

भिस्सं नि वंपति चत्वारि छन्दांꣳसि छन्दांꣳसि खलु वा अग्नेः प्रियास्तनूः प्रियथैवैनौं तनुवा सꣳ शांस्ति समितमित्यांह तस्माद्ब्रह्मंणा क्षत्रꣳ समेंति यथ्सं न्युप्यं विहरंति तस्माद्ब्रह्मंणा क्षत्रं व्येंत्यृतुभिः ॥ २१ ॥ वा एतं दीक्षयन्ति स ऋतुभिरेव

नीतिं । वपति । [2]चत्वारिं । छन्दांꣳसि । छन्दांꣳसि । खलु । वै । अग्नेः । प्रिया । तनूः । प्रियया । एव । एनौ । तनुवां । समितिं । शास्ति । समितिं । इतम् । इतिं । आह । तस्मांत् । ब्रह्मंणा । क्षत्रम् । सामितिं । एति । यत् । संन्युप्येतिं सं—न्युप्यं । विहरतीतिं वि—हरंति । तस्मांत् । ब्रह्मंणा । क्षत्रम् । वीतिं । एति । [3]ऋतुभिरित्यृतु—भिः ॥२१॥ वै । एतम् । दीक्षयन्ति । सः । ऋतुभिरित्यृतु—भिः

---

[2]चत्वारीत्यादि ॥ गतम् । तस्मादिति । अग्न्योः सुसङ्गतत्वेन ब्रह्मक्षत्रयोः सुसङ्गतत्वम् । व्येतीति । संन्युप्य सह न्युप्य विहरणात् ब्रह्माधीनप्रकाशं पृथक्त्वेन स्थितं क्षत्रमिति ॥

[3]ऋतुभिर्वा इत्यादि ॥ यथोक्तं ‘षड्भिर्दीक्षयति’* इत्यादि

*सं. ५-१-९.

विमुच्यो मातेव पुत्रं पृथिवी पुरीष्यमित्याहर्तुभिरेवैनं दीक्षयित्वर्तुभिर्वि मुञ्चति वैश्वानर्या शिक्यमा दत्ते स्वदयत्येवैनान्नैरृतीः कृष्णास्तिस्रस्तुषपक्का भवन्ति निरृत्यै

एव । विमुच्य इति वि-मुच्यः । माता । इव । पुत्रम् । पृथिवी । पुरीष्यम् । इति । आह । ऋतुभिरित्यृतु-भिः । एव । एनम् । दीक्षयित्वा । ऋतुभिरित्यृतु-भिः । वीति । मुञ्चति । वैश्वानर्या । शिक्यम् । एति । दत्ते । स्वदयति । एव । एनत् । [4]नैरृतीरिति नैः-ऋतीः । कृष्णाः । तिस्रः । तुषपक्का इति तुष-पक्काः । भवन्ति । निरृत्या

स इदानीं ऋतुभिरेव विमुच्यः विमोक्तव्यः । छान्दसः क्विप् । तस्मात् 'मातेव पुत्रं'* इति शिक्यात् उखां निरूहति । अग्नियजमानयोरभेद उपचर्यते । ऋतुभिरेव कृतदीक्षस्य ऋतुभिरेव विमोकः कृतो भवति 'ऋतुभिः संविदानः'* इति दर्शनात् । संवेदनमैकमत्यम् । स्वदयत्येवेति । वैश्वानरसम्बन्धात् स्वाद्वेव करोत्येनच्छिक्यं यजमानस्य ॥

[4]नैरृतीरित्यादि ॥ नैरृत्यः । पूर्ववत्पूर्वसवर्णदीर्घत्वम् । तिस्र इति । 'तिसृभ्यो जसः' इति उदात्तत्वम् । तुषैः पक्काः

*सं. ४-२-५.

वा एतद्भागधेयं यत्तुषा निर्ऋत्यै
रूपं कृष्णꣳ रूपेणैव निर्ऋतिं नि-
रवदयत इमां दिशं यन्त्येषा॥२२॥
वै निर्ऋत्यै दिक्स्वायामेव दिशि
निर्ऋतिं निरवदयते स्वकृत इरि-

इति निः—ऋत्यै । वै । एतत् । भागधेयमिति भाग—धेयम् । यत् । तुषाः । निर्ऋत्या इति निः—ऋत्यै । रूपम् । कृष्णम् । रूपेण । एव । निर्ऋतिमिति निः—ऋतिम् । निरवदयत इति निः—अवदयते । [5]इमाम् । दिशम् । यन्ति । एषा ॥२२॥ वै । निर्ऋत्या इति निः—ऋत्यै । दिक् । स्वायाम् । एव । दिशि । निर्ऋतिमिति निः—ऋतिम् । निरवदयत इति निः—अवदयते । [6]स्वकृत

तुषपक्काः । तृतीयायाः पूर्वपदप्रकृतिस्वरत्वम् । निरृत्या इति षष्ठ्यर्थे चतुर्थी । निरवदयत इति । निपूर्वात्सा (?) निस्सारयति । रूपेणेति । रूपानुसारेण गच्छति ॥

[5]इमामिति ॥ दक्षिणापरामङ्गुल्या निर्दिशति । एषा वा इत्यादि । गतम् ॥

[6]स्वकृत इरिण इति ॥ नैसर्गिकमूषरम् । प्रदरो भूमिबिलम् । तत्र तास्तिस्र इष्टका उपदधाति ॥

ण उप॑ दधाति प्रदूरे वै॒तद्वै निर्ऋ॑-
त्या आ॒यत॑नꣳ स्व ए॒वायत॑ने निर्-
ऋ॑तिं नि॒रव॑दयते शि॒क्य॑म॒भ्युप॑ द-
धाति नैर्ऋ॒तो वै पाशा॑स्सा॒क्षादे॒वैनं॑
निर्ऋतिपा॒शान्मु॑ञ्चति ति॒स्र उप॑ द-
धाति त्रेधाविहि॒तो वै पुरु॑षो॒ यावा॑-

इति॒ स्व-कृ॒ते । इरि॑णे । उपेति॑ । द॒धाति॒ । प्र॒दू॒र इति॑ प्र-दू॒रे । वा॒ । ए॒तत् । वै । निर्-ऋ॑त्या इति॒ निः-ऋ॒त्याः । आ॒यत॑न॒मित्या॑-यत॑नम् । स्वे । ए॒व । आ॒यत॑न॒ इत्या॑-यत॑ने । निर्ऋ॑ति॒मिति॒ निः-ऋ॒ति॒म् । नि॒रव॑दयत॒ इति॑ निः-अव॑दयते । [7]शि॒क्य॑म् । अ॒भि । उपेति॑ । द॒धाति॒ । नै॒र्ऋ॒त इति॑ नैः-ऋ॒तः । वै । पाशाः॑ । सा॒क्षादिति॑ स-अ॒क्षात् । ए॒व । ए॒न॒म् । नि॒र्ऋ॒ति॒पा॒शादिति॑ निर्ऋति-पा॒शात् । मु॒ञ्च॒ति॒ । ति॒स्रः । उपेति॑ । द॒धाति॒ । त्रे॒धावि॒हि॒त इति॑ त्रेधा-वि॒हि॒तः । वै ।

[7]शिक्यमिति ॥ शिक्यसमीपे पराचीरुपदधाति 'नमस्सुते निरृक्ते'* इति तिसृभिः । तिस्र इति स्रादेशोन्तोदात्त इष्यते । 'उदात्तयणः' इति शस उदात्तत्वम् । त्रेधेति । त्रिभिः देहभागैः ऊर्ध्वाधोमध्यभागैः ॥

* सं. ४-२-५.

नेव पुरुषस्तस्मान्निरृतिमव यज-
ते पराचीरुप ॥२३॥ दधाति परा-
चीमेवास्मान्निरृतिं प्रणुदतेऽप्रती-
क्षमा यन्ति निरृत्या अन्तर्हित्यै
मार्जयित्वोप तिष्ठन्ते मेध्यत्वाय
गार्हपत्यमुप तिष्ठन्ते निरृतिलोक

पुरुषः । यावान् । एव । पुरुषः । तस्मात् । निरृतिमिति निः—ऋतिम् । अवेति । यजते । [8]पराचीः । उपेति ॥२३॥ दधाति । पराचीम् । एव । अस्मात् । निरृतिमिति निः—ऋतिम् । प्रेति । नुदते । अप्रतीक्षमित्यप्रति—ईक्षम् । एति । यन्ति । निरृत्या इति निः—ऋत्याः । अन्तर्हित्या इत्यन्तः—हित्यै । [9]मार्जयित्वा । उपेति । तिष्ठन्ते । मेध्यत्वायेति मेध्य—त्वाय । गार्हपत्यमिति गार्ह—

[8]पराचीरिति ॥ प्रत्यग्र इति । पराचीमिति । अपुनरावृत्ताम् । अप्रतीक्षमिति । पृष्ठतः प्रतिनिवृत्तां रक्षणमकुर्वन्तः आगच्छन्ति । आभीक्ष्ण्ये णमुल् । अन्तर्हित्या इति । ‘अन्तरपरिग्रहे’ इति गतित्वात् ‘तादौ च’ इति गतेः प्रकृतिस्वरत्वम् ॥

[9]मार्जयित्वोप तिष्ठन्ते इति ॥ ‘असुन्वन्तं’* इति द्वाभ्यां निरृ-

*सं. ४-२-५.

एव चरित्वा पूता देवलोकमुपावर्तन्त
एकयोपं तिष्ठन्त एकधैव यजमाने
वीर्यं दधाति निवेशनस्संगमनो व-
सूनामित्याह प्रजा वै पशवो वसु
प्रजयैवैनं पशुभिस्समर्धयन्ति ॥२४

पत्यम् । उपेति । तिष्ठन्ते । निर्ऋतिलोक इति निर्ऋति-लोके । एव । चरित्वा । पूताः । देवलोकमिति देव-लोकम् । उपावर्तन्त इत्युप-आवर्तन्ते । एकया । उपेति । तिष्ठन्ते । एकधेत्येक-धा । एव । यजमाने । वीर्यम् । दधाति । निवेशन इति नि-वेशनः । सङ्गमन इति सं-गमनः । वसूनाम् । इति । आह । प्रजेति प्र-जा । वै । पशवः । वसु । प्रजयेति प्र-जया । एव । एनम् । पशुभिरिति पशु-भिः । सामिति । अर्धयन्ति ॥२४

ऋतुभिरेषा पराचीरुपाष्टाचत्वारिंशच्च ॥४॥

---

ऋतिमुपतिष्ठते । गार्हपत्यमिति । 'निवेशनः'* इत्येतया । निर्ऋतिलोक एवेत्यादि । गतम् ॥

इति पञ्चमे द्वितीये चतुर्थोनुवाकः.

---

*सं. ४-२-५.

पुरुषमात्रेण वि मिंमीते यज्ञेन वै पुरुंषस्संमिंतो यज्ञपरुषैवैनं वि मिं- मीते यावान्पुरुंष ऊर्ध्वबाहुस्तावां- न्भवत्येतावद्वै पुरुंषे वीर्यं वीर्येणैवैनं वि मिंमीते पक्षी भंवति न ह्यंपक्षः

[1]पुरुषमात्रेणेतिं पुरुष-मात्रेणं । वीतिं । मि- मीते । यज्ञेनं । वै । पुरुंषः । सम्मित इति सं- मितः । यज्ञपरुषेतिं यज्ञ-परुषां । एव । एनम् । वीति । मिमीते । यावान् । पुरुंषः । ऊर्ध्वबाहुरि- त्यूर्ध्व-बाहुः । तावान् । भवति । एतावंत् । वै । पुरुंषे । वीर्यम् । वीर्येण । एव । एनम् । वीतिं । मिमीते । [2]पक्षी । भवति । न । हि । अपक्षः ।

[1]अथाग्निविमानमारभ्यते—पुरुषमात्रेणेति ॥ पुरुषप्रमाणेन वेणुना अग्निं विमिमीते । 'प्रमाणे द्वयसच्' इत्यादिना मात्रच् । यज्ञेन सम्मितः तुल्यः पुरुषः । तस्माद्यज्ञपरुषा यज्ञपर्वणा यज्ञमात्रयैव अग्निविमानं कृतं भवति । यावानिति । यावान् पुरुषो यजमानः अग्निं चेष्यमाण ऊर्ध्वबाहुर्भवति तावान् तत्परिमाणो वेणुर्भवति । तावता वेणुना अग्निं विमिमीते । एतावद्वा इति । यावानूर्ध्वबाहुः तावत्येव पुरुषस्य वीर्यं समाप्तं नातः परं क्रमते । एवमत्र पञ्चारत्निः पुरुषो बोधितो भवति ॥

[2]पक्षीति ॥ 'वयसां वा एष प्रतिमया चीयते'* इति ।

*सं. ५-५-३.

पतिंतुमरूहंत्यरत्निनां पक्षौ द्राघीया-
ऽंसौ भवतस्तस्मात्पक्षप्रंवयाऽंसि
वयाऽंसि व्याममात्रौ पक्षौ च पु-
च्छं च भवत्येतावद्वै पुरुषे वीर्यम् ॥
२५ ॥ वीर्यसंमितो वेणुना वि मिं-

पतितुम् । अर्हंति । अरत्निनां । पक्षौ । द्राघीयाऽं-
सौ । भवतः । तस्मात् । पक्षप्रंवयाऽंसीति पक्ष-
प्रवयाऽंसि। वयाऽंसि । [3]व्याममात्राविति व्याम-
मात्रौ । पक्षौ । च । पुच्छम् । च । भवति । एता-
वत् । वै । पुरुषे । वीर्यम् ॥ २५ ॥ वीर्यसम्मित
इति वीर्य-सम्मितः । वेणुना । वीति । मिमीते ।

---

अत्र हेतुमाह—न हीति अरत्निनेत्यादि । चतुर्विंशतिरङ्गुलयोऽर-त्निः । तदर्धं प्रादेशः । अरत्निना पक्षौ द्राघीयांसौ दीर्घतरौ पुरुषौ भवतः । प्रियस्थिरादिना द्राघादेशः । यथोक्तं—'चतुर आत्मनि पुरुषानव मिमीते पुरुषं दक्षिणे पक्षे पुरुषं पुच्छे पुरुषमुत्तरेऽरत्निना दक्षिणतो दक्षिणं पक्षं प्रवर्धयत्येवमुत्तरत उत्तरं प्रादेशेन वितस्त्या वा पश्चात्पुच्छं' इति । स एष सप्त-विधः प्राकृतोऽग्निः अत्रैकविधप्रभृतयः एकशतविधान्ता अग्नयः । तत्र सप्तविधबोधितानि पुच्छादिन्यूनानां एकविधानि नाना भवन्ति । अष्टविधप्रभृतीनां यदन्यत्सप्तभ्यः तत्सप्तधा वि-भज्य प्रतिपुरुषमावेशयेत्, प्रकृतिविकारस्य आश्रितत्वात् । त-

मीत आग्नेयो वै वेणुस्सयोनित्वाय यजुंषा युनक्ति यजुंषा कृषति व्यावृत्त्यै षड्गवेनं कृषति षड्वा ऋतवं ऋ-

आग्नेयः। वै। वेणुः। सयोनित्वायेति सयोनि-त्वायं। यजुंषा। युनक्ति। यजुंषा। कृषति। व्यावृत्त्या इति वि-आवृत्त्यै। [4]षड्गवेनेति षट्-गवेनं। कृषति। षट्।

स्मादिति। पक्षयोः प्रवयांसि भूतानि प्रभूतबन्धानि पक्षप्रवयांसि। सप्तमीपूर्वपदप्रकृतिस्वरत्वम्। वयांसि पक्षिणः॥

[3]व्याममात्राविति॥ पञ्चारत्निर्व्यामः। चतुररत्निरित्येके। व्याममात्रौ पक्षौ भवत इति। वक्ष्यमाणस्य नतिः पुच्छं च भवति। व्याममात्रस्य प्रकृतस्य नतिः। यद्वा—व्याममात्रौ पक्षौ व्याममात्रं पुच्छं तदिदं भवति। नपुंसकस्य शेषः एकवद्भावस्य। वीर्यसम्मित इति। वीर्येणैव संमितोऽग्निर्भवति। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम्। आग्नेय इति। अग्नेस्स्वभूतः। 'सर्वत्राग्निकलिभ्याम्' इति ढक्। यथोक्तम्—'अग्निर्देवेभ्यो निलायत स वेणुं प्राविशत्'* इति। यजुषेति। मन्त्रेण योजनं लक्षणं च कुर्यात् लौकिकव्यावृत्त्यर्थम्। यजुश्शब्दो मन्त्रवचनः, यथा 'व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियते'† इति। तत्र हि 'इमामगृभ्णन्'‡ इति मन्त्रो यजुश्शब्देनोच्यते। एतदुक्तं भवति—'सीरा युंजन्ति'§ इति द्वाभ्यां सीरं युनक्ति। 'लाङ्गलं पवीरवम्'§ इति द्वाभ्यां कृषति॥

[4]षड्गवेनेति॥ षण्णां गवां समाहार इति षड्गवम्। 'गोर-

*सं. ५-१-१[8]. †सं. ५-१-२[1]. ‡सं. ४-१-२. §सं. ४-२-५.

तुभिरेवैनं कृषति यद्द्वादशगवेन संवथ्सरेणैवेयं वा अग्नेरतिदाहादबिभेथ्सैतद्द्विगुणमपश्यत्कृष्टं चाकृष्टं च ततो वा इमां नात्यदहद्यत्कृष्टं चाकृष्टं च ॥ २६ ॥ भवत्यस्या अनतिदाहाय द्विगुणं त्वा अग्निमुद्यन्तु-

वै । ऋतवः । ऋतुभिरित्यृतु–भिः । एव । एनम् । कृषति । यत् । द्वादशगवेनेति द्वादश–गवेन । संवत्सरेणेति सं–वत्सरेण । एव । [5]इयम् । वै । अग्नेः । अतिदाहादित्यति–दाहात् । अबिभेत् । सा । एतत् । द्विगुणमिति द्वि–गुणम् । अपश्यत् । कृष्टम् । च । अकृष्टम् । च । ततः । वै । इमाम् । न । अतीति । अदहत् । यत् । कृष्टम् । च । अकृष्टम् । च ॥ २६ ॥ भवति । अस्याः । अनतिदाहायेत्यनति–दाहाय । द्विगुणमिति द्वि–गुणम् । तु । वै । अग्निम् । उद्यन्तुमित्युत्–यन्तुम् । अर्ह-

तद्धित लुकि' इत्यच् समासान्तः । यद्द्वादशगवेनेति । कृषतीत्येव । संवत्सरेणैवेति । कर्षणं कृतं भवति ॥

[5]इयं वा इत्यादि ॥ द्वौ गुणौ द्विगुणम् । कृष्टं कृष्टलक्षणं अतिदाहनिवृत्त्यै भवति पृथिव्याः । द्विगुणमिति । द्वौ गुणौ

मरूह्नतीत्याहुर्यत्कृष्टं चाकृष्टं च भ-
वंत्यग्नेरुद्यंत्या एतावंन्तो वै पशवों
द्विपादंश्च चतुंष्पादश्च तान्यत्प्राचं
उथ्सृजेद्रुद्रायापि दध्याद्यद्दंक्षिणा पि-
तृभ्यो नि धुंवेद्यत्प्रतीचो रक्षाꣳसि

ति । इति । आहुः । यत् । कृष्टम् । च । अकृं-
ष्टम् । च । भवंति । अग्नेः । उद्यंत्या इत्युत्-य-
त्यै । [6]एतावंन्तः । वै । पशवंः । द्विपाद् इति द्वि-
पादंः । च । चतुंष्पाद् इति चतुंः-पादः । च ।
तान् । यत् । प्राचंः । उत्सृजेदित्युंत्-सृजेत् । रु-
द्रायं । अपीति । दध्यात् । यत् । दक्षिणा । पितृ-
भ्य इति पितृ-भ्यः । नीति । धुवेत् । यत् । प्र-

अग्निमुद्यन्तुं उत्थापयितुं अर्हतः योग्यौ भवतः नैकः; अनौ-
चित्यभयात्, अशक्तेर्वा । तस्मान्न द्वैगुण्यं अग्नेरुद्यमनाय ॥

[6]एतावन्त इत्यादि ॥ तान् सर्वानपि पशून् द्विपादश्च चतु-
ष्पादश्च रुद्रायापिदध्यात् । रुद्रार्थमपिहितान् कुर्यात् यथैतान्
रुद्रोभिध्यायति तथा कुर्यात् । यदि प्राच उत्सृजेत् बलीवर्दान्
कृष्यनन्तरम् । 'द्वित्रिभ्यां पद्दन्' इति द्विपद उत्तरपदाद्युदात्त-
त्वम् । 'सङ्ख्यासुपूर्वस्य' इति लोपः समासान्तः । यद्दक्षिणे-
ति । उत्सृजेदित्येव । 'दक्षिणादाच्' । निधुवेदिति । प्रेर-
येत् । धू विधूनने, तौदादिकः । यत्प्रतीच इत्यादि ॥ गतम् ।

हन्युरुदींच उथ्सृंजत्येषा वै देवमनुष्याणाꣳ शान्ता दिक् ॥ २७ ॥ तामेवैनाननूथ्सृंजत्यथो खल्विमां दिशमुथ्सृंजत्यसौ वा आदित्यः प्रा-

तीचः । रक्षाꣳसि । हन्युः । उदींचः । उदिति । सृजति । एषा । वै । देवमनुष्याणामिति देव–मनुष्याणाम् । शान्ता । दिक् ॥ २७ ॥ ताम् । एव । एनान् । अनु । उदिति । सृजति । अथो इति । खलु । इमाम् । दिशम् । उदिति । सृजति । [7]असौ । वै । आदित्यः । प्राण इति प्र–अनः । प्राणमिति प्र–अनम् । एव । एनान् । अनु । उदिति । सृजति ।

---

तस्मादुदीच उत्सृजति उदगभिमुखान् उत्कालयति । एषा खलूदीची देवमनुष्याणां शान्ता सुखहेतुः दिक् । तस्मात्तामेवानूत्सृष्टा भवन्ति । अथो अपिच खलु इमामधरां दिशं उत्सृजति यदा उत्तरां दिशं गच्छति ॥

[7]ततः किमित्याह—असौ वा इति ॥ योऽयमुत्तरस्यां दिशि वर्तते असावादित्यः स्वयमेव प्राणः । तस्मात् प्राणमेवानु एते उत्सृष्टा भवन्ति । गोळस्योपरि प्रदक्षिणं वर्तमान आदित्यो दक्षिणगोळवर्तिनां मनुष्याणां विपर्यस्तोपरिभागानामुत्तरो भवति । गोळाभिप्रायेणेदमुक्तम् ॥

णः प्राणमेवैनाननूथ्सृजति दक्षि-
णा पर्यावर्तन्ते स्वमेव वीर्यमनु प-
र्यावर्तन्ते तस्माद्दक्षिणोऽर्ध आत्मनो
वीर्यावत्तरोऽथो आदित्यस्यैवावृत-
मनु पर्यावर्तन्ते तस्मात्पराञ्चः प-
शवो वि तिष्ठन्ते प्रत्यञ्च आ वर्तन्ते

[8]दक्षिणा । पर्यावर्तन्त इति परि–आवर्तन्ते । स्वम् । एव । वीर्यम् । अन्विति । पर्यावर्तन्त इति परि–आवर्तन्ते । तस्मात् । दक्षिणः । अर्धः । आत्मनः । वीर्यावत्तर इति वीर्यावत्–तरः । अथो इति । आदित्यस्य । एव । आवृतमित्या–वृतम् । अन्विति । पर्यावर्तन्त इति परि–आवर्तन्ते । तस्मात् । पराञ्चः । पशवः । वीति । तिष्ठन्ते । प्रत्यञ्चः । एति । वर्तन्ते ।

[8]दक्षिणा पर्यावर्तन्त इति ॥ उत्कृष्टाः ते प्रदक्षिणं परितः पुनरावर्तन्ते । व्याख्यातमिदम्* । आदित्यस्येति । आदित्यो हि उदीचीं गत्वा पुनःपुनः पर्यावर्तते । तस्मादिति । पराचीनगतयः पशवो वितिष्ठन्ते विश्लिष्यन्ति । प्राचीनगतास्तु आवर्तन्ते । 'समवप्रविभ्यस्थः' इत्यात्मनेपदम् । पराञ्च इत्यत्र 'अनिगन्तोऽञ्चतावप्रत्यये' इति गतेः प्रकृतिस्वरत्वम् ॥

*सं. ५-२-१. [8]

तिस्रास्तिस्रस्सीताः ॥ २८ ॥ कृषति त्रिवृतमेव यज्ञमुखे वि यातयत्योषधीर्वपति ब्रह्मणाऽन्नमवरुन्धेऽर्केऽर्कश्चीयते चतुर्दशभिर्वपति सप्त ग्राम्या

[9]तिस्रस्तिस्र इति तिस्रः–तिस्रः । सीताः ॥ २८ ॥ कृषति । त्रिवृतमिति त्रि–वृतम् । एव । यज्ञमुख इति यज्ञ–मुखे । वीति । यातयति । [10]ओषधीः । वपति । ब्रह्मणा । अन्नम् । अवेति । रुन्धे । अर्के । अर्कः । चीयते । चतुर्दशभिरिति चतुर्दश–भिः । वपति ।

[9]तिस्रस्तिस्र इति ॥ पुच्छादारभ्य प्राचीस्तिस्रस्तिस्रः सीताः कृषतीति यावच्छिरोन्तं उत्तरार्ये श्रोणेर्दक्षिणमंसं अभितिस्रः दक्षिणार्ये श्रोणेरुत्तरमंसं अभिदक्षिणात् पक्षात् उत्तरं पक्षमभि द्वादश सीताः कृषति । त्रिवृतमिति । द्वादशसु नवानां विद्यमानत्वात्, त्रित्वान्वयाच्च ॥

[10]ओषधीरिति ॥ औदुम्बरे द्रोणे सर्वौषधं दध्ना अन्येन समुदायुक्तं भवतीति । तत्सीतासु वपति—ब्रह्मणेति । परिबृढेन अनेन कर्मणा अन्नं लभते । अर्केऽर्क इति । अर्चनीये स्थाने अर्चनीयः अग्निश्चीयते । तस्मादोषधिवापेन स्थानस्यार्चनीयत्वं कृतं भवति । अर्च्यत इति अर्चतेः कर्मणि घञ् । ‘चजोः कुघिण्यतोः’ इति कुत्वम् । उञ्छादिर्द्रष्टव्यः । चतुर्दशभिरिति । ‘या जाता ओषधयः’* इत्यादिभिः ऋग्भिः ।

*सं. ४-२-६.

ओषधयस्सप्तारण्या उभयीषामव-
रुद्ध्या अन्नस्यान्नस्य वपत्यन्नस्यान्न-
स्यावरुद्धयै कृष्टे वपति कृष्टे ह्योष-
धयः प्रतितिष्ठन्त्यनुसीतं वपति प्र-

सप्त । ग्राम्याः । ओषधयः । सप्त । आरण्याः । उभ-
यीषाम् । अवरुध्या इत्यव–रुध्यै । अन्नस्यान्नस्येत्य-
न्नस्य–अन्नस्य । वपति । अन्नस्यान्नस्येत्यन्नस्य–अ-
न्नस्य । अवरुध्या इत्यव–रुध्यै । [11]कृष्टे । वपति ।
कृष्टे । हि । ओषधयः । प्रतितिष्ठन्तीति प्रति–तिष्ठ-
न्ति । अनुसीतमित्यनु–सीतम् । वपति । प्रजात्या

'झल्युपोत्तमम्' इत्युपोत्तमस्योदात्तत्वम् । सप्तेति । तिलमाष-व्रीहियवाः प्रियङ्गवणवो गोधूमाः सप्त ग्राम्या ओषधयः । श्यामाकाश्च नीवाराश्च जर्तिलाश्च गवीधुकाश्च हाकुकाश्च वेणुयवाश्च वास्त्यानि च सप्तारण्या ओषधयः । अन्नस्यान्नस्येति । सर्वान्नपानेन सर्वान्नलाभः । 'अनुदात्तं च' इति द्वितीयोऽन्नशब्दः उदात्तः । 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥

[11]कृष्ट इत्यादि ॥ गतम् । अनुसीतं वपति सीतानुकूल्येन तत्प्रजात्यै भवति । द्वादशस्विति । पुच्छादारभ्य अग्रे तिस्रः प्राचीः सीतासु वपति 'या जाता ओषधयः'* इति तिसृभिः, अथ उत्तरायै श्रोणेर्दक्षिणमंसं अभितिस्रः सीता वपति—'ओषधी-

*सं. ४-२-६.

जात्यै द्वादशसु सीतासु वपति द्वादश मासास्संवत्सरस्संवत्सरेणैवास्मा अन्नं पचति यदग्निचित् ॥२१
अनवरुद्धस्याश्नीयादवरुद्धेन व्यृध्येत ये वनस्पतीनां फलग्रहयस्तानि-

इति प्र–जात्यै । द्वादशस्विति द्वादश–सु । सीतासु । वपति । द्वादश । मासाः । संवत्सर इति सं–वत्सरः । संवत्सरेणेति सं–वत्सरेण । एव । अस्मै । अन्नम् । पचति । [12]यत् । अग्निचिदित्यग्नि–चित् ॥ २१ ॥ अनवरुद्धस्येत्यनव–रुद्धस्य । अश्नीयात् । अवरुद्धेनेत्यव–रुद्धेन । वीति । ऋध्येत । ये । वनस्पतीनाम् । फलग्रहय इति फल–ग्रहयः । तान् ।

रिति मातर इति '* तिसृभिः । अथ दक्षिणायै श्रोणेरुत्तरमंसं अभितिस्रः सीता वपति 'यदोषधयः '* इति तिसृभिः । अथ दक्षिणात्पक्षादुत्तरमंसं अभितिस्रः सीता वपति 'उच्छुष्माः '* इति पञ्चभिः । पूर्ववदुपोत्तमस्योदात्तत्वम् ॥

[12]यदग्निचिदिति ॥ अवरुद्धं यागात्प्रागेव सात्कृतं नातोन्यदपरुद्धमस्य स्यात् । अपरोधव्यजीवी स्यात् । तस्मात्फलेग्रहीन्वनस्पतीनिध्मे उपनह्य प्रोक्षणेनानवरुद्धमपि सर्वमवरुद्धं भवति । अपिशब्द इवार्थे । ससाधनां क्रियां उपसर्ग आहेति उपनह्येति लभ्यते । 'फलेग्रहिरात्मम्भरिश्च ' इतीन्प्रत्ययः । एकारस्तु पाठे नाद्रियते । वनस्पतिशब्दे सुट्-

*सं. ४-२-६.

ध्मेऽपि प्रोक्षेदनवरुद्धस्यावरुद्ध्यै दि-
ग्भ्यो लोष्टान्त्समस्यति दिशामेव
वीर्यमवरुद्ध्य दिशां वीर्येऽग्निं चि-
नुते यं द्विष्याद्यत्र स स्यात्तस्यै दि-
शो लोष्टमा हरेदिषमूर्जमहमित आ
ददे इतीषमेवोर्जं तस्यै दिशोऽव रु-

इध्मे । अपि । प्रेति । उक्षेत् । अनवरुद्धस्येत्यनव–रुद्धस्य । अवरुध्या इत्यव–रुध्यै । [13]दिग्भ्य इति दिक्–भ्यः । लोष्टान् । समिति । अस्यति । दिशाम् । एव । वीर्यम् । अवरुध्येत्यव–रुध्य । दिशाम् । वीर्ये । अग्निम् । चिनुते । यम् । द्विष्यात् । यत्र । सः । स्यात् । तस्यै । दिशः । लोष्टम् । एति । हरेत् । इषम् । ऊर्जम् । अहम् । इतः । एति । ददे । इति । इषम् । एव । ऊर्जम् । तस्यै ।

स्वरावुक्तौ ‘गतिरनन्तरः’ ‘तादौ च’ इति उपशब्दस्य प्रकृतिस्वरत्वम् ॥

[13]दिग्भ्य इति ॥ प्राङ्द्रुत्वा बहिर्लोष्टमादाय तमन्तश्शकटं न्यस्याति ॥

इति पञ्चमे द्वितीये पञ्चमोऽनुवाकः.

न्धे क्षोधुको भवति यस्तस्यां दिशि भवंत्युत्तरवेदिमुपं वपत्युत्तरवेद्याᳪ ह्यंग्निश्चीयतेऽथों पशवो वा उत्तरवेदिः पशूनेवावं रुन्धेऽथों यज्ञपुरुषोऽनंन्तरित्यै ॥ ३० ॥

अग्ने तव श्रवो वय इति सिकंता नि

दिशः । अवेतिं । रुन्धे । क्षोधुंकः । भवति । यः । तस्याम् । दिशि । भवंति । उत्तरवेदिमित्युंत्तर–वेदिम् । उपेतिं । वपति । उत्तरवेद्यामित्युंत्तर–वेद्याम् । हि । अग्निः । चीयतें । अथो इतिं । पशवंः । वै । उत्तरवेदिरित्युंत्तर–वेदिः । पशून् । एव । अवेतिं । रुन्धे । अथो इतिं । यज्ञपुरुष इतिं यज्ञ–पुरुषंः । अनंन्तरित्या इत्यनंन्तः–इत्यै ॥ ३० ॥

च भवत्येतावद्वै पुरुषे वीर्यं यत्कृष्टं चाकृंष्टं च दिकसीतां अग्निचिदव पञ्चविंᳪशतिश्च ॥५॥

[1]अग्ने । तवं । श्रवंः । वयंः । इतिं । सिकंताः । नीतिं । वपति । एतत् । वै । अग्नेः । वैश्वानरस्यं ।

---

[1]अग्ने तव श्रवो वय इत्यादि ॥ व्याघारणान्तं कृत्वा तत्रा-

वंपत्येतद्वा अग्नेर्वैश्वानरस्यं सूक्तꣳ सूक्तेनैव वैश्वानरमवं रुन्धे षड्भिर्नि वंपति षड्वा ऋतवंस्संवथ्सरस्संवथ्सरोंऽग्निर्वैश्वानरस्साक्षादेव वैश्वानरमवं रुन्धे समुद्रं वै नामैतच्छन्दंस्समुद्रमनुं प्रजाः प्र जांयन्ते यदे-

सूक्तमितिं सु-उक्तम् । सूक्तेनेतिं सु-उक्तेनं । एव । वैश्वानरम् । अवेतिं । रुन्धे । षड्भिरितिं षट्-भिः । नीतिं । वपति । षट् । वै । ऋतवंः । संवत्सर इतिं सं-वत्सरः । संवत्सर इतिं सं-वत्सरः । अग्निः । वैश्वानरः । साक्षादितिं स-अक्षात् । एव । वैश्वानरम् । अवेतिं । रुन्धे । [2]समुद्रम् । वै । नामं । एतत् । छन्दंः । समुद्रम् । अन्वितिं । प्र-

नेन सूक्तेन षडृचेन सिकता निवपति । विश्वेषां नराणां स्वामित्वेन सम्बन्धी वैश्वानरः ॥

[2]समुद्रं वा इति ॥ समुन्दनशीलं समुद्रं अवस्थितस्वरूपम् । तथा हि—प्रथमा विष्टारपङ्क्तिः, मध्यमयोः पादयोः द्वादशाक्षरत्वात् । द्वितीयाऽस्तारपङ्क्तिः, अयुक्पादयोः द्वादशाक्षरत्वात् । यथा द्वितीया तथा तृतीया यथा प्रथमा तथा चतुर्थी उपरिष्टाज्ज्योतिर्जगती पञ्चमी, चतुर्थस्य पादस्याष्टाक्षरत्वात् । यथा द्वितीय

तेन सिकंता निवपंति प्रजानां प्रजननायेन्द्रः ॥ ३१ ॥ वृत्राय वज्रं प्राहंरत्थ्स त्रेधा व्यंभवथ्स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं येऽन्तश्शरा अशीर्यन्त ताश्शर्करा अभवन्तच्छर्कराणाꣳ शर्करत्वं वज्रो वै

जा इति प्र–जाः । प्रेति । जायन्ते । यत् । एतेन । सिकंताः । निवपतीति नि–वपंति । प्रजानामिति प्र–जानाम् । प्रजननायेति प्र–जननाय । [3]इन्द्रः ॥ ३१ ॥ वृत्राय । वज्रम् । प्रेति । अहरत् । सः । त्रेधा । वीति । अभवत् । स्फ्यः । तृतीयम् । रथः । तृतीयम् । यूपः । तृतीयम् । ये । अन्तश्शरा इत्यन्तः–शराः । अशीर्यन्त । ताः । शर्कराः । अभवन्न् । तत् । शर्कराणाम् । शर्करत्वमिति शर्कर–त्वम् । [4]वज्रः । वै । शर्कराः ।

---

तृतीये तथा षष्ठीति । समुद्रमनुगताः प्रजाः प्रजायन्ते यस्मात् तस्मात्प्रजानां प्रजननानि भवन्ति एतेन सिकता निवपतः ॥

[3]इन्द्रो वृत्रायेत्यादि ॥ व्यभवत् । शराः शकलानि । शर्करत्वमिति । शरणात् शर्करः । 'त्वे च' इति ह्रस्वत्वम् ॥

[4]वज्रो वा इत्यादि ॥ तदेकदेशत्वात् । पशुरिति । तत्साध-

शर्कराः पशुरग्निर्यच्छर्कराभिरग्निं पं-
रिमिनोति वज्रेणैवास्मै पशून्परि
गृह्णाति तस्माद्वज्रेण पशवः परिगृ-
हीतास्तस्मात्स्थेयानस्थेयसो नोपं
हरते त्रिसप्ताभिः पशुकामस्य॥३२
परि मिनुयाथ्सप्त वै शीर्षण्याः

पशुः । अग्निः । यत् । शर्कराभिः । अग्निम् । परि-
मिनोतीति परि-मिनोति । वज्रेण । एव । अस्मै ।
पशून् । परीति । गृह्णाति । तस्मात् । वज्रेण ।
पशवः । परिगृहीता इति परि-गृहीताः । तस्मात् ।
स्थेयान् । अस्थेयसः । न । उपेति । हरते । [5]त्रि-
सप्ताभिरिति त्रि-सप्ताभिः । पशुकामस्येति पशु-
कामस्य ॥ ३२ ॥ परीति । मिनुयात् । सप्त ।
वै । शीर्षण्याः । प्राणा इति प्र-अनाः । प्राणा

---

नत्वात् । अग्निं आहवनीयचितेरायतनं परिमिनोति परिश्रयति
डु मिञ् प्रक्षेपणे । स्थेयान् स्थिरतरः । अस्थेयान् अर्थी, न तु स्थे-
यानितरार्थी ॥

[5]त्रिसप्ताभिरिति ॥ त्रीणि सप्तकानि यासां ताः त्रिसप्ताः ।
'बहुव्रीहौ सङ्ख्ये' इति डच् । पशुकामस्येति । 'शीलिकामि'
इति णः । पूर्वपदप्रकृतिस्वरत्वं च । त्रिणवाभिरिति । सप्तविंशत्या ।

प्राणाः प्राणाः पशवः प्राणैरेवास्मै
पशूनवं रुन्धे त्रिणवाभिर्भ्रातृव्यवत-
स्त्रिवृतमेव वज्रꣳ संभृत्य भ्रातृव्याय
प्र हरति स्तृत्या अपरिमिताभिः
परि मिनुयादपरिमितस्यावरुद्ध्यै
यं कामयेतापशुस्स्यादित्यपरिम्नित्य

इति प्र–अनाः । पशवः । प्राणैरिति प्र–अनैः । एव । अस्मै । पशून् । अवेति । रुन्धे । त्रिणवाभिरिति त्रि–नवाभिः । भ्रातृव्यवत इति भ्रातृव्य–वतः । त्रिवृतमिति त्रि–वृतम् । एव । वज्रम् । सम्भृत्येति सं–भृत्य । भ्रातृव्याय । प्रेति । हरति । स्तृत्यै । अपरिमिताभिरित्यपरि–मिताभिः । परीति । मिनुयात् । अपरिमितस्येत्यपरि–मितस्य । अवरुध्या इत्यव–रुध्यै । [6]यम् । कामयेत । अपशुः । स्यात् । इति । अपरिमित्येत्यपरि–मित्य ।

---

उक्तः समासान्तः । त्रिवृतमिति । वज्रस्य त्रिवृत्त्वमुक्तम् । स्तृत्या इति । स्तृ हिंसायाम् । अपरिमिताभिरिति । माङ् माने, ‘द्यतिस्यति’ इत्यादिना इत्वम् ॥

[6]अथ सिकताव्यूहनं विधातुमाह—यं कामयेतेत्यादि ॥ शर्करा अपरिमित्य अपरिश्रित्य सिकता व्यूहेत् पूर्वं न्युप्ता विप्रि-

तस्य शर्कराः सिकता व्यूहेदपरिगृहीत एवास्य विषूचीनꣳ रेतः परा सिञ्चत्यपशुरेव भवति ॥ ३३ ॥ यं कामयेत पशुमान्थ्स्यादिति परिमित्य तस्य शर्कराः सिकता व्यूहेत्परिगृहीत एवास्मै समीचीनꣳ रे-

तस्य । शर्कराः । सिकताः । वीति । ऊहेत् । अपरिगृहीत इत्यपरि–गृहीते । एव । अस्य । विषूचीनम् । रेतः । परेति । सिञ्चति । अपशुः । एव । भवति ॥ ३३ ॥ [7]यम् । कामयेत । पशुमानिति पशु–मान् । स्यात् । इति । परिमित्येति परि–मित्य । तस्य । शर्कराः । सिकताः । वीति । ऊहेत् । परिगृहीत इति परि–गृहीते । एव । अस्मै । समीचीनम् । रेतः । सिञ्चति । पशुमा-

येत् [न्युप्येत्] । अपरिमिते स्थाने विषूचीनं विष्वग्गतं परासिञ्चति पराभूतं सिञ्चति रेतः । तेनापशुस्स्यात् रेतोनाशात् । विष्वङ् नाना अञ्चतीति ऋत्विगादिना क्विप् । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । नकाराकारयोर्लुप्तयोः 'चौ' इति दीर्घत्वम् ॥

[7]समीचीनमिति ॥ सङ्गतमञ्चतीति सम्यक् । 'समस्समि' इति सम्यादेशः, पूर्ववत्खः, दीर्घत्वं च ॥

तंस्सिञ्चति पशुमानेव भवति सौ-
म्या व्यूहति सोमो वै रेतोधा रेत
एव तद्दधाति गायत्रिया ब्राह्मणस्यं
गायत्रो हि ब्राह्मणस्त्रिष्टुभा राज-
न्यंस्य त्रैष्टुभो हि राजन्यश्शंयुं
बार्हस्पत्यं मेधो नोपानमथ्सोऽग्निं
प्राविशत् ॥ ३४ ॥ सोऽग्नेः कृष्णो

निति पशु-मान् । एव । भवति । [8]सौम्या । वी-
ति । ऊहति । सोमः । वै । रेतोधा इति रेतः-धाः ।
रेतः । एव । तत् । दधाति । गयत्रिया । ब्राह्मण-
स्यं । गायत्रः । हि । ब्राह्मणः । त्रिष्टुभा । राज-
न्यंस्य । त्रैष्टुभः । हि । राजन्यः । [9]शंयुमिति
शं-युम् । बार्हस्पत्यम् । मेधः । न । उपेति ।
अनमत् । सः । अग्निम् । प्रेति । अविशत् ॥३४॥
सः । अग्नेः । कृष्णः । रूपम् । कृत्वा । उदिति ।

[8]सौम्येति ॥ 'आ प्यायस्व'* इत्यनया गायत्र्या । त्रिष्टुभेति । 'सं ते पयांसि'* इति । गायत्रीत्रिष्टुब्भ्यां सह जातत्वाद्गायत्रत्रैष्टुभौ ब्राह्मणराजन्यौ । त्रिष्टुब्छन्द उत्सादिः ॥

[9]शंयुमित्यादि ॥ बृहस्पतिशब्दं [बृहस्पतिपुत्रं] शंयुनामानं मेधः यज्ञो नोपानमत् । सोऽग्निं प्राविशत् । ततोऽग्नेः कृष्णमृगो

*सं. ४-२-७.

रूपं कृत्वोदायत् सोऽश्वं प्राविंशत्सो-
ऽश्वंस्यावान्तरशफोऽभवद्यदश्वंमाक्र-
मयंति य एव मेधोऽश्वं प्राविंशत्तमे-
वावं रुन्धे प्रजापंतिनाऽग्निश्चेंतव्यं
इत्यांहुः प्राजापत्योऽश्वो यदश्वंमाक्र-
मयंति प्रजापंतिनैवाग्निं चिंनुते पु-

आयत् । सः । अश्वंम् । प्रेतिं । अविशत् । सः । अश्वंस्य । अवान्तरशफ इत्यंवान्तर–शफः । अभवत् । यत् । अश्वंम् । आक्रमयतीत्यां–क्रमयंति । यः । एव । मेधंः । अश्वंम् । प्रेतिं । अविंशत् । तम् । एव । अवेतिं । रुन्धे । प्रजापंतिनेतिं प्रजा–पतिना । अग्निः । चेतव्यंः । इतिं । आहुः । प्राजापत्य इतिं प्राजा–पत्यः । अश्वंः । यत् । अश्वंम् । आक्रमयतीत्यां–क्रमयंति । [10]प्रजापंतिनेतिं प्रजा–पतिना । एव । अग्निम् । चिनुते । पुष्कर-

भूत्वा रूपं च तदीयं कृत्वा उदगच्छत् स मेधः । अनन्तरं स मेधोऽश्वं प्राविशत् । अथ सोऽश्वस्यावान्तरशफोऽभवत् । तस्मात् यदश्वं आक्रमयति चित्यायतनं अभ्यस्तात्तत् अश्वं प्रविष्टस्य मेधस्य लाभाय भवति ॥

[10]प्रजापतिना इत्यादि ॥ प्रजापतिरेवाग्निं चेतुमर्हतीति ब्रुवते

ष्करपर्णमुपं दधाति योनिर्वा अग्नेः पुंष्करपर्णꣳ सयोंनिमेवाग्निं चिंनुतेऽपां पृष्ठमसीत्युपं दधात्यपां वा एतत्पृष्ठं यत्पुंष्करपर्णꣳ रूपेणैवैनदुपं दधाति ॥ ३५ ॥

पर्णमितिं पुष्कर–पर्णम् । उपेतिं । दधाति । योनिः ।वै । अग्नेः । पुष्करपर्णमितिं पुष्कर–पर्णम् । सयोंनिमिति स–योनिम् । एव । अग्निम् । चिनुते । अपाम् । पृष्ठम् । असि । इतिं । उपेतिं । दधाति । अपाम् । वै । एतत् । पृष्ठम् । यत् । पुष्करपर्णमितिं पुष्कर–पर्णम् । रूपेणं । एव । एनत् । उपेतिं । दधाति ॥ ३५ ॥

इन्द्रंः पशुकांमस्य भवत्यविंशत्सयोंनिं विंꣳशतिश्चं ॥ ६ ॥

पुराविदः । अर्हे कृत्यः । योनिर्वा इति । 'त्वामग्ने पुष्करादधि'* इति लिङ्गात् । अपां वा एतत् पृष्ठमिति । उपरिभावसामान्यात् । रूपेणैवेति । पुष्करपर्णं यद्रूपमपां पृष्ठत्वं तेनैव रूपेण अनुकीर्तितेन उपदधाति उपधानं कृतं भवति ॥

इति पञ्चमे द्वितीये षष्ठोऽनुवाकः.

*सं. ४-१-३.

ब्रह्म जज्ञानमिति रुक्ममुप दधाति ब्रह्ममुखा वै प्रजापतिः प्रजा असृजत ब्रह्ममुखा एव तत्प्रजा यजमानस्सृजते ब्रह्म जज्ञानमित्याह तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद ब्रह्मवादिनो वदन्ति न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्य इति यत्पृथिव्यां चिन्वीत पृथि-

[1]ब्रह्म । जज्ञानम् । इति । रुक्मम् । उपेति । दधाति । ब्रह्ममुखा इति ब्रह्म-मुखाः । वै । प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र-जाः । असृजत । ब्रह्ममुखा इति ब्रह्म-मुखाः । एव । तत् । प्रजा इति प्र-जाः । यजमानः । सृजते । ब्रह्म । जज्ञानम् । इति । आह । तस्मात् । ब्राह्मणः । मुख्यः । मुख्यः । भवति । यः । एवम् । वेद । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । न । पृथिव्याम् । न । अन्तरिक्षे । न । दिवि । अग्निः । चेतव्यः । इति । यत् । पृथिव्याम् । चिन्वीत ।

[1]ब्रह्म जज्ञानमित्यादि ॥ उत्तरवेद्यां पुष्करपर्णेपूत्तरं रुक्ममुपदधाति । ब्रह्ममुखा वा इत्यादि ब्राह्मणम् । प्रथमजाभिधानेन

वीꣳ शुचाऽर्पयेन्नौषधयो न वनस्पतयः ॥ ३६ ॥ प्र जायेरन् यदन्तरिक्षे चिन्वीतान्तरिक्षꣳ शुचाऽर्पयेन्न वयाꣳसि प्र जायेरन् यद्दिवि चिन्वीत दिवꣳ शुचाऽर्पयेन्न पर्जन्यो वर्षेद्रुक्ममुप दधात्यमृतं वै हिरण्यममृत एवाग्निं चिनुते प्रजात्यै हिरण्मयं पुरुषमुप दधाति यजमा-

पृथिवीम् । शुचा । अर्पयेत् । न । ओषधयः। न । वनस्पतयः ॥ ३६ ॥ प्रेति । जायेरन्न् । यत् । अन्तरिक्षे । चिन्वीत । अन्तरिक्षम् । शुचा । अर्पयेत् । न । वयाꣳसि । प्रेति । जायेरन्न् । यत् । दिवि । चिन्वीत । दिवम् । शुचा । अर्पयेत् । न । पर्जन्यः । वर्षेत् । रुक्मम् । उपेति । दधाति । अमृतम् । वै । हिरण्यम् । अमृते । एव । अग्निम्। चिनुते । प्रजात्या इति प्र–जात्यै । [2]हिरण्मयम् । पुरुषम् । उपेति । दधाति । यजमानलोकस्येति

रुक्माभिधानात् ब्रह्मप्राथम्यं प्रजानां, प्राधान्यं च ब्राह्मणस्य ॥

[2]हिरण्मयमिति ॥ दक्षिणतः प्राञ्चं 'हिरण्यगर्भः'* इत्यनेन

*सं. ४-२-८.

नलोकस्य विधृत्यै यदिष्टकाया आ-
तृण्णमनूपदध्यात्पशूनां च यजमा-
नस्य च प्राणमपि दध्याद्दक्षिणतः॥
३७॥प्राञ्चमुप दधाति दाधार यजमा-
नलोकं न पशूनां च यजमानस्य च
प्राणमपि दधात्यथो खल्विष्टकाया
आतृण्णमनूप दधाति प्राणानामुत्सृ-

यजमान–लोकस्य । विधृत्या इति वि–धृत्यै । यत् । इष्टकायाः । आतृण्णमित्या–तृण्णम् । अ-नूपदध्यादित्यनु–उपदध्यात् । पशूनाम् । च । य-जमानस्य । च । प्राणमिति प्र–अनम् । अपीति । दध्यात् । दक्षिणतः ॥ ३७ ॥ प्राञ्चम् । उपेति । द-धाति । दाधार । यजमानलोकमिति यजमान-लोकम् । न । पशूनाम् । च । यजमानस्य । च । प्राणमिति प्र–अनम् । अपीति । दधाति । अथो इ-ति । खलु । इष्टकायाः । आतृण्णमित्या–तृण्णम् । अनु । उपेति । दधाति । प्राणानामिति प्र–अना-

आतृण्णं छिद्रं अपिदध्यात् नाशयेत् । दाधारेति । छान्दसो लिट्, धारयति । तुजादित्वादभ्यासस्य दीर्घत्वम् । अथो अपि च खल्विति पक्षान्तरम् । लक्षणे अनोः कर्मप्रवचनीयत्वम् ॥

ष्ट्यै द्रप्सश्चस्कन्देत्यभि मृशति होत्रा-
स्वेवैनं प्रतिष्ठापयति स्रुचावुप दधा-
त्याज्यस्य पूर्णां कार्ष्मर्यमयीं दध्नः
पूर्णामौदुम्बरीमियं वै कार्ष्मर्यम-
य्यसावौदुम्बरीमे एवोप धत्ते॥ ३८॥

नाम् । उत्सृष्ट्या इत्युत्–सृष्ट्यै । [3]द्रप्सः । चस्क-
न्द । इति । अभीति । मृशति । होत्रासु । एव ।
एनम् । प्रतीति । स्थापयति । [4]स्रुचौ । उपेति । द-
धाति । आज्यस्य । पूर्णाम् । कार्ष्मर्यमयीमिति
कार्ष्मर्य–मयीम् । दध्नः । पूर्णाम् । औदुम्बरीम् ।
[5]इयम् । वै । कार्ष्मर्यमयीति कार्ष्मर्य–मयी । अ-
सौ । औदुम्बरी । इमे इति । एव । उपेति । धत्ते ॥ ३८ ॥

---

[3]अभि मृशतीति ॥ पुरुषं हिरण्मयम् । होत्रास्विति 'अनु स-
प्त होत्राः '* इति लिङ्गात् ॥

[4]स्रुचाविति ॥ पुरुषं दक्षिणेनोत्तरेण च । आज्यस्येति ।
'पूरणगुण' इति षष्ठीसमासप्रतिषेधात् पूरणार्थैर्योगे षष्ठी ज्ञापि-
ता । कार्ष्मर्यमयीमिति । 'नित्यं वृद्धशरादिभ्यः' इति मयट् ।
औदुम्बरीमिति । 'अनुदात्तादेश्च' इत्यञ् ॥

[5]इयं वा इत्यादि ॥ गतम् ॥

---

*सं. ४-२-८.

तूष्णीमुपं दधाति न हीमे यजुषा-
ऽऽप्तुमर्हन्ति दक्षिणां कार्ष्मर्यमयी-
मुत्तंरामौदुम्बरीं तस्मांदस्या असा-
वुत्तराऽऽज्यंस्य पूर्णां कार्ष्मर्यमयीं
वज्रो वा आज्यं वज्रः कार्ष्मर्यो
वज्रेणैव यज्ञस्यं दक्षिणतो रक्षाꣳसि-
स्यपं हन्ति दध्नः पूर्णामौदुम्बरीं प-
शवो वै दध्यूर्गुंदुम्बरः पशुष्वेवोर्जं
दधाति पूर्णे उपं दधाति पूर्णे एवै-

तूष्णीम् । उपेति । दधाति । न । हि । इमे इति । यजुषा । आप्तुम् । अर्हन्ति । दक्षिणाम् । कार्ष्मर्यमयीमिति कार्ष्मर्य-मयीम् । उत्तरामित्युत्-तराम् । औदुम्बरीम् । तस्मात् । अस्याः । असौ । उत्तरेत्युत्-तरा । आज्यस्य । पूर्णाम् । कार्ष्मर्यमयीमिति कार्ष्मर्य-मयीम् । वज्रः । वै । आज्यम् । वज्रः । कार्ष्मर्यः । वज्रेण । एव । यज्ञस्य । दक्षिणतः । रक्षाꣳसि । अपेति । हन्ति । दध्नः । पूर्णाम् । औदुम्बरीम् । पशवः । वै । दधि । ऊर्क् । उदुम्बरः । पशुषु । एव । ऊर्जम् । दधाति । पूर्णे इति । उपेति । दधाति । पूर्णे इति । एव । एनम् ॥ ३९ ॥

नम् ॥ ३१ ॥ अमुष्मिंल्लोक उपे
तिष्ठेते विराज्यग्निश्चेतव्यं इत्याहु-
स्स्रुग्वै विराड्यथ्स्रुचावुप दधाति
विराज्येवाग्निं चिनुते यज्ञमुखेयंज्ञ-
मुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि
जिघाꣳसन्ति यज्ञमुखꣳ रुक्मो
यद्रुक्मं व्याघारयति यज्ञमुखादेव

अमुष्मिन्न् । लोके । उपेति । तिष्ठेते इति । विराजीति वि–राजि । अग्निः । चेतव्यः । इति । आहुः । [6]स्रुक् । वै । विराडिति वि–राट् । यत् । स्रुचौ । उपदधातीत्युप–दधाति । विराजीति वि–राजि । एव । अग्निम् । चिनुते । यज्ञमुखेयंज्ञमुख इति यज्ञमुखे–यज्ञमुखे । वै । क्रियमाणे । यज्ञम् । रक्षाꣳसि । जिघाꣳसन्ति । [7]यज्ञमुखमिति यज्ञ–मुखम् । रुक्मः । यत् । रुक्मम् । व्याघारयतीति वि–आघारयति । यज्ञमुखादिति यज्ञ–

[6]स्रुग्वै विराडिति ॥ विराजनशीलत्वाद्विराट्, साधनत्वाद्वा ॥

[7]व्याघारयतीति ॥ उत्तरवेदिवत् ॥

रक्षा॑ꣳस्यप॑ हन्ति प॒ञ्चभि॒र्व्या॑घा॑र-
यति॒ पाङ्क्तो॑ य॒ज्ञो याव॑ा॒नेव य॒ज्ञस्त-
स्मा॒द्रक्षा॑ꣳस्यप॑ हन्त्यक्ष्ण॒या व्या-
घा॑रयति॒ तस्मा॑दक्ष्ण॒या प॒शवो॒ऽङ्गा॑-
नि॒ प्र ह॑रन्ति॒ प्रति॑ष्ठित्यै ॥ ४० ॥

मु॒खात्।ए॒व।रक्षा॑ꣳसि।अपे॑ति।ह॒न्ति॒ । [8]प॒ञ्चभि॒रिति॑ प॒ञ्च–भिः॒ । व्या॒घा॑रय॒तीति॑ वि–आघा॑रयति । पा-ङ्क्तः । य॒ज्ञः । याव॑ान् । ए॒व । य॒ज्ञः । तस्मा॑त् । रक्षा॑ꣳसि । अपे॑ति । ह॒न्ति॒ । [9]अ॒क्ष्ण॒या । व्या॒घा॑-रय॒तीति॑ वि–आघा॑रयति । तस्मा॑त् । अ॒क्ष्ण॒या । प॒शवः॑ । अङ्गा॑नि । प्रेति॑ । ह॒र॒न्ति॒ । प्रति॑ष्ठित्या॒ इति॒ प्रति॑–स्थि॒त्यै॒ ॥ ४० ॥

व॒नस्पत॑यो दक्षि॒णतो॑ धत्त ए॒नं
तस्मा॑दक्ष्ण॒या पञ्च॑ च ॥७॥

---

[8]पञ्चभिरिति ॥ 'सिंहीरसि'* इत्यादिभिः । 'झल्युपोत्तमम्' इत्युपोत्तमस्य उदात्तत्वम् । पाङ्क्त इति । धानादिपञ्चकसाध्यत्वात् ॥

[9]अक्षणयेति ॥ कोणगत्या दक्षिणमंसं उत्तरां श्रोणीं दक्षिणमुत्तरमंसं मध्यमिति । अङ्गानि चरणादीन्यक्षणया न्यस्यति शयनादिषु च उपसंहरति । तस्मादक्षणया व्याघारणं प्रतिष्ठित्यै भवति पशूनाम् ॥

इति पञ्चमे द्वितीये सप्तमोनुवाकः.

---

*सं. १-२-१२.

स्वयमातृण्णामुपं दधातीयं वै स्वयमातृण्णेमामेवोपं धत्तेऽश्वमुपं घ्रापयति प्राणमेवास्यां दधात्यथों प्राजापत्यो वा अश्वंः प्रजापंतिनैवाग्निं चिंनुते प्रथमेष्टंकोपधीयमांना पशूनां च यजंमानस्य च प्राणमपिं

[1]स्वयमातृण्णामितिं स्वयं–आतृण्णाम् । उपेतिं । दधाति । इयम् । वै । स्वयमातृण्णेतिं स्वयं–आतृण्णा । इमाम् । एव । उपेतिं । धत्ते । [2]अश्वंम् । उपेतिं । घ्रापयति । प्राणमितिं प्र–अनम् । एव । अस्याम् । दधाति । अथो इतिं । प्राजापत्य इतिं प्राजा–पत्यः । वै । अश्वंः । प्रजापंतिनेतिं प्रजा–पतिना । एव । अग्निम् । चिनुते । प्रथमा । इष्टंका । उपधीयमानेत्युंप–धीयमांना ।

---

[1]स्वयमातृण्णामिति ॥ स्वयमेव शर्करां छिद्रिताम् । 'स्वयं क्तेन' इति समासः । कृदुत्तरपदप्रकृतिस्वरत्वम् । इयमिति । पृथिवीकल्पा, छिद्रवत्वाद्वा ॥

[2]अश्वमित्यादि । गतम् ॥

[3]प्रथमेति ॥ प्रथमं उपधीयमाना अपिदधाति । तच्च स्वय-

दधाति स्वयमातृण्णा भवति प्रा-
णानामुत्सृष्ट्या अथो सुवर्गस्य लो-
कस्यानुख्यात्या अग्नावग्निश्चेतव्य
इत्याहुरेष वै ॥ ४१ ॥ अग्निर्वैश्वा-
नरो यद्ब्राह्मणस्तस्मै प्रथमामिष्टकां
यजुष्कृतां प्र यच्छेत्तां ब्राह्मणश्चोप

पशूनाम् । च । यजमानस्य । च । प्राणमिति प्र–अनम् । अपीति । दधाति । स्वयमातृण्णेति स्वयं–आतृण्णा । भवति । प्राणानामिति प्र–अनानाम् । उत्सृष्ट्या इत्युत्–सृष्ट्यै । अथो इति । सुवर्गस्येति सुवः–गस्य । लोकस्य । अनुख्यात्या इत्यनु–ख्यात्यै । [4]अग्नौ । अग्निः । चेतव्यः । इति । आहुः । एषः । वै ॥४१॥ अग्निः । वैश्वानरः । यत् । ब्राह्मणः । तस्मै । प्रथमाम् । इष्टकाम् । यजुष्कृतामिति यजुः–कृताम् । प्रेति । यच्छेत् ।

मातृण्णायाः छिद्रवत्तया प्राणानामुत्सृष्ट्यै भवति । सुवर्गस्य लोकस्य अनुख्यात्यै अनुवीक्षणाय भवति ॥

[4]यजुष्कृतामिति ॥ 'ध्रुवाऽसि धरुणा'* इत्यनेन मन्त्रेणाभिमृष्टाम् । ब्राह्मणश्चेति । अध्वर्युश्च सहोपदध्याताम् । अब्राह्म-

*सं. ४-२-९.

दध्यातामग्नावेव तदग्निं चिनुत ई-
श्वरो वा एष आर्तिमार्तोर्योऽविद्वा-
निष्टकामुपदधाति त्रीन् वरान्दद्या-
त्त्रयो वै प्राणाः प्राणाना$^{\text{ं}}$ स्पृत्यै
द्वावेव देयौ द्वौ हि प्राणावेकं एव

ताम् । ब्राह्मणः । च । उपेति । दध्याताम् । अ-
ग्नौ । एव । तत् । अग्निम् । चिनुते । [5]ईश्वरः ।
वै । एषः । आर्तिम् । आर्तोरित्या–अर्तोः । यः ।
अविद्वान् । इष्टकाम् । उपदधातीत्युप–दधाति ।
त्रीन् । वरान् । दद्यात् । त्रयः । वै । प्राणा इति
प्र–अनाः । प्राणानामिति प्र–अनानाम् । स्पृत्यै ।
[6]द्वौ । एव । देयौ । द्वौ । हि । प्राणाविति प्र–अ-

णस्याप्रसङ्गात् ब्राह्मणग्रहणं जातिमात्रप्रतिपत्त्यर्थम् । तेनाविद्वान् गृह्यते । वक्ष्यति च—'योऽविद्वानिष्टकामुपदधाति' इति ॥

[5]आर्तोरिति ॥ 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् । उभयत्रापि 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । गोपोषं पुष्णातीतिवदेको धात्वर्थसामान्यवचनः । वरानिति । चतुर्वर्षा गौर्वरः । त्रय इति । प्राणापानव्यानाः 'प्राण्यापान्यव्यान्य' इत्यादौ त्रयाणामेव ग्रहणात् । स्पृत्यै । स्पृ प्रीतौ ॥

[6]प्राणापानौ 'प्राणापानौ मृत्योर्मा पातम्'* इत्यादौ द्वयोरेव

*सं. ३-१-७[5].

देय एको हि प्राणः पशुः ॥ ४२ ॥
वा एष यदग्निर्न खलु वै पशव
आयवसे रमन्ते दूर्वेष्टकामुप दधाति
पशूनां धृत्यै द्वाभ्यां प्रतिष्ठित्यै का-
ण्डात्काण्डात्प्ररोहन्तीत्याह काण्डेन-

नौ । एकः । एव । देयः । एकः । हि । प्राण इति प्र-अनः । पशुः ॥ ४२ ॥ वै । एषः । यत् । अग्निः । न । खलु । वै । पशवः । आयवसे । रमन्ते । दूर्वेष्टकामिति दूर्वा-इष्टकाम् । उपेति । दधाति । पशूनाम् । धृत्यै । [7]द्वाभ्याम् । प्रतिष्ठित्या इति प्रति-स्थित्यै । काण्डात्काण्डादिति काण्डात्-

तयोर्ग्रहणात् । एको हीति । अन्येषां तद्विकल्पत्वान्मुख्यो गृह्यते । पशुर्वा इति । पशुसदृशोऽयमग्निः यत्र चरितव्यः तत्रैव रमन्ते खल्विति । यवसो घासः स एवायवसः स्वार्थिकोऽञ् । यवसाभावे न रमन्ते । यद्वा—यवसरहितो देशः आयवसः; छान्दसो वर्णविकारः । 'नञ्सुभ्याम्' इत्येतद्बाधित्वा बहुव्रीहिस्वरः पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—आङीषदर्थे, अल्पभक्ष्ये देशे पशवो न रमन्ते । तस्मात् दूर्वेष्टकामुपदधाति प्रभूततृणत्वाय ॥

[7]द्वाभ्यामिति ॥ 'काण्डात्काण्डात्'* 'या शतेन'* इत्येताभ्यां

*सं. ४-२-९.

काण्डेन ह्येषा प्रतितिष्ठत्येवा नो दूर्वे प्र तंनु सहस्रेण शतेन चेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै देवलक्ष्मं वै त्र्यालिखिता तामुत्तरलक्ष्माणं देवा उपादधताधरलक्ष्माण-

काण्डात् । प्ररोहन्तीति प्र-रोहन्ती । इति । आह । काण्डेनकाण्डेनेति काण्डेन-काण्डेन । हि । एषा । प्रतितिष्ठतीति प्रति-तिष्ठति । एव । नः । दूर्वे । प्रेति । तनु । सहस्रेण । शतेन । च । इति । आह । साहस्रः । प्रजापतिरिति प्रजा-पतिः । प्रजापतेरिति प्रजा-पतेः । आप्त्यै । [8]देवलक्ष्ममिति देव-लक्ष्मम् । वै । त्र्यालिखितेति त्रि-आलिखिता । ताम् । उत्तरलक्ष्माणमित्युत्तर-लक्ष्माणम् । देवाः । उपेति । अदधत । अधरलक्ष्माणमित्यधर-

प्रतिष्ठित्यै भवति पशूनाम् । काण्डेनकाण्डेन हीति । सर्वेण काण्डेन ह्येषा पृथिव्यां प्रतिष्ठिता भवति । साहस्र इति । सहस्रलाभहेतुः । 'शतमानविंशतिक'. इत्यण् ॥

[8]देवलक्ष्ममित्यादि ॥ देवसम्बन्धि लक्षणं देवलक्ष्मम् । 'नपुंसकादन्यतरस्याम्' इत्यच् समासान्तः । यदियमषाढा त्र्यालिखिता भवति । त्रिरालिखिता त्र्यालिखिता । वृत्तौ सुजर्थोऽन्तर्भवति

मसुरा यम् ॥४३॥ कामयेत वसीयान्थ्स्यादित्युत्तरलक्ष्माणं तस्योपं दध्याद्वसीयानेव भंवति यं कामयेत पापीयान्थ्स्यादित्यधरलक्ष्माणं तस्योपं दध्यादसुरयोनिमेवैनमनु परां भावयति पापीयान्भवति त्र्यालिखिता भंवतीमे वै लोकास्त्र्यालि-

लक्ष्माणम् । असुराः । यम् ॥ ४३ ॥ कामयेत । वसीयान् । स्यात् । इति । उत्तरलक्ष्माणमित्युत्तर–लक्ष्माणम् । तस्यं । उपेतिं । दध्यात् । वसीयान् । एव । भवति । [9]यम् । कामयेत । पापीयान् । स्यात् । इतिं । अधरलक्ष्माणमित्यधर–लक्ष्माणम् । तस्यं । उपेतिं । दध्यात् । असुरयोनिमित्यसुर–योनिम् । एव । एनम् । अनु । परेतिं । भावयति । पापीयान् । भवति । त्र्यालिखितेतिं त्रि–आलि-

---

सप्तपर्णादिषु विस्पेव भवति? तिसृभिः लेखाभिरङ्कितेति यावत् । तामित्यादि । असुरा इति । उपादधतेत्येव । वसीयान् वसुमत्तरः । 'विन्मतोर्लुक्' 'टेः' इति टिलोपः ॥

[9]असुरयोनिमिति ॥ असुरयोनिमनुप्रविष्टं एतं पराभूतं करोति ॥

खितेभ्य एव लोकेभ्यो भ्रातृव्यम-
न्तरेत्यङ्गिरसस्सुवर्गं लोकं यतः
पुरोडाशः कूर्मो भूत्वाऽनु प्रासर्पत्
॥४४॥ यत्कूर्ममुपदधाति यथा क्षे-
त्रविदञ्जसा नयत्येवमेवैनं कूर्मस्सु-
वर्गं लोकमञ्जसा नयति मेधो वा

खिता । भवति । इमे । वै । लोकाः । त्र्यालिखि-तेति त्रि–आलिखिता । एभ्यः । एव । लोकेभ्यः । भ्रातृव्यम् । अन्तः । एति । [10]अङ्गिरसः । सुवर्गमिति सुवः–गम् । लोकम् । यतः । पुरोडाशः । कूर्मः । भूत्वा । अनु । प्रेति । असर्पत् ॥ ४४ ॥ यत् । कूर्मम् । उपदधातीत्युप–दधाति । यथा । क्षेत्रविदिति क्षेत्र–वित् । अञ्जसा । नयति । एवम् । एव । एनम् । कूर्मः । सुवर्गमिति सुवः–गम् । लोकम् । अञ्जसा । नयति । [11]मेधः । वै । एषः । प-

---

[10]अङ्गिरस इत्यादि ॥ कूर्मोपधानविधिः । यथेति । क्षेत्रज्ञो ह्यञ्जसा नयति आर्जवेन नयति । एवं कूर्मोऽपि स्वर्गमार्गज्ञः अञ्जसा नयति ॥

[11]मेधो वा इत्यादि ॥ यज्ञतुल्यः इष्टसाधनत्वात् । उपतिष्ठन्ते समीपे

एष पशूनां यत्कूर्मो यत्कूर्ममुपदधा-
ति स्वमेव मेधं पश्यन्तः पशव उप
तिष्ठन्ते श्मशानं वा एतत्क्रियते
यन्मृतानां पशूनाꣳ शीर्षाण्युपधी-
यन्ते यज्जीवन्तं कूर्ममुपदधाति ते-
नाश्मशानचिद्वास्तव्यो वा एष यत्

शूनाम् । यत् । कूर्मः । यत् । कूर्मम् । उपदधा-
तीत्युप-दधाति । स्वम् । एव । मेधम् । पश्यन्तः ।
पशवः । उपेति । तिष्ठन्ते । [12]श्मशानम् । वै । ए-
तत् । क्रियते । यत् । मृतानाम् । पशूनाम् । शी-
र्षाणि । उपधीयन्त इत्युप-धीयन्ते । यत् । जी-
वन्तम् । कूर्मम् । उपदधातीत्युप-दधाति । तेन ।
अश्मशानचिदित्यश्मशान-चित् । वास्तव्यः । वै ।

तिष्ठन्ति । 'अकर्मकाच्च' इत्यात्मनेपदम् ॥

[12]अश्मशानचिदिति ॥ श्मशानमिव चीयत इति । 'कर्मण्याख्या-याम्' इति क्विप् । वास्तव्य इति । सुखेन वस्ता वास्तव्यः । 'वसेस्तव्यत्कर्तरि णिच्च' इति तव्यत् । यस्मादनेन जीवता चिरं स्थातव्यमत्र तस्माद्दध्ना मधुमिश्रेणाभ्यनक्ति 'मधु वाता ऋतायते'* इति तिसृभिः । एतत्स्वदयिता चिरं जीविष्यतीति । स्वदयतिः चुरादिरदन्तः ॥

*सं. ४-२-९.

॥ ४५ ॥ कूर्मो मधु वाता ऋताय-
त इति दध्ना मधुमिश्रेणाभ्यनक्ति
स्वदयत्येवैनं ग्राम्यं वा एतदन्नं य-
द्दध्यारण्यं मधु यद्दध्ना मधुमि-
श्रेणाभ्यनक्त्युभयस्यावरुद्धै मही
द्यौः पृथिवी च न इत्याहाभ्या-
मेवैनमुभयतः परि गृह्णाति प्रा-
ञ्चमुप दधाति सुवर्गस्य लोकस्य स-

एषः । यत् ॥ ४५ ॥ कूर्मः । मधु । वाताः । ऋता-यत इत्यृत–यते । इति । दध्ना । मधुमिश्रेणेति मधु–मिश्रेण । अभीति । अनक्ति । स्वदयति । एव । एनम् । [13]ग्राम्यम् । वै । एतत् । अन्नम् । यत् । दधि । आरण्यम् । मधु । यत् । दध्ना । मधुमिश्रेणेति मधु–मिश्रेण । अभ्यनक्तीत्यभि–अनक्ति । उभयस्य । अवरुद्ध्या इत्यव–रुद्ध्यै । मही । द्यौः । पृथिवी । च । नः । इति । आह । आभ्याम् । एव । एनम् । उभयतः । परीति । गृह्णाति । प्राञ्चम् । उपेति । दधाति । सुवर्गस्येति सुवः–गस्य । लोकस्य । सम-

[13]ग्राम्यमिति ॥ 'ग्रामाद्यखञौ' इति यः । मही द्यौरिति गायत्र्या एनमवहारेण परिवेष्टय पुरस्तात्प्रत्यञ्चमुपदधाति । आभ्यामिति ।

मंष्ट्यै पुरस्तात्प्रत्यञ्चमुपं दधाति त-
स्मात् ॥ ४६ ॥ पुरस्तात्प्रत्यञ्चः प-
शवो मेधमुपं तिष्ठन्ते यो वा अपं-
नाभिमग्निं चिनुते यजंमानस्य ना-
भिमनु प्र विंशति स एंनमीश्वरो
हिꣳसितोरुलूखंलमुपं दधात्येषा वा
अग्नेर्नाभिस्सनांभिमेवाग्निं चिनुतेऽ-
हिꣳसाया औदुंम्बरं भवत्यूर्ग्वा उं-

ष्ट्या इति सं—अष्ट्यै । पुरस्तांत् । प्रत्यञ्चंम् । उपे-
ति । दधाति । तस्मांत् ॥ ४६ ॥ पुरस्तात् । प्र-
त्यञ्चः । पशवंः । मेधंम् । उपेति । तिष्ठन्ते । [14]यः ।
वै । अपंनाभिमित्यपं—नाभिम् । अग्निम् । चिनु-
ते । यजंमानस्य । नाभिम् । अनु । प्रेति । वि-
शति । सः । एनम् । ईश्वरः । हिꣳसितोः । उलू-
खंलम् । उपेति । दधाति । एषा । वै । अग्नेः ।
नाभिः । सनांभिमिति स—नाभिम् । एव । अ-
ग्निम् । चिनुते । अहिꣳसायै । औदुंम्बरम् । भव-
ति । ऊर्क् । वै । उदुम्बरंः । ऊर्जम् । एव । अवे-

द्यावापृथिवीभ्यामुपातिष्ठते इति । सङ्गतिकरणे आत्मनेपदम् ॥

[14]यो वा इत्यादि ॥ उलूखलोपधानविधिः । गतः । तस्मान्म-

दुम्बर ऊर्जमेवाव रुन्धे मध्यत उ-
पं दधाति मध्यत एवास्मा ऊर्जं द-
धाति तस्मान्मध्यत ऊर्जा भुञ्जत
इयंद्भवति प्रजापतिना यज्ञमुखेन
संमितमवं हन्त्यन्नमेवाकर्वैष्णव्य-

ति । रुन्धे । मध्यतः । उपेति । दधाति । मध्यतः। एव । अस्मै । ऊर्जम् । दधाति । तस्मात् । म-ध्यतः । ऊर्जा । भुञ्जते । [15]इयत् । भवति । प्रजा-पतिनेति प्रजा–पतिना । यज्ञमुखेनेति यज्ञ–मु-खेन । सम्मितमिति सं–मितम् । अवेति । ह-न्ति । अन्नम् । एव । अकः । [16]वैष्णव्या । ऋ-

---

ध्यत इति । मध्यमे वयसि, देहमध्ये वा । आद्यादिभ्यस्तसिः ॥

[15]इयदिति ॥ प्रादेशमात्रम् । इदं परिमाणमस्येति ' किमिदंभ्यां वोघः ' इति ' इदं किमोरीश्की ' यस्येति इलोपः, उदात्तनिवृत्तिस्वरेण इकार उदात्तः । प्रजापतिनेति । ' यज्ञमुखं वै प्रजापतिः ' इति प्रजापत्यात्मना परिमितेन यज्ञमुखेन सम्मितमिदमुलूखलम् । केचिदाहुः—यत्किंचित्परिमाणपरिमितमियत् प्रजापतिश्च परिमितिः परिमितात्मा, तस्मात्तत्तुल्यमिति । अन्नमेवाकरिति । अवघातेन अन्नमेवास्यै करोति उत्पादयति । छान्दसो लुङ्, ' मन्त्रे घस ' इति च्लेर्लोपः ॥

[16]वैष्णव्येति ॥ तद्विष्णोरिति गायत्री । उदात्तनिवृत्तिस्वरेण

चोप॑ दधाति॒ विष्णु॒र्वै य॒ज्ञो वै॑ष्ण॒वा
व॒नस्पत॑यो य॒ज्ञ ए॒व य॒ज्ञं प्रति॑ष्ठा-
पयति ॥ ४७ ॥

ए॒षां वा ए॒तल्लो॒काना॒ं ज्योति॒स्सम्भृ॑-
त॒ं यदु॒खा यदु॒खामु॑प॒दधा॑त्ये॒भ्य ए॒व

चा । उपेति॑ । द॒धाति॒ । विष्णु॑ः । वै । य॒ज्ञः । वै॒-
ष्ण॒वाः । व॒नस्पत॑यः । य॒ज्ञे । ए॒व । य॒ज्ञम् । प्र-
तीति॑ । स्था॒प॒य॒ति॒ ॥ ४७ ॥

ए॒ष वै प॒शुर्यम॑सर्पदे॒ष यत्तस्मा॒त्तस्मा॑त्स॒प्त-
विंशतिश्च ॥ ८ ॥

[1]ए॒षाम् । वै । ए॒तत् । लो॒काना॑म् । ज्योति॑ः ।
सम्भृ॑त॒मिति॒ सं-भृ॒तम् । यत् । उ॒खा । यत् । उ॒-
खाम् । उ॒प॒द॒धा॒तीत्यु॑प-दधा॑ति । ए॒भ्यः । ए॒व ।

---

ङीप उदात्तत्वात् ‘ उदात्तयणः ’ इति विभक्तेरुदात्तत्वम् । वि-
ष्णुर्वा इति । वैष्णवे उलूखले वैष्णवीमृचं प्रयुञ्जानो यज्ञं प्रति-
ष्ठापयति । उभयोर्वैष्णवत्वाद्विष्णोश्च यज्ञत्वात् । वनस्पतिशब्दस्य
सुट्स्वरावुक्तौ ॥

इति पञ्चमे द्वितीये अष्टमोऽनुवाकः.

---

[1]एषां वा इत्यादि ॥ मुख्योखोपधानविधिः । मध्यत इति ।
देहस्य मध्ये ज्योतिः ऐश्वरमुपास्महे सर्वेऽपि वयम् ॥

लोकेभ्यो ज्योतिरवं रुन्धे मध्यत उपं दधाति मध्यत एवास्मै ज्योतिर्दधाति तस्मान्मध्यतो ज्योतिरुपांस्महे सिकंताभिः पूरयत्येतद्वा अग्नेर्वैश्वानरस्यं रूपꣳ रूपेणैव वैश्वानरमवं रुन्धे यं कामयेंत क्षोधुंकस्स्यादित्यूनां तस्योपं ॥ ४८ ॥ दृध्याक्षोधुंक एव भंवति यं कामयेतानुंपदस्यदन्नं-

लोकेभ्यंः । ज्योतिः । अवेति । रुन्धे । मध्यतः । उपेति । दधाति । मध्यतः । एव । अस्मै । ज्योतिः । दधाति । तस्मांत् । मध्यतः । ज्योतिः । उपेति । आस्महे । [2]सिकंताभिः । पूरयति । एतत् । वै । अग्नेः । वैश्वानरस्यं । रूपम् । रूपेणं । एव । वैश्वानरम् । अवेति । रुन्धे । यम् । कामयेंत । क्षोधुंकः । स्यात् । इति । ऊनाम् । तस्यं । उपेति ॥ ४८ ॥ दृध्यात् । क्षोधुंकः । एव । भवति । यम् । कामयेंत । अनुंपदस्यदित्यनुंप–दस्यत् । अन्नंम् । अद्यात् । इति । पूर्णाम् । तस्यं ।

[2]सिकताभिरित्यादि ॥ गतम् । क्षोधुकः क्षुच्छीलः । छान्दस उकञ् । अनुपदस्यत् अक्षीयमाणम् । दसु उपक्षये, दैवादिकः ॥

मद्यादिति पूर्णां तस्योप दध्यादनु-
पदस्यदेवान्नंमत्ति सहस्रं वै प्रति पु-
रुषः पशूनां यच्छति सहस्रमन्ये प-
शवो मध्यें पुरुषशीर्षमुप दधाति
सवीर्यत्वायोखायामपि दधाति प्र-

उपेति । दध्यात् । अनुपदस्यदित्यनुप-दस्यत् । एव । अन्नम् । अत्ति । [3]सहस्रम् । वै । प्रतीति । पुरुषः । पशूनाम् । यच्छति । सहस्रम् । अन्ये । पशवः । मध्ये । पुरुषशीर्षमिति पुरुष-शीर्षम् । उपेति । दधाति । सवीर्यत्वायेति सवीर्य-त्वाय । [4]उखायाम् । अपीति । दधाति । प्रतिष्ठा-

[3]सहस्रं वा इति ॥ पुरुषशीर्षोपधानविधिः । येषामत्र शिरांसि उपधीयन्ते पुरुषाश्ववृषभवृष्णिबस्तानां तेषां मध्ये एक एव पुरुष उपधीयमानशिरस्कः प्रपशूनां सहस्रं प्रतियच्छति यजमानाय, तस्मात् सहस्रसम्मितं पुरुषशिर इति । मन्त्रलिङ्गं च—'सहस्रस्य प्रतिमां विश्वरूपम्'* इति । अन्ये तु—अश्वादयः पशवः सर्वेऽपि सम्भूय सहस्रं पशूनां प्रतियच्छन्ति, तस्मात् प्राधान्यात् मध्ये पुरुषशीर्षं पुरुषशिर उपदधाति सवीर्यत्वायाग्नेः । 'शीर्षञ्छन्दसि' इति शीर्षन्भावः । 'नपुंसकादन्यतरस्याम्' इत्यच् समासान्तः ॥

[4]उखायामित्यादि ॥ गतम् । प्राणिराहितत्वादमेध्यं अमेधार्हम् । मेधं नार्हतीति दण्डादित्वात् यः । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तो-

*सं. ४-२-१०.

तिष्ठामेवैनंङ्गमयति व्यृंद्धं वा एत-
त्प्राणैरंमेध्यं यत्पुंरुषशीर्षममृतं ख-
लु वै प्राणाः ॥ ४१ ॥ अमृतꣳ हि-
रंण्यं प्राणेषुं हिरण्यशल्कान्प्रत्यंस्य-
ति प्रतिष्ठामेवैनंङ्गमायित्वा प्राणैस्स-
मंर्धयति दुध्ना मंधुमिश्रेणं पूरयति

मितिं प्रति–स्थाम् । एव । एनत् । गमयति । व्यृंद्धमिति वि–ऋद्धम् । वै । एतत् । प्राणैरितिं प्र–अनैः । अमेध्यम् । यत् । पुरुषशीर्षमितिं पु-रुष–शीर्षम् । अमृतंम् । खलुं । वै । प्राणा इतिं प्र–अनाः ॥ ४१ ॥ अमृतंम् । हिरंण्यम् । प्राणे-ष्वितिं प्र–अनेषुं । हिरण्यशल्कानितिं हिरण्य–श-ल्कान् । प्रतीतिं । अस्यति । प्रतिष्ठामितिं प्रति–स्थाम् । एव । एनत् । गमयित्वा । प्राणैरितिं प्र–अनैः । समितिं । अर्धयति । [5]दुध्ना । मधुमिश्रेणे-तिं मधु–मिश्रेणं । पूरयति । मधव्यंः । असानि ।

दात्तत्वम् । अमृतमिति । मृतमेषां नास्तीति अमृतम् । प्राणाः हिरण्यं चामृतहेतुः ॥

[5]मधव्य इति । मधुमान् भूयासमिति । 'मधोर्ञ च' इति यत् । शृतातंक्येनेति ॥ पूरयतीत्येव । श्रितेन पयसा कृतात-

मधव्योऽसानीति शृतातङ्क्यैन मेध्यत्वायं ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेण पूरयंत्युभयस्यावरुद्ध्यै पशुशीर्षाण्युपं दधाति पशवो वै पशुशीर्षाणि पशूनेवावं रुन्धे यं कामयेतापशु-

इति । शृतातङ्क्यैनेति शृत–आतङ्क्यैन । मेध्यत्वायेति मेध्य–त्वायं । ग्राम्यम् । वै । एतत् । अन्नंम् । यत् । दधि । आरण्यम् । मधुं । यत् । दध्ना । मधुमिश्रेणेति मधु–मिश्रेणं । पूरयंति । उभयंस्य । अवंरुद्ध्या इत्यवं–रुद्ध्यै । [6]पशुशीर्षाणीति पशु–शीर्षाणि । उपेति । दधाति । पशवंः । वै । पशुशीर्षाणीति पशु–शीर्षाणि । पशून् । एव । अवेति । रुन्धे । [7]यम् । कामयेत । अपशुः ।

श्चनम् । तञ्चु संकोचने, 'ऋहलोर्ण्यत्' 'चजोः कुघिण्यतोः' इति कुत्वम् । ग्राम्यं वा इत्यादि* गतम् ॥

[6]पशुशीर्षाणीति ॥ अश्वादीनां शिरांसि । पशवो वा इति । तत्साधनत्वात्ताच्छब्द्यम् ॥

[7]यमित्यादि ॥ अपशुः पशुहीनः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । विषूचीनानि बिष्वङ्मुखानि अभिमुखानि विषु नाना

*सं. ५-२-८[13].

स्स्यादिति ॥ ५० ॥ विषूचीनानि तस्योपं दध्याद्विषूंच एवास्मात्पशून्दधात्यपशुरेव भवति यं कामयेत पशुमान्थ्स्यादिति समीचीनानि तस्योपं दध्यात्समीचं एवास्मै पशू-

स्यात् । इति ॥ ५० ॥ विषूचीनानि । तस्य । उपेति । दध्यात् । विषूचः । एव । अस्मात् । पशून् । दधाति । अपशुः । एव । भवति । यम् । कामयेत । पशुमानिति पशु-मान् । स्यात् । इति । समीचीनानि । तस्य । उपेति । दध्यात् । समीचः । एव । अस्मै । पशून् । दधाति । पशुमानिति पशु-मान् । एव । भवति । [8]पुरस्तात् ।

---

अञ्चतीति 'ऋत्विक्' इत्यादिना क्विन् । विभाषाञ्चेरदिक्स्त्रियाम्' इति खः । 'चौ' इति पूर्वपदस्य दीर्घत्वम् । विषूच इति अव्ययपूर्वपदप्रकृतिस्वरत्वम् । 'अञ्चेश्छन्दसि' इति व्यत्ययेन न प्रवर्तते । अस्मादिति । 'अन्यारादितरर्ते' इति पञ्चमी । पशुमानिति 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम् । समीचीनानि सङ्गतमुखानि । 'समस्समि' इति सम्यादेशः । पूर्ववद्दीर्घत्वम् । समीच इति पूर्वपदस्य अन्तोदात्तत्वं, पूर्ववत् 'अञ्चेश्छन्दसि' इति न प्रवर्तते ॥

[8]पुरस्तादिति ॥ पुरस्तात् प्रत्यङ्मुख उपविश्यात्मनि प्रतीचीनमश्वस्य शिर उपदधाति । पश्चात्प्राङ्मुख उपविश्य प्राचीनमृषभस्य

न्दंधाति पशुमानेव भंवति पुरस्तां-
त्प्रतीचीनमश्वस्योपं दधाति पश्चा-
त्प्राचीनंमृषभस्यापंशवो वा अन्ये
गोंअश्वेभ्यंः पशवों गोअश्वानेवास्मैं
समीचों दधात्येतावंन्तो वै पशवंः

प्रतीचीनंम् । अश्वंस्य । उपेतिं । दधाति । पश्चात् । प्राचीनंम् । ऋषभस्यं । [9]अपंशवः । वै । अन्ये । गोअश्वेभ्य इतिं गो-अश्वेभ्यंः । पशवंः । गोअश्वानितिं गो-अश्वान् । एव । अस्मै । समीचंः । दधाति । [10]एतावंन्तः । वै । पशवंः ॥ ५१ ॥ द्वि-

---

शिर उपदधाति । पुरस्तात् पूर्वस्यां दिशि । 'दिक्छब्देभ्यः' इति 'अस्ताति च' इति पुरादेशः । 'पश्चात्' इति पुरस्तादित्यर्थे निपात्यते ॥

[9]अपशवो वा इत्यादि ॥ गोऽश्वव्यतिरिक्ताः सर्वे अपशवः अपशुकल्पाः । 'सर्वत्र विभाषाश्चेः' इति प्रकृत्या भावः । अश्वर्षभयोः समीचीनतया गोऽश्वान् सर्वानस्मै समीचीनान् स्थापयति । प्राधान्याद्गोऽश्वग्रहणम् । वृष्णिबस्तयोरिति तुल्यो न्यायः ॥

[10]एतावन्त इत्यादिना उत्सर्गैरुपस्थानं विदधाति ॥ द्विपाद इति । 'सङ्ख्यासुपूर्वस्य' इति लोपः समासान्तः । 'द्वित्रिभ्यां पद्दन्' इत्युत्तरपदान्तोदात्तत्वम् । प्रदधाति प्राक्षिपति । तस्मात्प्रतिविधानं

॥५१॥ द्विपाद॑श्च चतु॑ष्पादश्च तान्वा एतद॒ग्नौ प्र द॑धाति॒ यत्प॑शुशी॒र्षाण्यु॑प॒दधा॑त्य॒मुमा॑र॒ण्यमनु॑ते दिशामी॒त्या॑ह ग्राम्येभ्य॑ ए॒व प॒शुभ्य॑ आर॒ण्यान्प॒शूञ्छु॒च॒मनूथ्सृ॑जाति॒ तस्मा॑थ्स॒मावं॑त्पशूनां प्र जाय॑मानानामार॒ण्याः प॒शवः॒ कनी॑याꣳसश्शु॒चा।

पाद॒ इति॑ द्वि-पाद॑ः । च॒ । चतु॑ष्पाद॒ इति॒ चतु॑ः-पा॒द॒ः । च॒ । तान् । वै । ए॒तत् । अ॒ग्नौ । प्रेति॑ । द॒धा॒ति॒ । यत् । प॒शु॒शी॒र्षाणीति॑ पशु-शी॒र्षाणि॑। उ॒प॒द॒धा॒तीत्यु॑प-दधा॑ति । अ॒मुम् । आ॒र॒ण्यम् । अन्विति॑ । ते॒ । दि॒शा॒मि॒ । इति॑ । आ॒ह॒ । ग्रा॒म्येभ्य॑ः। ए॒व । प॒शुभ्य॒ इति॑ प॒शु-भ्य॒ः । आ॒र॒ण्यान् । प॒शून् । शु॒च॑म् । अनु॑ । उदिति॑ । सृ॒ज॒ति॒ । तस्मा॑त्। स॒मावं॑त् । प॒शू॒नाम् । प्र॒जाय॑माना॒ना॒मिति॑ प्र-

कार्यमित्याह—अमुमित्यादि । अमुमिति सामान्यनिर्देशो मयुगौरादीनाम् । एतदुक्तं भवति—'मयुमारण्यमनु ते दिशामि'* 'गौरमारण्यमनुते दिशामि '* इत्येवमुपधानान्तरं उत्सर्गमुपतिष्ठते । तेन ग्राम्येभ्यः पशुभ्य आदाय आरण्यान् पशून् अनु लक्षीकृत्य च शुचं

*सं. ४-२-१०.

ह्यृताः सर्पशीर्षमुप दधाति यैव
सर्पे त्विषिस्तामेवाव रुन्धे ॥ ५२ ॥
यत्सर्मीचीनं पशुशीर्षैरुपदध्याद्ग्रा-
म्यान्पशून्दꣳशुकास्स्युर्यद्विषूचीनं-
मारण्यान्यजुरेव वदेदव तां त्वि-

जायमानानाम् । आरण्याः । पशवः । कनीयाꣳ-
सः । शुचा । हि । ऋताः । [11]सर्पशीर्षमिति स-
र्प-शीर्षम् । उपेति । दधाति । या । एव । सर्पे ।
त्विषिः । ताम् । एव । अवेति । रुन्धे ॥ ५२ ॥
यत् । समीचीनम् । पशुशीर्षैरिति पशु-शीर्षैः ।
उपदध्यादित्युप-दध्यात् । ग्राम्यान् । पशून् । दꣳ-
शुकाः । स्युः । यत् । विषूचीनम् । आरण्यान् ।
यजुः । एव । वदेत् । अवेति । ताम् । त्विषिम् ।

शोकमुत्सृजति । तस्मादित्यादि । समावत्संमं ‘समादावतुप्’ इति स्वार्थे वतुप् कनीयांसः अल्पतराः । शुचा ह्यृताः शुचं प्राप्तत्वात् ॥

[11]सर्पशीर्षमित्यादि ॥ पूर्ववत्समासान्तः । त्विषिः दीप्तिः । यदित्यादि । ग्राम्यान् पशून् दन्दशूका दंशनशीलाः सर्वाः स्युः यद्विषूचीनं आरण्यानिति दन्दशूकास्स्युरिति । एवं छान्दस उकञि ‘नलोकाव्ययनिष्ठा’ इति षष्ठीप्रतिषेधः । उक्ता ग्राम्यारण्याः पशवः । तस्मात् ‘नमो अस्तु सर्पेभ्यः’* इति मन्त्रानेव

*सं. ४-२-८.

षि॒ꣳ रुन्धे॒ या स॒र्पे न ग्रा॒म्यान्प॒शून्
हि॒नस्ति॒ नार॒ण्यानथो॒ खलू॑प॒धेयं॑-
मे॒व यदु॑प॒दधा॑ति॒ तेन॒ तां त्विषि॒मवं॑
रुन्धे॒ या स॒र्पे यद्यजु॒र्वदंति॒ तेनं शा॒-
न्तम् ॥ ५३ ॥

रुन्धे॒ । या । स॒र्पे । न । ग्रा॒म्यान् । प॒शून् । हि॒-
नस्ति॑ । न । आ॒र॒ण्यान् । [12]अथो॒ इति॑ । खलु॑ ।
उ॒प॒धेय॒मित्यु॑प-धेयं॑म् । ए॒व । यत् । उ॒प॒दधा॒ती-
त्यु॑प-दधा॑ति । तेन॑ । ताम् । त्विषि॑म् । अवेति॑ ।
रु॒न्धे॒ । या । स॒र्पे । यत् । यजुः॑ । वदं॑ति । तेनं॑ ।
शा॒न्तम् ॥ ५३ ॥

ऊ॒नां तस्योपं प्रा॒णास्स्या॒दिति॒ वै प॒शवो॑
रुन्धे॒ चतु॑श्चत्वारिꣳशच्च ॥९॥

---

वदेत् न सर्पशिर उपदध्यात् । यजुश्शब्दो मन्त्रमचनः । यजु-
र्वदनेन त्विषेः लाभः । अनुपधानेन उक्तदोषाप्रसङ्ग इति ॥

[12]अथो खल्वित्यादि पक्षान्तरविधिः ॥ उपधानेन त्विषिलाभः,
यजुर्वदनेन दोषशान्तिरिति । शान्तं शिवमित्यर्थः । अत्र ब्रा-
ह्मणानुसारिण आहुः—पशुशीर्षोपधानानन्तरं सर्पशीर्षोपधानमिति।
मन्त्राम्नानानुसारिणस्तु हिरण्मयपुरुषोपधानानन्तरं सर्पशीर्षोपधानमिति॥

इति पञ्चमे द्वितीये नवमोनुवाकः.

पशुर्वा एष यदग्निर्योनिः खलु वा
एषा पशोर्वि क्रियते यत्प्राचीनमैष्ट-
काद्यजुः क्रियते रेतोऽपस्या अपस्या
उप दधाति योनावेव रेतो दधाति

[1]पशुः । वै । एषः । यत् । अग्निः । योनिः । खलु । वै । एषा । पशोः । वीति । क्रियते । यत् । प्राचीनम् । ऐष्टकात् । यजुः । क्रियते । रेतः । अपस्याः । अपस्याः । उपेति । दधाति । योनौ । एव । रेतः । दधाति । पञ्च । उपेति । दधाति । पाङ्क्ताः । पशवः ।

---

[1]पशुर्वा एष इत्यादिः अपस्याविधिः ॥ अयमग्निः योनौ निषेकादिना उत्पाद्यत्वात् पशुकल्पः । तत्र 'योनिर्वा अग्नेः पुष्करपर्णं'* इति तदुपधानात् योनिः । सैषा ऐष्टकात् इष्टकासमूहोपधानात् प्राग्यजुःकरणेन उक्तोपधानादिप्रसक्तेन क्रियते अयोन्यर्हेण कर्मणा । तस्मात् एतत्परिहारार्थं रेतस्थानीया अपस्याः प्रथममुपदधाति योनौ रेतो दधाति अप्शब्दवानुपधानो मन्त्रः आसामिष्टकानामिति 'तद्वानासामुपधानो मन्त्रः' इति यत्प्रत्ययः । छान्दसोऽसुकागमः । अपस्याः 'अपां त्वेमन्'† इत्याद्यैर्मन्त्रैः उपधेया विंशतिरिष्टकाः ता अप्यभेदेन अपस्या उच्यन्ते । अप्शब्दवतां च बहुत्वात् सर्वा अपस्या उच्यन्ते ॥

[2]पञ्चेति ॥ प्रथमं पुरस्तात् प्रतीचीः प्रत्यग्रीतीः । पाङ्क्ता

---

*सं. ५-१-४[3].  †सं. ४-३-१.

पञ्चोपं दधाति पाङ्क्ताः पशवः पशू-
नेवास्मै प्र जनयति पञ्च दक्षिणतो
वज्रो वा अपस्यां वज्रेणैव यज्ञस्य
दक्षिणतो रक्षाꣳस्यपं हन्ति पञ्च प-
श्चात् ॥ ५४ ॥ प्राचीरुपं दधाति प-
श्चाद्वै प्राचीनꣳ रेतो धीयते पश्चादे-
वास्मै प्राचीनꣳ रेतो दधाति पञ्च

पशून् । एव । अस्मै । प्रेति । जनयति । पञ्च । दक्षि-
णतः । वज्रः । वै । अपस्याः । वज्रेण । एव । यज्ञ-
स्य । दक्षिणतः । रक्षाꣳसि । अपेति । हन्ति । पञ्च ।
पश्चात् ॥ ५४ ॥ प्राचीः । उपेति । दधाति । पश्चात् ।
वै । प्राचीनम् । रेतः । धीयते । पश्चात् । एव । अ-
स्मै । प्राचीनम् । रेतः । दधाति । [3]पञ्च । पुरस्तात् ।

---

इति पङ्क्तिप्रभवाः । पङ्क्तिशब्द उत्सादिः । दक्षिणत इति । उदीचीः 'अर्णवे' इत्यादिभिः । वज्रो वा इति । वज्रवद्वीर्यवत्य इति । प्राचीरिति । प्राग्गतीः । 'अपां त्वा सदने'* इत्यादिभिः । प्राचीनमिति । प्रागञ्चतीति प्राचीनं यत्रोपासनीयज्योतिः अन्तरुदेति सा प्राचीति कृत्वा ॥

[3]पञ्च पुरस्तादित्यादि ॥ पश्चात्प्राचीभिः प्राचीनं रेतो धीयते पुर-

---

*सं. ४-३-१.

पुरस्तात्प्रतीचीरुप दधाति पश्चं प-
श्चात्प्राचीस्तस्मात्प्राचीनꣳ रेतो धी-
यते प्रतीचीः प्रजा जायन्ते पश्चोत्त-
रतश्छन्दस्याः पशवो वै छन्दस्याः
पशूनेव प्रजातान्थ्स्वमायतनमभि
पर्यूहत इयं वा अग्नेरतिदाहादबिभे-

प्रतीचीः। उपेति। दधाति। पश्चं। पश्चात्। प्राचीः। तस्मात्। प्राचीनम्। रेतः। धीयते। प्रतीचीः। प्रजा इति प्र-जाः। जायन्ते। पश्चं। उत्तरत इत्युत्-तरतः। छन्दस्याः। पशवः। वै। छन्दस्याः। पशून्। एव। प्रजातानिति प्र-जातान्। स्वम्। आयतनमित्या-यतनम्। अभि। परीति। ऊहते। [4]इयम्। वै। अग्नेः। अतिदाहादित्यति-दाहात्।

स्तात्प्रतीचीभिः प्रतीच्यः प्रजा जायन्ते। उत्तरत इति। दक्षिणानीति। छन्दस्या इति। छन्दस्वता मन्त्रेण उपधेयाः 'गायत्री छन्दः'* इत्यादिभिः उपधेयाः। पूर्ववद्यत्, मतुब्लुक। पशव इति। पशुनिमित्तभूताः छन्दस्या इष्टकाः। पशूनिति। अपस्याभिरुत्पन्नत्वात् छन्दस्याभिः स्वस्मिन्नायतने स्थापयति। 'अभिरभागे' इति लक्षणे अभेः कर्मप्रवचनीयत्वम्॥

[4]इयं वा इत्यादि॥ पृथिव्या अनतिदाहाय भवन्त्यपस्या

*सं. ४-३-१.

थ्सैताः॥ ५५ ॥ अपस्यां अपश्यत्ता उपांधत्त ततो वा इमां नात्यंदहद्य- दंपस्यां उपदधात्यस्या अनंतिदाहा- योवाचं हेयमदादित्थ्स ब्रह्मणाऽन्नं य- स्यैता उंपधीयान्तै य उं चैना ए-

अबिभेत् । सा । एताः ॥ ५५ ॥ अपस्याः । अप- श्यत् । ताः । उपेति । अधत्त । ततः । वै । इमाम् । न । अतीति । अदहत् । यत् । अपस्याः । उपदधा- तीत्युप–दधाति । अस्याः । अनंतिदाहायेत्यनंति– दाहाय । उवाच । ह । इयम् । अदत् । इत् । सः । ब्रह्मणा । अन्नम् । यस्य । एताः । उपधी- यान्ता इत्युप–धीयान्तै । यः । उ । च । एनाः ।

---

इति । उवाचेत्यादि । इयं पृथिवी पूर्वमुवाच । कथं?—अदत् इत् अद्यादेवान्नं ब्रह्मणा परिबृढेनानेन कर्मणा सः, यस्यैता अतिदाहनिवृत्तिहेतवोऽपस्या उपधीयन्ते उपधीयेरन् यश्च एता अपस्या एवं ममातिदाहशमनोऽग्निरित्येतत् विद्यात् सोऽप्यन्नमद्यादेव। अददिति अत्तेर्लेटि शपो लुकि 'लेटोडाटौ' इत्यडागमः । स- मानवाक्ये पदात्परत्वाभावान्निघाताभावः । अददित्यादिभिर्वाक्या- न्तरं पृथिव्याः । दधातेः कर्मणि लेटि आडागमः 'वैतोन्यत्र' इत्यैकारः; पूर्ववदाडागमः ॥

वं वेददिति प्राणभृत उप दधाति रेतस्येव प्राणान्दधाति तस्माद्वदन्प्राणन्पश्यञ्छृण्वन्पशुर्जायतेऽयं पुरः॥ ५६ ॥ भुव इति पुरस्तादुप दधाति प्राणमेवैताभिर्दाधारायं दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभिर्दाधारायं पश्चाद्विश्वव्यचा इति प-

एवम् । वेदत् । इति । [5]प्राणभृत इति प्राण-भृतः । उपेति । दधाति । रेतसि । एव । प्राणानिति प्र-अनान् । दधाति । तस्मात् । वदन् । प्राणन्निति प्र-अनन् । पश्यन् । शृण्वन् । पशुः । जायते । अयम् । पुरः ॥ ५६ ॥ भुवः । इति । पुरस्तात् । उपेति । दधाति । प्राणमिति प्र-अनम् । एव । एताभिः । दाधार । अयम् । दक्षिणा । विश्वकर्मेति विश्व-कर्मा । इति । दक्षिणतः । मनः । एव । एताभिः । दाधार । अयम् । पश्चात् । वि-

[5]प्राणभृत इति ॥ पञ्चाशतं ' अयं पुरो भुवः '* इत्याद्याः । सिक्ते रेतसि प्राणभरणहेतुत्वात् प्राणभृत इति । तस्मादित्यादि ।

*सं. ४-३-२.

श्चाच्चक्षुरेवैताभिर्दाधारेदमुत्तराथ्सुव-
रित्युत्तरतश्श्रोत्रमेवैताभिर्दाधारेय-
मुपरिमतिरित्युपरिष्टाद्वाचमेवैताभि-
र्दाधार दशदशोप दधाति सवीर्य-
त्वायाक्षणया ॥ ५७॥ उप दधाति
तस्मादक्षणया पशवोऽङ्गानि प्र हर-

श्वव्यचा इति विश्व–व्यचाः । इति । पश्चात् । चक्षुः । एव । एताभिः । दाधार । इदम् । उत्तरादित्युत्–तरात् । सुवः । इति । उत्तरत इत्युत्–तरतः । श्रोत्रम् । एव । एताभिः । दाधार । इयम् । उपरि । मतिः । इति । उपरिष्टात् । वाचम् । एव । एताभिः । दाधार । दशदशेति दश–दश । उपेति । दधाति । सवीर्यत्वायेति सवीर्य–त्वाय । अक्षणया ॥ ५७ ॥ उपेति । दधाति । तस्मात् । अक्षणया । पशवः । अङ्गानि । प्रेति । हरन्ति । प्रतिष्ठित्या इति प्रति–स्थित्यै । याः । प्राचीः ।

गतम् । वदन्नित्यादयः प्राणवृत्तयः । दशदश प्रतिदिशं अक्षणया दश मध्येऽन्तरामन्तरां उपधाय बाह्यांबाह्याम् । दाधारेति । छान्दसे लेटि तुजादित्वादभ्यासस्य दीर्घत्वम् ॥

[6]याः प्राचीरिति ॥ प्राच्य उपधीयन्ते ताभिर्वसिष्ठः ऋद्धिं

न्ति प्रतिष्ठित्यै याः प्राचीस्ताभिर्व-
सिष्ठ आर्ध्नोद्या दक्षिणा ताभिर्भर-
द्वाजो याः प्रतीचीस्ताभिर्विश्वामि-
त्रो या उदीचीस्ताभिर्जमदग्निर्या
ऊर्ध्वास्ताभिर्विश्वकर्मा य एवमे-
तासामृद्धिं वेदर्ध्नोत्येव य आसामेवं
बन्धुतां वेद बन्धुमान्भवति य आ-

ताभिः । वसिष्ठः । आर्ध्नोत् । याः । दक्षिणा । ताभिः । भरद्वाजः । याः । प्रतीचीः । ताभिः । विश्वामित्र इति विश्व–मित्रः । याः । उदीचीः । ताभिः । जमदग्निः । याः । ऊर्ध्वाः । ताभिः । विश्वकर्मेति विश्व–कर्मा । [7]यः । एवम् । एतासाम् । ऋद्धिम् । वेद । ऋध्नोति । एव । यः । आसाम् । एवम् । बन्धुताम् । वेद । बन्धुमानिति बन्धु–

---

गतः । या दक्षिणेति । दक्षिणस्यां दिशि । 'दक्षिणादाच्' । प्रतीचीरिति । 'चौ' इति दीर्घत्वम् । उदीचीरिति । 'अनिगन्तोञ्चतौ' इति गतेः प्रकृतिस्वरत्वम् ॥

[7]य एवमित्यादि ॥ वसिष्ठादिकर्तृकाम् । आसां इति । आसादेशोनुदात्तः(?) । बन्धुतामिति । बन्धुसमूहं देशलक्षणम् । 'ग्रामजनबन्धुसहायेभ्यस्तल्' । ऋद्धिमिति । सामर्थ्यमृद्धिकरणे । आ-

सामेवं क्लृप्तिं वेद कल्पते॥ ५८ ॥
अस्मै य आसामेवमायतनं वेदाय-
तनवान्भवति य आसामेवं प्रतिष्ठां
वेद प्रत्येव तिष्ठति प्राणभृत उप-
धाय संयत उप दधाति प्राणानेवा-
स्मिन्धित्वा संयद्भिस्सं यच्छति त-

मान् । भवति । यः । आसाम् । एवम् । क्लृप्तिम् । वेद । कल्पते ॥ ५८ ॥ अस्मै । यः । आसाम् । एवम् । आयतनमित्या—यतनम् । वेद । आयतनवानित्यायतन—वान् । भवति । यः । आसाम् । एवम् । प्रतिष्ठामिति प्रति—स्थाम् । वेद । प्रतीति । एव । तिष्ठति । [8]प्राणभृत इति प्राण—भृतः । उपधायेत्युप—धाय । संयत इति सं—यतः । उपेति । दधाति । प्राणानिति प्र—अनान् । एव । अस्मिन् । धित्वा । संयद्भिरिति संयत्—भिः । सामिति । य-

यतनमिति । वा गायत्रीति प्रागादि (?) । प्रतिष्ठामिति । कार्यकारणभावेन प्राणवृद्धिम् ॥

[8]संयत इत्यादि ॥ प्राणस्य निहितस्य संयमहेतवः संयतः । अथो अपि च प्राणे प्राणपार्श्वे अपानस्य संयमाश्च संयतः । संपूर्वाद्यच्छतेः छान्दसोऽनुनासिकलोपः । तदेवाह—तस्मात्प्राणापानौ

थ्सं॒यता॑ꣳ संय॒त्त्वमथो॑ प्रा॒ण ए॒वा-
पा॒नं द॑धाति॒ तस्मा॑त्प्राणापा॒नौ सं
च॑रतो॒ विषू॑ची॒रुप॑ दधाति॒ तस्मा॒-
द्विष्व॑ञ्चौ प्राणापा॒नौ यद्वा अ॒ग्नेरसं॑-

च्छाति॒ । तत् । सं॒यता॒मिति॑ सं-यता॑म् । सं॒य॒त्त्व-
मिति॑ संयत्-त्वम् । अथो॒ इति॑ । प्रा॒ण इति॑ प्र-
अ॒ने । ए॒व । अ॒पा॒नमित्य॑प-अ॒नम् । द॒धाति॒ ।
तस्मा॑त् । प्रा॒णा॒पा॒नाविति॑ प्राण-अ॒पा॒नौ । सामि-
ति॑ । च॒र॒तः । [9]विषू॑चीः । उपेति॑ । द॒धाति॒ । त-
स्मा॑त् । विष्व॑ञ्चौ । प्रा॒णा॒पा॒नाविति॑ प्राण-अ॒पा-
नौ । [10]यत् । वै । अ॒ग्नेः । असं॑यत॒मित्यसं॑-य॒त॒म्

संचरत इति । सह चरत इत्यर्थः । एवमपानभृत इत्यप्यासा-
माख्या लभ्यते । एकपञ्चाशद्भवति 'प्राची दिशां'* इत्याद्या
दशदश प्रतिदिशं अक्ष्णया दश मध्ये ॥

[9]विषूचीरिति ॥ यादृश्यः प्राणभृतः तत्प्रतिकूलगतीः । तेन बा-
ह्यांबाह्यामुपधाय अन्तरामन्तरामुपदधाति । तस्माद्विष्वञ्चौ इति ।
ऊर्ध्वाधोवृत्तित्वात् ॥

[10]इदानीं अग्नेरपि संयमनात् संयत्त्वमासामिति प्रतिपादयितुमाह—
यद्वा इत्यादि ॥ अग्नेर्यद्रूपमसंयतं तस्य यजमानस्य असुवर्ग्यं ।

*सं. ४-२-९.

यतम् ॥ ५९ ॥ असुवर्ग्यमस्य त-
थ्सुवर्ग्योऽग्निर्यथ्संयतं उपदधाति
समेवैनं यच्छति सुवर्ग्यमेवाक-
स्त्र्यविर्वयः कृतमयानामित्याह व-
योभिरेवायानवं रुन्धेऽयैर्वयाꣳसि

॥ ५९ ॥ असुवर्ग्यमित्यसुवः–ग्यम् । अस्य । तत् । सुवर्ग्य इति सुवः–ग्यः । अग्निः । यत् । संयत इति सं–यतः । उपदधातीत्युप–दधाति । समिति । एव । एनम् । यच्छति । सुवर्ग्यमिति सुवः–ग्यम् । एव । अकः । [11]त्र्यविरिति त्रि–अविः । वयः । कृतम् । अयानाम् । इति । आह । वयोभिरिति वयः–भिः । एव । अयान् । अवेति । रुन्धे । अयैः ।

---

'गोद्यचचः' इति यत् । अग्निश्चायं स्वर्गनिमित्ततया चीयते । तस्मात्संयदुपधानेन एनं संयतं कृत्वा स्वर्ग्यमेवाकः करोति । छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् ॥

[11]वयोभिरेवेति ॥ अव्यादीनि वयांसि । अष्टादशमास्यं वयस्त्र्यविः । कृतादीनि युगाख्याः । उभयतोऽपि कालावयवोपादानं किमर्थं इति पर्यनुयोगावसरे उभयोपादानप्रयोजनं अनेनाह—वयोविशेषनिमित्तको युगविशेषजन्मलाभः युगविशेषस्य लाभे भवति । तस्मात् उभयसिद्ध्यर्थं उभयोपादानमिति भावः ॥

सर्वतो वायुमतीर्भवन्ति तस्माद-
यꣳ सर्वतः पवते ॥ ६० ॥
गायत्री त्रिष्टुब्जगत्यनुष्टुक्पङ्क्त्या स-
वयाꣳसि । [12]सर्वतः । वायुमतीरिति वायु-मतीः ।
भवन्ति । तस्मात् । अयम् । सर्वतः । पवते ॥ ६० ॥
पश्चादेताः पुरोऽक्षणया कल्पतेऽसंयतं पञ्च-
त्रिꣳशश्च ॥ १० ॥
[1]गायत्री । त्रिष्टुप् । जगती । अनुष्टुगित्यनु-

---

[12]सर्वत इति ॥ सर्वासु दिक्षु पुरोवातादिवायुविशेषवत्यो भवन्ति । 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम् । तस्मादयं वायुः सर्वाभ्यो दिग्भ्यः पवते पवमान आगच्छति ॥

इति पञ्चमे द्वितीये दशमोनुवाकः.

---

[1]अथ अश्वमेधं काण्डं वैश्वदेवं तत्र संज्ञप्तस्याश्वस्य पत्नचः सूचीभिः असिपथान् कल्पयन्ति गायत्रीत्रिष्टुबित्यादिभिः ॥ असिमार्गकल्पनं सुखविशसनार्थम् । तत्र महिषी सौवर्णीभिः सूचीभिः प्राक्क्रोडादसिपथान् कल्पयति प्रथमाभ्याम् । अथ राजतीभिः सूचीभिः वावाता प्रत्यक्क्रोडान् प्राङ्नाभेरुत्तराभ्याम् । अथोत्तराभ्यां लौहितीभिः सूचीभिः परिवृक्ती वेषमार्गं कल्पयति । सर्वश्चायमानुष्टुभोऽनुवाकः । कुविदङ्गेति त्रिष्टुप् । तत्र प्रथमा—जगत्यन्तः प्रथमः पादः । गायत्र्या-

ह। बृहत्युष्णिहा ककुथ्सूचीभिश्शिम्यन्तु त्वा। द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा। सच्छन्दा या च विच्छन्दास्सूचीभिश्शिम्यन्तु त्वा।

स्तुक्। पङ्क्त्या। सह। बृहती। उष्णिहा। ककुत्। सूचीभिः। शिम्यन्तु। त्वा। [2]द्विपदेति द्वि–पदा। या। चतुष्पदेति चतुः–पदा। त्रिपदेति त्रि–पदा। या। च। षट्पदेति षट्–पदा। सच्छन्दा इति स–छन्दाः। या। च। विच्छन्दा इति वि–छन्दाः।

---

दीनि छन्दांसि पङ्क्त्या सहितानि बृहती चोष्णिहा ककुप्च। उष्णिहाशब्द आकारान्तोप्यस्ति। यद्वा—उष्णिहा सहिता बृहती ककुप्च ककुदतिच्छन्दाः। तेन सर्वाणि छन्दांसि गृह्यन्ते इत्येकेन उष्णिग्विशेषेण ककुद्ग्रहणम्। यथोक्तम् 'मध्ये चेद्द्वादशाक्षरः ककुदुष्णिक्' इति। एतेनैव सर्वाणि छन्दांसि गृह्यन्ते इति तानि सर्वाणि छन्दांसि त्वां संशमयन्तु। शम्यतिः छान्दसः शमयतिकर्मा शमितृव्यापारमाचष्टे। विशसनकाले भविष्यतामसिपथानां प्रतिपथः छन्दः प्रातिरेव(?) शमितृत्वेन वर्तमाने कल्पितात् विशसनकाले दुःखं न भविष्यतीति प्रयोजनम्॥

[2]अथ द्वितीया—द्विपदा गायत्र्यादिः या च चतुष्पादा या च त्रिपदा। यथोक्तम्—'एकद्वित्रिचतुष्पादुक्तपादं' इति या च। षट्पदा जगती, प्रदर्शनमात्रमिदं; तेन पञ्चपदा पङ्क्तिः सप्तपदा शक्वरी च गृह्यते। या च सच्छन्दा उक्ताद्युत्कृत्यन्तछन्दोलक्षणव-

महानाम्नी रेवतयो विश्वा आशाः
प्रसूवरीः । मेघ्या विद्युतो वाचस्सू-
चीभिश्शिम्यन्तु त्वा । रजता हरिणी-

सूचीभिः । शिम्यन्तु । त्वा । [3]महानाम्नीरिति म-
हा—नाम्नीः । रेवतयः । विश्वाः । आशाः । प्रसूव-
रीरिति प्र—सूवरीः । मेघ्याः । विद्युत इति वि—
द्युतः । वाचः । सूचीभिः । शिम्यन्तु । त्वा । [4]र-
जताः । हरिणीः । सीसाः । युजः । युज्यन्ते ।

---

ती या च विछन्दाः छन्दोलक्षणरहिता देवानां गायत्र्यादिका-
श्च सर्वास्त्वां सूचीभिः शिम्यन्तु शमयन्तु ॥

[3]अथ तृतीया—महानाम्नीः महानाम्नी अत्रपूजितनामधेया ।
'अन उपधालोपिनः' इति दीर्घः । 'वा छन्दसि' इति पूर्व-
सवर्णदीर्घत्वम् । रेवतयः धनवत्यः । 'रयेर्मतौ बहुलम्'
इति संप्रसारणम् । 'रेशब्दाच्च' इति मतुप उदात्तत्वम् ।
छान्दसं ङीपो ह्रस्वत्वम् । पदद्वयेन देवताविशेषा उच्यन्ते ।
आशानामिव विशेषणं सर्वा दिशः प्रसूवरीः प्रसवनशीलाः । 'अ-
न्येभ्योपि दृश्यते' इति क्वनिप् । 'वनोरच' इति ङीब्रेफौ ।
पूर्वसवर्णदीर्घत्वम् । मेघ्याः मेघेषु भवाः वाचः स्तनयित्नुशब्दो विद्यु-
तश्च सूचीभिः शिम्यन्तु त्वा । गतम् ॥

[4]चतुर्थी—सीसान्तः प्रथमपादः । रजता रूप्यमय्यः हरिणीः
हरिण्यः सौवर्ण्यः सीसाः आयस्याः युजः संहिताः कर्मसु योग्याः

स्सीसा युजो युज्यन्ते कर्मभिः ।
अश्वस्य वाजिनस्त्वचि सूचीभि-
श्शिम्यन्तु त्वा । नारीः ॥ ६१ ॥
ते पत्नयो लोम वि चिन्वन्तु मनीष-
या । देवानां पत्नीर्दिशस्सूचीभिश्शि-

कर्मभिरिति कर्म-भिः । अश्वस्य । वाजिनः । त्वचि । सूचीभिः । शिम्यन्तु । त्वा । [5]नारीः ॥ ६१ ॥ ते । पत्नयः । लोम । वीति । चिन्वन्तु । मनीषया । देवानाम् । पत्नीः । दिशः । सूचीभिः ।

---

अत एव च कर्मभिः युज्यन्ते ईदृशीभिः सूचिभिः शिम्यन्तु त्वा । के ये अश्वस्य वेगवतो वाजिनः अन्नवतः तव त्वचि विशसनाय प्रवर्तन्ते । अस्यादयश्शभित्रादयो वा । यद्वा—सूचीभिः इति विभक्तिव्यत्ययः ईदृश्यः सूच्यः त्वां शिम्यन्तु इति ॥

[5]पञ्चमी—लोमान्तः प्रथमपादः । नारीः नार्यः । पूर्ववत्पूर्वसवर्णदीर्घत्वम् । पत्नयः पत्न्यः । महिषी वावाता परिवृक्ती राज्ञः पत्न्यः सर्वा एव पतिव्रताः । पूर्ववद्ध्रस्वत्वम् । लोम लोमानि जातावेकवचनम् । 'सुपां सुलुक्' इति वा द्वितीयाबहुवचनस्य लुक् । विचिन्वन्तु असिमार्गेभ्यो उपनयन्तु मनीषया स्वाभिप्रायेण देवानां पत्न्यः इन्द्राण्यादयश्च दिशः प्राच्यादयश्च प्राच्यादिव्यवस्थिताः मनुष्याश्चेत्यर्थः । सूचीभिरित्यादि गतम् ॥

म्यन्तु त्वा । कुविदङ्ग यवमन्तो यवं
चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां
कृणुत भोजनानि ये बर्हिषो न-
मोवृक्तिं न जग्मुः ॥ ६२ ॥

शिम्यन्तु । त्वा । [6]कुवित् । अङ्ग । यवमन्त इति यव—मन्तः । यवम् । चित् । यथा । दान्ति । अनुपूर्वमित्यनु—पूर्वम् । वियूयेति वि—यूय । इहेहेतीह—इह । एषाम् । कृणुत । भोजनानि । ये । बर्हिषः । नमोवृक्तिमिति नमः—वृक्तिम् । न । जग्मुः ॥ ६२ ॥

नारीस्त्रिꣳशच्च ॥ ११ ॥

---

[6]षष्ठी—कुविदङ्गेति व्याख्यातेयं 'स्वाद्वीं त्वा '* इत्यत्र । प्रसिद्धमेवैतत्—यथा यवादिबहुधान्यवन्तो यवादीन् सहोत्पद्यमानान् अनुपूर्वं परिपाट्या पृथक्कृत्य दान्ति लुनन्ति पृथक्त्वेन स्थापयन्ति परस्परं कुण्डपलालादिभ्यो वा तुषकणादिभ्यो वा पृथक्कृत्य शोधयन्ति तथा यूयमपि हे अस्यादयः तेषां भोजनानि कृणुत अस्याद्युद्गम्य तुषादिकं पृथक्कृत्य भोक्तव्यानि स्वादूनि कुरुत । इहेह स्थाने लोके वा केषां ये बर्हिषो यज्ञस्य वा नमोवृक्तिं नमस्कारनाशं न जग्मुः न गता अस्माकमुपकारिणः तेषां कृणुत । ये पुनर्नाशयन्ति ते तु अनेन विनाश्यन्तामिति ॥

इति पञ्चमे द्वितीये एकादशोनुवाकः.

---

*सं. १-८-२१.

कस्त्वां छ्यति कस्त्वा वि शास्ति
कस्ते गात्राणि शिम्यति। क उं ते श-
मिता कविः। ऋतवंस्त ऋतुधा प-

[1]कः। त्वा। छ्यति। कः। त्वा। वीति। शा-स्ति। कः। ते। गात्राणि। शिम्यति। कः। उ। ते। शमिता। कविः। [2]ऋतवः। ते। ऋतुधेत्यृतु–धा। परुः। शमितारः। वीति। शासतु। संवत्सरस्ये-

---

[1]अथ अश्वं विशसति कस्त्वाछ्यतीत्यनुवाकेन ॥ अयमपि सर्व आनुष्टुभोनुवाकः। प्रथमा गायत्री। कः प्रजापतिः स एव त्वा छ्यति छिनत्ति स एव योग्य इति। छो छेदने, 'ओतश्श्यनि' इत्योकारलोपः। क एव त्वां विशास्ति विशसतीत्यनया भूयुक्तं करोति। विपूर्वश्शास्तिर्विशसने। यद्वा—शसु हिंसायां इत्यस्य 'बहुलं छन्दसि' इति शपो लुक्, वर्णव्यत्ययेन अकारः। क एव ते तव गात्राणि शिम्यति शमयति सुखेन विशसति। यद्वा—अविनाशेन अङ्गानि विशस्य स्थापयति। यस्मादेवं तस्मात् क एव शमिता शमयिता कविः मेधावी अवयवविभागज्ञः। 'शमिता यज्ञे' इति ण्यन्तस्य निपात्यते॥

[2]अथ द्वितीया—ऋतवो वसन्तादयः ते तव शमितारो भूत्वा ऋतुधा ऋतावृतौ तत्तदृत्वनुरूपं कालेकाले वा। वीप्सायां छान्दसो धाप्रत्ययः। परुः परूंषि पर्वाणि विशासतु विशसन्तु। यद्वा—परुरितिं वीप्स्यते। परुः पर्वविभागेनेत्यर्थः। संवत्सरस्य धायसा साधारण्येन तदधीनत्वात्तेषां शिमीभिः विशसनकर्मभिः

रुꣳशमितारो वि शासतु । संवत्सरस्य धायसा शिमीभिश्शिम्यन्तु त्वा। दैव्या अध्वर्यवस्त्वा छयन्तु वि च शासतु । गात्राणि पर्वशस्ते शिमाः कृण्वन्तु शिम्यन्तः । अर्धमासाः परूꣳषि ते मासाश्छयन्तु शिम्यन्तः

ति सं–वत्सरस्य । धायसा । शिमीभिः । शिम्यन्तु । त्वा । [3]दैव्याः । अध्वर्यवः । त्वा । छयन्तु । वीति । च । शासतु । गात्राणि । पर्वश इति पर्व–शः । ते । शिमाः । कृण्वन्तु । शिम्यन्तः । [4]अर्धमासा इत्यर्ध–मासाः । परूꣳषि । ते । मासाः । छयन्तु । शि-

---

हविर्भागादानसमर्थाभिः शिम्यन्तु ऋतवः । ‘ वहिहाधाञ्भ्यः छन्दसि ’ इति दधातेरसुन् । णिदिति हि तत्रानुवर्तते । शिम्यतेः ‘ इन् सर्वधातुभ्यः ’ इतीन्प्रत्ययः, छान्दसं दीर्घत्वम् ॥

[3]तृतीया—दैव्याः दिव्याः । ‘ देवाद्यञञौ ’ इति यञ् । अध्वर्युः अध्वरस्य नेता । क्यचि ‘ कव्यध्वरपृतनस्यर्चि ’ इति लोपः ‘ क्याच्छन्दसि ’ इति उप्रत्ययः । त्वा छयन्तु संविशासन्तु च । ते तव गात्राणि पर्वशः । ‘ संख्यैकवचनाच्च ’ इति शस् । विशासनसमर्थाः ते दैव्या अध्वर्यवः शिम्यन्तः शमयन्तः कृण्वन्तु पर्वशः कुर्वन्तु ॥

[4]चतुर्थी—अर्धमासाः परूंषि पर्वाणि पूर्णमासादयो मासाश्च छयन्तु छेदनेन त्वां हविः कुर्वन्तु शिम्यन्तः शमयन्तः । यद्वा—अ-

न्तः । अहोरात्राणि मरुतो विलि-
ष्टम् ॥ ६३ ॥ सूदयन्तु ते । पृथि-
वी तेऽन्तरिक्षेण वायुश्छिद्रं भिष-
ज्यतु । द्यौस्ते नक्षत्रैस्सह रूपं कृ-
णोतु साधुया । शं ते परेभ्यो गा-

म्यन्तः । अहोरात्राणीत्यहः—रात्राणि । मरुतः । विलिष्टमिति वि—लिष्टम् ॥ ६३ ॥ सूदयन्तु । ते । [5]पृथिवी । ते । अन्तरिक्षेण । वायुः । छिद्रम् । भिषज्यतु । द्यौः । ते । नक्षत्रैः । सह । रूपम् । कृणोतु । साधुया । [6]शम् । ते । परेभ्यः । गात्रेभ्यः । शम् । अस्तु । अवरेभ्यः । शम् । अस्थभ्य इत्यस्थ—भ्यः ।

---

र्धमासाश्च तव पुरूंषि अवयवान् शिम्यन्तु छ्यन्तु अहोरात्राणि मरुतश्च ते विलिष्टं विनाशितं विश्लिष्टं वा सूदयन्तु क्षारयन्तु स्वादुकुर्वन्तु वा । यद्वा—यद्विलिष्टं यागायोग्यं यद्विरूपं विशसितं तद्विनाशयन्तु ॥

[5]पञ्चमी—पृथिवी अन्तरिक्षेण सहितो वायुश्च तव छिद्रं विनष्टं भिषज्यतु अविनष्टं करोतु । द्यौरपि नक्षत्रैस्सह तव रूपं कृणोतु साधु । द्वितीयाया याजादेशः । यागसाधनं कुर्वन्त्विति ॥

[6]षष्ठी—ते तव परेभ्यो गात्रेभ्यः हविष्ट्वं प्रतिपाद्यमानेभ्यः शं सुखमस्तु । अवरेभ्यः हविष्ट्वं प्रतिपाद्यमानेभ्यश्च शमस्तु । अस्थभ्यः अस्थिभ्यश्च शमस्तु । 'छन्दस्यपि दृश्यते' इत्यनङ् । मज्जभ्यश्च शमस्तु ।

त्रेभ्यश्शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यश्शमु ते तनुवे भुवत् ॥६४॥

मज्जभ्य इति मज्ज–भ्यः । शम् । उ । ते । तनुवे । भुवत् ॥ ६४ ॥

विलिखं त्रिꣳशच्च ॥ १२ ॥

विष्णुमुखा अन्नपते यावती वि वै पुरुषमात्रेणाग्ने तव श्रवो वयो ब्रह्म जज्ञानꣳ स्वयमातृण्णामेषां वै पशुर्गायत्री कस्त्वा द्वादश ॥ १२ ॥

विष्णुमुखा अपचितिमान् वि वा एतावग्ने तव स्वयमातृण्णां विषूचीनानि गायत्री चतुष्षष्टिः ॥ ६४ ॥

पञ्चमकाण्डे द्वितीयः प्रश्नः.

---

किं बहुना ते तव तनुवः शरीरस्य शं सुखमेव भुवत् भवतु । तनूशब्द ऊकारान्तोप्यस्ति । भवतेर्लेट् ‘ बहुलं छन्दसि ’ इति शपो लुक् ‘ लेटोडाटौ ’ इत्यडागमः ‘ भूसुवोस्तिङि ’ इति गुणाभावः ॥

इति भट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये पञ्चमे काण्डे द्वितीयप्रश्ने द्वादशोनुवाकः.

समाप्तो द्वितीयप्रपाठकः.

## तृतीयप्रपाठकप्रारम्भः

उथ्सन्नयज्ञो वा एष यदग्निः किं वा-
ऽहैतस्यं क्रियते किं वा न यद्वै य-
ज्ञस्यं क्रियमाणस्यान्तर्यन्ति पूयंति
वा अंस्य तदांश्विनीरुपं दधात्यश्वि-
नौ वै देवानां भिषजौ ताभ्यांमेवा-

[1]उत्सन्नयज्ञ इत्युंत्सन्न—यज्ञः । वै । एषः । यत् । अग्निः । किम् । वा । अहं । एतस्यं । क्रियते । किम् । वा । न । यत् । वै । यज्ञस्यं । क्रियमाणस्य । अन्तर्यन्तीत्यंन्तः—यन्तिं । पूयंति । वै । अस्य । तत् । आश्विनीः । उपेतिं । दधाति । अश्विनौ । वै । देवानांम् । भिषजौ । ताभ्यांम् । ए-

---

[1]उक्ता प्रथमा चितिः । इदानीं द्वितीयस्यां चितौ आश्विनीर्विधातुमाह—उत्सन्नयज्ञ इत्यादि ॥ अतः परमग्निकाण्डमेव । उत्सन्नयज्ञः । शाकपार्थिवादिः । अग्नौ भूयिष्ठं कर्मोत्सन्नं भवति, कार्त्स्न्येन कर्तुमशक्यत्वात् । तस्मात् एतस्य किं कर्तव्यं क्रियते किं वाऽकर्तव्यमेव क्रियते इति को ज्ञातुं अर्हति । अहेति पक्षे । यच्च यज्ञस्य क्रियमाणस्य कार्त्स्न्येन निवर्तयितुं प्रारब्धस्य सम्बन्धिनः अन्तर्यन्ति नाशयन्ति । प्रमादादननुष्ठानमेव नाशः । 'अन्तरपरिग्रहे' इति गतित्वात् 'तिङि चोदात्तवति' इत्यन्तशब्दस्य अनुदा-

स्मै भेषजं करोति पञ्चोप दधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्मै भेषजं करोत्यृतव्या उप दधात्यृतूनां क्लृप्त्यै ॥ १ ॥ पञ्चोप दधाति पञ्च वा ऋतवो यावन्त एवर्तवस्तान्क-

व । अस्मै । भेषजम् । करोति । [2]पञ्च । उपेति । दधाति । पाङ्क्तः । यज्ञः । यावान् । एव । यज्ञः । तस्मै । भेषजम् । करोति । ऋतव्याः । उपेति । दधाति । ऋतूनाम् । क्लृप्त्यै ॥ १ ॥ पञ्च । उपेति । दधाति । पञ्च । वै । ऋतवः । यावन्तः । एव ।

त्त्वम् । 'यद्वृत्तान्नित्यम्' इति आख्यातं न निहन्यते । तदाऽस्य अङ्गं पूयति विशीर्यते दुष्टं पच्यते भिषजा चिकित्सितव्यं भवति । पूयी विशरणे । आश्विनीरिति । 'ध्रुवक्षितिः'* इत्याद्याः । अश्विमानुपधान आसामिति 'अश्विमानण्' इत्यण्प्रत्ययः । अश्विनावित्यादि । गतम् ॥

[2]पञ्चेति ॥ एकैका दिक्षु एका मध्ये । पाङ्क्तत्वमुक्तम् । ऋतव्या इति। ऋतुमता मन्त्रेणोपधेयाः । पूर्ववत् यत् । 'सजूर् ऋतुभिस्सजूर्विधाभिस्सजूर्वसुभिः'* इत्याद्याः । क्लृप्त्यै अविपर्यस्तधर्मतायै । पञ्चेति। एकैका दिक्षु एकां मध्ये । पञ्च वा इति । हेमन्तशिशिरयोरेकत्वात् ॥

*सं. ४-३-४.

ल्पयति समानप्रभृतयो भवन्ति
समानोदर्कास्तस्माथ्समाना ऋतव
एकेन पदेन व्यावर्तन्ते तस्मादृतवो

ऋतवः । तान् । कल्पयति । [3]समानप्रभृतय इति समान-प्रभृतयः । भवन्ति । समानोदर्का इति समान-उदर्काः । तस्मात् । समानाः । ऋतवः । एकेन । पदेन । व्यावर्तन्त इति वि-आवर्तन्ते । तस्मात् । ऋतवः । व्यावर्तन्त इति वि-आवर्तन्ते ।

---

[3]समानप्रभृतय इति ॥ एकप्रारम्भा एकसमाप्तय इत्यर्थः । तस्मान्मध्ये (दोषं) एकं पदं व्यावर्तते तासां, यथा—सजूरादिकं वसुभी रुद्रैरादित्यैः विश्वैर्देवैरिति । सर्वमन्यत्समानं, यथा—सजूर् ऋतुभिस्सजूर्विधाभिः '* इति सर्वासां प्रभृतिः । 'सजूर्देवैर्वयोनाधैः '* इत्यादि सर्वासामुदर्कः । तस्मादित्यादि । मन्त्राणां अत्यन्तसाम्यात् ऋतवोऽप्यत्यन्तसमाना भवन्ति । एकेनेत्यादिना पुनः प्रवृत्ति प्रतिपादयन्ति । तस्मादिति । एकेन पदेन व्यावृत्तत्वात् मन्त्राणां समाना अपि सन्तो व्यावृत्तधर्माणो भवन्ति ऋतवः । केचिदाहुः—विधाः वसुरुद्रादित्यविश्वेदेवाः । व्यावर्तकाः विधा इत्याव [इत्येवं] उच्यन्ते । 'सजूर् ऋतुभिः '* इति प्रभृतिः उदर्कः स (एक) एव । 'सजूर्देवैः '* इति वीप्सा पञ्चस्वनुषङ्गद्योतनार्था इति ॥

---

*सं. ४-३-४.

व्यावर्तन्ते प्राणभृत उप दधात्यृतु-
ष्वेव प्राणान्दधाति तस्मात्समाना-
स्सन्त ऋतवो न जीर्यन्त्यथो प्र
जनयत्येवैनानेष वै वायुर्यत्प्राणो
यदृतव्या उपधाय प्राणभृतः॥ २ ॥

[4]प्राणभृत इति प्राण-भृतः । उपेति । दधाति । ऋतुषु । एव । प्राणानिति प्र-अनान् । दधाति । तस्मात् । समानाः । सन्तः । ऋतवः । न । जीर्यन्ति । अथो इति । प्रेति । जनयति । एव । एनान् । [5]एषः । वै । वायुः । यत् । प्राण इति प्र-अनः । यत् । ऋतव्याः । उपधायेत्युप-धाय । प्राणभृत इति प्राण-भृतः ॥ २ ॥ उपदधातीत्युप-

---

[4]प्राणभृत इति ॥ पञ्च एकैका दिक्षु एकां मध्ये । 'प्राणं मे पाहि'* इत्याद्या ऋतुषु प्राणभरणहेतुत्वात्प्राणभृतः प्रजानां प्राणाद्यभिवृद्धिहेतुत्वमेव ऋतूनां प्राणादिमत्त्वम् । तस्मादिति । सर्वकालं समाना एकस्वभावा एव सन्तो भवन्तो न कदाचिदपि जीर्यन्त्यृतवः, समाना एव भवन्ति । अथो अपि च प्रजनयत्येवैनान् ऋतून् प्राणादिमत्तया न जराभावमात्रमेव क्रियत इति ॥

[5]एष वा इति ॥ गतम् । सर्वानृतूनिति । सर्वैः ऋतुभिः लक्षितः ।

---

*सं. ४-३-४.

उपदधाति तस्माथ्सर्वानृतूननु वा-
युरावरीवर्ति वृष्टिसनीरुप दधाति
वृष्टिमेवाव रुन्धे यदेकधोपदध्यादेकं-
मृतुं वर्षेदनुपरिहारꣳ सादयति त-
स्माथ्सर्वानृतून् वर्षति यत्प्राणभृतं

दधाति । तस्मात् । सर्वान् । ऋतून् । अन्विति । वायुः । एति । वरीवर्ति । [6]वृष्टिसनीरिति वृष्टि-सनीः । उपेति । दधाति । वृष्टिम् । एव । अवेति । रुन्धे । यत् । एकधेत्येक-धा । उपदध्यादित्युप-दध्यात् । एकम् । ऋतुम् । वर्षेत् । अनुपरिहारमित्यनु-परिहारम् । सादयति । तस्मात् । सर्वान् । ऋतून् । वर्षति । यत् । प्राणभृत इति प्राण-

लक्षणेऽनोः कर्मप्रवचनीयत्वम् । आवरीवर्ति पुनःपुनरावर्तते । यङ्लुकि 'रीगृदुपधस्य च' इति रीगागमः ॥

[6]वृष्टिसनीरिति ॥ पञ्च एकैका दिक्षु एका मध्ये । 'अपस्पिन्व'* इत्याद्याः वृष्टिसनित्र्यः वृष्टिसनयः । 'छन्दसि वनसन' इतीन्प्रत्ययः । एकधेति । एकस्यामेव दिशि स्थित उपदध्यात् । एकमृतुमिति । अत्यन्तसंयोगे द्वितीया । अनुपरिहारमिति । अनुक्रमेण परितस्सर्वासु दिक्षु गत्वा सादयति सर्वस्यां दिशि उप-

*सं. ४-३-४.

उपधायं वृष्टिसनीरुपदधाति तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्ते पशवो वै वयस्या नानामनसः खलु वै पशवो नानाव्रतास्तेऽप एवाभि समन-

भूतः । उपधायेत्युप-धायं । वृष्टिसनीरिति वृष्टि-सनीः । उपदधातीत्युप-दधाति । तस्मात् । वायुप्रच्युतेति वायु-प्रच्युता । दिवः । वृष्टिः । ईर्ते । [7] पशवः । वै । वयस्याः । नानामनस इति नाना-मनसः । खलु । वै । पशवः । नानाव्रता इति ना-

दधाति । आभीक्ष्ण्ये णमुल् । तस्मादित्यादि । गतम् । वायु प्रच्युतेति । वायुना प्रच्याविता । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । ईर्ते इति । च्यवते । ईर गतौ आदादिकः ॥

[7]अथ वयस्या विधास्यन् तासां अपस्याभ्यः पूर्वमेवोपधेयत्वं शाखान्तरविधेयं दूषयितुमाह—पशवो वै वयस्या इति ॥ तत्साधनत्वात्तच्छब्द्यम् । वयस्यावानुपधानो मन्त्रः आसामिति वयस्याः 'त्र्यविर्वयः'* इत्याद्या एकोनविंशतिः । नानामनस इत्यादि । ना आवयः नदे यस्मै [नावश्यं यदेकस्मै रोचते तदन्यस्मै] रोचते । तथा नानाव्रताः नानाकर्माणः यत्रैव कश्चित् प्रवर्तते तत्रैवान्यो निर्वर्तते । सर्वेऽपि पशवो लक्षीकृत्य समानमनसो भवन्ति । सर्वे-

*सं. ४-३-५.

सः ॥३॥ यं कामयेतापशुस्स्यादि-
ति वयस्यास्तस्योपधायापस्या उप
दध्यादसंज्ञानमेवास्मै पशुभिः क-
रोत्यपशुरेव भवति यं कामयेत प-
शुमान्थ्स्यादित्यपस्यास्तस्योपधाय

ना–व्रताः । ते । अपः । एव । अभीति । समनस
इति स–मनसः ॥ ३ ॥ [६]यम् । कामयेत । अप-
शुः । स्यात् । इति । वयस्याः । तस्य । उपधाये-
त्युप–धाय । अपस्याः । उपेति । दध्यात् । असं-
ज्ञानमित्यसं–ज्ञानम् । एव । अस्मै । पशुभिरिति
पशु–भिः । करोति । अपशुः । एव । भवति । यम् ।
कामयेत । पशुमानिति पशु–मान् । स्यात् । इति ।
अपस्याः । तस्य । उपधायेत्युप–धाय । वयस्याः ।

भ्योप्यापः रोचन्ते । सर्वेऽपि स्नानपानादिना अप्सु रमन्ते । तस्मा-देवमपां सर्वाभिमतत्वादपस्यानामेव प्राथम्यं युक्तियुक्तमिति । अपस्या-शब्देन चानन्तरोपहिताः 'अपस्पिन्व'* इत्यादयो, वृष्टिसनय उच्यन्ते ॥

[६]यं कामयेतेत्यादि ॥ प्रथममुपहितानां पश्वात्मनां वयस्यानां पश्चादनुपरिहारमुपधीयमानाभिः अपस्याभिः अभिभूतत्वादस्य यज-मानस्य पशुभिरसंज्ञानं अप्रकाशं करोति बहुपशुभिरप्रसिद्धेः अ-

* सं. ४-३-४,

वयस्यां उपं दध्याथ्संज्ञानमेवास्मै
पशुभिः करोति पशुमानेव भवति
चतंस्रः पुरस्तादुपं दधाति तस्मां-
च्चत्वारि चक्षुंषो रूपाणि द्वे शुक्ले द्वे

उपेतिं । दध्यात् । संज्ञानमितिं सं-ज्ञानंम् । एव । अस्मै । पशुभिरितिं पशु-भिः । करोति । पशुमानितिं पशु-मान् । एव । भवति । [9]चतंस्रः । पुरस्तांत् । उपेतिं । दधाति । तस्मांत् । चत्वारिं । चक्षुंषः । रूपाणिं । द्वे इतिं । शुक्ले इतिं । द्वे इतिं । कृष्णे

---

पशुरेव भवति । अपश्यानांतु प्राथम्ये पश्चात्मानां वयस्यानां केनचिदभिभूतत्वात् पशुभिः ख्यातः पशुमान् भवति, वयस्यान्तत्वात् चितेः गुणोत्तरेण चाभिभवो नास्तीति भावः ॥

[9]चतस्र इत्यादि ॥ 'विष्टम्भो वयः '* इत्याद्याः । न त्वनुवाकस्याद्याः । अत्र मन्त्राम्नातक्रममुल्लङ्घ्य ब्राह्मणेन क्रमान्तरं विधीयते । अत्र च लिङ्गं—मूर्धन्वतीर्भवन्ति इति । नव्यादिषु चतसृषु काचिदपि मूर्धन्वती तासामुपधानोति [धाने] विद्यते । ताः पुरस्तात् शिरसि प्रतिरूपं दधाति । तस्मादिति । द्वे शुक्ले रूपे शुक्लं च शारं च । द्वे कृष्णे कृष्णं गोळं पुरुषमण्डलश्च । 'कृष्णस्यामृगाख्यायाम्' इति अन्तोदात्तत्वम् ॥

---

*सं. ४-३-५.

कृष्णे ॥४॥ मूर्धन्वतीर्भवन्ति त-
स्मात्पुरस्तान्मूर्धा पश्व दक्षिणायाꣳ
श्रोण्यामुप दधाति पश्चोत्तरस्यां
तस्मात्पश्चाद्वर्षीयान्पुरस्तात्प्रवणः
पशुर्बस्तो वय इति दक्षिणेऽꣳस
उप दधाति वृष्णिर्वय इत्युत्तरेऽꣳ

इति ॥ ४ ॥ [10]मूर्धन्वतीरिति मूर्धन्न्–वतीः । भव-न्ति । तस्मात् । पुरस्तात् । मूर्धा । पश्चं । दक्षि-णायाम् । श्रोण्याम् । उपेति । दधाति । पश्चं । उत्तरस्यामित्युत्–तरस्याम् । तस्मात् । पश्चात् । वर्षीयान् । पुरस्तात्प्रवण इति पुरस्तात्–प्रवणः । पशुः । [11]बस्तः । वयः । इति । दक्षिणे । अꣳसे । उपेति । दधाति । वृष्णिः । वयः । इति । उत्तर

---

[10]मूर्धन्वतीरिति ॥ मूर्धन्वानासामुपधानो मन्त्र इति । 'वय-स्यासु मूर्ध्नो मतुप्' 'अनो नुट्' 'वा छन्दसि' इति पूर्वसव-र्णदीर्घत्वम् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । तस्मा-दिति । पश्चाद्वर्षीयान् वृद्धतरः । प्रियस्थिरादिना वर्षादेशः । पुरस्तात्प्रवणः कृशः । 'प्रनिरन्तः' इत्यादिना णत्वम् ॥

[11]दक्षिणे अंस उपदधातीत्येव । अंसावेवेति । परस्परस्योप-कुर्वाणेन स्थापयति । उत्तर इति । पक्षे उपदधातीत्येव ।

सांवेव प्रतिं दधाति व्याघ्रो वय इ-
ति दक्षिणे पक्ष उपं दधाति सिꣳ-
हो वय इत्युत्तरे पक्षयोरेव वीर्यं द-
धाति पुरुषो वय इति मध्ये तस्मा-
त्पुरुषः पशूनामधिपतिः ॥५॥

इत्युत्–तरे । अꣳसौं । एव । प्रतीति । दधाति । व्याघ्रः । वयः । इति । दक्षिणे । पक्षे । उपेति । दधाति । सिꣳहः । वयः । इति । उत्तर इत्युत्–तरे । पक्षयोः । एव । वीर्यम् । दधाति । पुरुषः । वयः । इति । मध्ये । तस्मात् । पुरुषः । पशूनाम् । अधिपतिरित्यधि–पतिः ॥ ५ ॥

क्लृप्तयां उपधायं प्राणभृतस्समंनसः कृष्णे
पुरुषो वय इति पञ्च च ॥ १ ॥

पक्षयोरित्यादि । गतम् । मध्य इति आत्मनि । तस्मादिति । प्रधानस्था-(प)ने पुरुषशब्देनोपधानात् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ॥

इति पञ्चमे तृतीये प्रथमोनुवाकः ॥

इन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामुप दधातीन्द्राग्निभ्यां वा इमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अधृतेव वा एषा यन्म-

[1]इन्द्राग्नी इतीन्द्र–अग्नी । अव्यथमानाम् । इति । स्वयमातृण्णामिति स्वयं–आतृण्णाम् । उपेति । दधाति । इन्द्राग्निभ्यामितीन्द्राग्नि–भ्याम् । वै । इमौ । लोकौ । विधृताविति वि–धृतौ । अनयोः । लोकयोः । विधृत्या इति वि–धृत्यै । [2]अधृता । इव । वै । एषा । यत् । मध्यमा । चितिः । अ-

[1]अथ मध्यमायां चितौ स्वयमातृण्णां विदधाति—इन्द्राग्नी इत्यादि ॥ प्रथमचितामिव स्वयमातृण्णां अश्वमवघ्राप्य अविदुषा ब्राह्मणेन सहाभिद्रुत्य 'इन्द्राग्नी अव्यथमानां'* इत्यनुद्रुत्य 'विश्वकर्मा त्वा सादयतु'* इत्युपदधाति । इमौ लोकाविति । द्यौश्च पृथिवी च विधृताविति शेषो धारयितुं शक्यते । तस्मादिन्द्राग्निभ्यां कृतग्रहणा स्वयमातृण्णा अनयोस्तावत् लोकयोः विधृत्यै भवति । 'गतिरनन्तरः' 'तादौ च' इत्युभयत्र गतेः प्रकृतिस्वरत्वम् ॥

[2]अथान्तरिक्षस्य विधृतिं प्रतिपादयन्ति—अधृतेव वेत्यादि ॥ कथमधृतेवेत्याह—अन्तरिक्षमिवेति । मध्यमत्वात् । ओजोभृताविति

*सं. ४-३-६.

ध्यमा चितिरन्तरिक्षमिव वा एषे-
न्द्राग्नी इत्याहेन्द्राग्नी वै देवानामो-
जोभृतावोजसैवैनामन्तरिक्षे चिनुते
धृत्यै स्वयमातृण्णामुप दधात्यन्त-
रिक्षं वै स्वयमातृण्णाऽन्तरिक्षमे-
वोप धत्तेऽश्वमुप ॥ ६ ॥ घ्रापय-

न्तरिक्षम् । इव । वै । एषा । इन्द्राग्नी इतीन्द्र–अ-
ग्नी । इति । आह । इन्द्राग्नी इतीन्द्र–अग्नी । वै ।
देवानाम् । ओजोभृतावित्योजः–भृतौ । ओजसा ।
एव । एनाम् । अन्तरिक्षे । चिनुते । धृत्यै । [3]स्व-
यमातृण्णामिति स्वयं–आतृण्णाम् । उपेति । द-
धाति । अन्तरिक्षम् । वै । स्वयमातृण्णेति स्वयं–
आतृण्णा । अन्तरिक्षम् । एव । उपेति । धत्ते ।
[4]अश्वम् । उपेति ॥ ६ ॥ घ्रापयति । प्राणमिति प्र–अनम् ।

सामर्थ्यातिशयो गम्यते । सर्वेषामपि देवानां ओजोभृत्त्वात् तस्मात्तयोरेवौजसा इमामन्तरिक्षे चिनुते । तस्मादियमन्तारिक्षस्यापि धृत्यै धारणाय भवति ॥

[3]अन्तरिक्षं वा इत्यादि ॥ बहूपकारकत्वात् छिद्रवत्त्वाच्च ॥

[4]अश्वमुप घ्रापयतीति ॥ व्याख्यातं स्वयमातृण्णामित्यत्र ॥*

*सं. ५-२-८.

ति॒ प्रा॒णमे॒वास्यां॑ द॒धा॒त्यथो॑ प्रा॒जा॒प॒त्यो वा अश्वः॑ प्र॒जाप॑तिनै॒वाग्निं चि॑नुते स्वयमा॒तृ॒ण्णा भ॑वति प्रा॒णाना॒मुथ्सृ॑ष्ट्या॒ अथो॑ सु॒व॒र्गस्य॑ लो॒कस्यानु॑ख्यात्यै दे॒वाना॒ं वै सु॑व॒र्गं लो॒कं य॒तां दि॒शस्सम॑व्लीयन्त॒ त ए॒ता दि॒श्यां॑ अपश्य॒न्ता उपा॑दधत॒

ए॒व । अ॒स्या॒म् । द॒धा॒ति॒ । अ॒थो इति॑ । प्रा॒जा॒प॒त्य इति॑ प्राजा–प॒त्यः । वै । अश्वः॑ । प्र॒जाप॑ति॒नेति॑ प्र॒जा–प॒ति॒ना । ए॒व । अ॒ग्निम् । चि॒नु॒ते॒ । स्व॒य॒मा॒तृ॒ण्णेति॑ स्व॒यं–आ॒तृ॒ण्णा । भ॒व॒ति॒ । प्रा॒णाना॒मिति॑ प्र–अ॒नाना॑म् । उ॒त्सृ॑ष्ट्या॒ इत्यु॒त्–सृ॒ष्ट्यै॒ । अ॒थो इति॑ । सु॒व॒र्गस्येति॑ सु॒वः–ग॒स्य॑ । लो॒कस्य॑ । अ॒नु॒ख्यात्या॒ इत्य॒नु–ख्या॒त्यै॒ । [5]दे॒वाना॑म् । वै । सु॒व॒र्गमिति॑ सु॒वः–ग॒म् । लो॒कम् । य॒ताम् । दिशः॑ । समिति॑ । अ॒व्ली॒य॒न्त॒ । ते । ए॒ताः । दि॒श्याः॑ । अ॒प॒श्य॒न्न् । ताः । उपेति॑ । अ॒द॒ध॒त॒ । ताभिः॑ । वै । ते ।

---

[5]देवानां वा इत्यादि ॥ दिश्याविधिः । यतामिति । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । समव्लीयन्त व्यशीर्यन्त । व्ली

ताभिर्वै ते दिशोऽदृꣳहन् यद्दिश्या
उपदधाति दिशां विधृत्यै दश प्रा-
णभृतः पुरस्तादुप ॥ ७ ॥ दधाति
नव वै पुरुषे प्राणा नाभिर्दशमी
प्राणानेव पुरस्ताद्धत्ते तस्मात्पुरस्ता-

दिशः । अदृꣳहन्न् । यत् । दिश्याः । उपदधातीत्युप-दधाति । दिशाम् । विधृत्या इति वि-धृत्यै । [6]दश । प्राणभृत इति प्राण-भृतः । पुरस्तात् । उपेति ॥ ७ ॥ दधाति । नव । वै । पुरुषे । प्राणा इति प्र-अनाः । नाभिः । दशमी । प्राणानिति प्र-अनान् । एव । पुरस्तात् । धत्ते । तस्मात् । पुरस्तात् । प्राणा इति प्र-अनाः । [7]ज्योतिष्मतीम् ।

विशरणे । दिश्या इति । दिङ्मानुपदधानो मन्त्र आसामिति दिश्याः । पूर्ववद्यत् । 'राज्ञ्यसि'* इत्यादयः पञ्च एकैका दिक्षु एकामध्ये । ता इत्यादि । गतम् ॥

[6]दश प्राणभृत इत्यादि ॥ पुरस्तात् प्राचीः 'आयुर्मे पाहि'* इत्याद्याः पुरुषस्य आयुर्दाः प्राणहेतवः । नवेति । सप्त शीर्षण्या द्वाववाञ्चाविति । तस्मात्पुरस्तात्प्रायशः [त्प्राञ्चः] ॥

*सं. ४-३-६.

त्प्राणा ज्योतिष्मतीमुत्तमामुपं द-
धाति तस्मात्प्राणानां वाग्ज्योतिरु-
त्तमा दशोपं दधाति दशाक्षरा वि-
राड्विराट्छन्दंसां ज्योतिर्ज्योतिरेव पुर-
स्ताद्धत्ते तस्मात्पुरस्ताज्ज्योतिरुपा-
स्महे छन्दाꣳसि पशुष्वाजिमंयु-

उत्तमामित्युत्–तमाम् । उपेति । दधाति । त-स्मात् । प्राणानामिति प्र–अनानाम् । वाक् । ज्योतिः । उत्तमेत्युत्–तमा । [8]दश । उपेति । दधाति । दशाक्षरेति दश–अक्षरा । विराडिति वि–राट् । विराडिति वि–राट् । छन्दसाम् । ज्योतिः । ज्योतिः । एव । पुरस्तात् । धत्ते । तस्मात् । पुरस्तात् । ज्योतिः । उपेति । आस्महे । [9]छन्दाꣳसि । पशुषु । आजिम् । अयुः । तान् ।

---

[7]ज्योतिष्मतीमिति ॥ ज्योतिर्मे यच्छेति । वाग्ज्योतिरिति । परस्य ज्योतिषो विवर्तत्वाद्वाचः ॥

[8]दशाक्षरेति ॥ छन्दसां मध्ये विराट् द्योतनशीला ज्योतिः । तस्मादिति । भ्रूमध्यादौ परं ज्योतिरुपास्महे । यद्वा—पूर्वस्यां दिशि सावित्रं ज्योतिरुपास्महे उदितं पश्यामः ॥

[9]अथ बृहतीर्विधातुमाह—छन्दांसीत्यादि ॥ पशुषु निमित्तेषु

स्तान्बृंहृत्युदंजयत्तस्माद्बार्हंताः ॥८
पशवं उच्यन्ते मा छन्द इतिं द-
क्षिणत उपं दधाति तस्मांद्दक्षिणा-
वृंतो मासांः पृथिवी छन्द इतिं प-
श्चात्प्रतिंष्ठित्या अग्निर्देवतेत्युंत्तरत

बृहती । उदिति । अजयत् । तस्मांत् । बार्हंताः ॥ ८ ॥ पशवं: । उच्यन्ते । [10]मा । छन्दंः । इतिं । दक्षिणतः । उपेतिं । दधाति । तस्मांत् । दक्षिणावृंत इतिं दक्षिणा–आवृतः । मासांः । पृथिवी । छन्दंः । इतिं । पश्चात् । प्रतिंष्ठित्या इति प्रतिं–स्थित्यै । [11]अग्निः । देवतां । इतिं । उत्तरत इत्युं-

आंजिमयुः युद्धं गताः । 'लङश्शाकटायनस्य' इति झेर्जुस् । तानित्यादि । गतम् । तस्मात्पशव्या बृहत्य इत्युक्तं भवति ॥

[10]'मा छन्दः'* इत्याद्या द्वादश दक्षिणत उपदधाति तस्मादिति ॥ पादसङ्ख्यान्वयान्माशब्दान्वयाच्च मासा गृह्यन्ते । दक्षिणावृत इति । दक्षिणायां दिशि आवृत्तिर्येषां दक्षिणभागवृत्तित्वं प्रदक्षिणभागगमनत्वं मेषादिसंज्ञासंज्ञितगोळद्वादशभागस्थितदिवाकरगतिविशेषात्मनां मासानां गोळभ्रमणनिबन्धनात् प्रदक्षिणा वृत्तिः । प्रतिष्ठित्या इति । पृथिव्यादीनां द्वादशानां प्रतिष्ठाहेतुत्वात् ॥

[11]ओज एवेति ॥ अग्न्यादीनां ओजस्वित्वात् । तस्मादिति ।

*सं. ४-३-७.

ओजो वा अग्निरोजं एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति षट्त्रिंशथ्सं पद्यन्ते षट्त्रिंशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनवं रुन्धे बृहती छन्दसाꣳ स्वाराज्यं परीयाय यस्यैताः ॥ १ ॥

त्—तरतः । ओजः । वै । अग्निः । ओजः । एव । उत्तरत इत्युत्—तरतः । धत्ते । तस्मात् । उत्तरतोभिप्रयायीत्युत्तरतः—अभिप्रयायी । जयति । [12]षट्त्रिंशदिति षट्—त्रिꣳशत् । समिति । पद्यन्ते । षट्त्रिंशदक्षरेति षट्त्रिंशत्—अक्षरा । बृहती । बार्हताः । पशवः । बृहत्या । एव । अस्मै । पशून् । अवेति । रुन्धे । बृहती । छन्दसाम् । स्वाराज्यमिति स्व—राज्यम् । परीति । इयाय । यस्य ।

---

उत्तरस्यां दिशि अभिप्रयाणशीलो जयति दुरितानि । 'सुप्यजातौ' इति णिनिः, कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[12]षट्त्रिंशदिति ॥ षट् त्रिंशच्च षट्त्रिंशत् । 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । बृहत्येति । शतृवद्भावात् 'शतुरनुमः' इति नद्या उदात्तत्वम्, 'बृहन्महतोरुपसङ्ख्यानम्' इति वा । ततः 'उदात्तयणः'

उपधीयन्ते गच्छंति स्वाराज्यꣳ स-
प्त वालखिल्याः पुरस्तादुप दधाति
सप्त पश्चाथ्सप्त वै शीर्षण्याः प्राणा
द्वाववाञ्चौ प्राणानाꣳ सवीर्यत्वाय
मूर्धाऽसि राडिति पुरस्तादुप दधा-
एताः ॥ १ ॥ उपधीयन्त इत्युप–धीयन्ते । गच्छं-
ति । स्वाराज्यमिति स्व–राज्यम् । [13]सप्त । वाल-
खिल्या इति वाल–खिल्याः । पुरस्तात् । उपेति ।
दधाति । सप्त । पश्चात् । सप्त । वै । शीर्षण्याः ।
प्राणा इति प्र–अनाः । द्वौ । अवाञ्चौ । प्राणाना-
मिति प्र–अनानाम् । सवीर्यत्वायेति सवीर्य–त्वा-
य । [14]मूर्धा । असि । राट् । इति । पुरस्तात् ।

---

इति विभक्तेरुदात्तत्वम् । स्वाराज्यमिति । 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ् ॥

[13]वालखिल्या इति ॥ 'मूर्धाऽसि राट्'* इति पुरस्तात्प्रतीचीः 'यन्त्री राट्'* इति सप्त पश्चात् प्राचीः । वालस्थाने खिलां स्वरूपासङ्कीर्तनात् वालखिल्या इति संज्ञामात्रमिदम् । यद्वा—वालखिल्या ऋषयः तदात्मनेष्टकाः स्तूयन्ते । द्वाविति । तेन शीर्षण्याः प्राणाः सङ्ख्यायास्सप्तत्वात् संहतिः वक्ष्यत इति ॥

[14]समीच इति ॥ परस्परसङ्गताः तेन चक्षुरादिके द्वेद्वे सङ्गते

---

*सं. ४-३-७.

ति यन्त्री राडिति पश्चात्प्राणानेवा-
स्मै समीचो दधाति ॥ १० ॥
देवा वै यद्यज्ञेऽकुर्वत तदसुरा अ-
कुर्वत ते देवा एता अक्षणयास्तो-

उपेति । दधाति । यन्त्री । राट् । इति । पश्चात् । प्राणानिति प्र-अनान् । एव । अस्मै । समीचः । दधाति ॥ १० ॥

अश्वमुप पुरस्तादुप बार्हता एताश्चतु-
स्त्रिंशच्च ॥ २ ॥

[1]देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । असुराः । अकुर्वत । ते । देवाः । एताः । अक्षणयास्तोमीया इत्यक्षणया-स्तोमीयाः । अपश्यन् । ताः । अन्यथा । अनूच्येत्यनु-उच्य । अन्यथा ।

---

इति । 'समस्समिः' इति सम्यादेशे 'चौ' इति दीर्घत्वम्, अन्तोदात्तत्वं च ॥

इति पञ्चमे तृतीये द्वितीयोनुवाकः.

---

[1]अथ चतुर्थी चितिरारभ्यते । तत्राक्षणयास्तोमीया विधातुमाह—देवा वा इत्यादि ॥ अन्यथेत्यादि । अन्येन क्रमेण स्तोमानुसारिणा मन्त्रानाम्नाय अन्येन क्रमेण मुख्यत्वाद्यनुसारिणा ता उपदधांचक्रुः । तां च प्रक्रियामसुरा नान्वगच्छन् आम्नायक्रमेणैवो-

मीयां अपश्यन्ता अन्यथाऽनूच्यान्य-
थोपांदधत् तदसुंरा नान्ववांयन्ततों
देवा अभंवन्पराऽसुंरा यदंक्षणया-
स्तोमीयां अन्यथाऽनूच्यान्यथोंपद-
धांति भ्रातृंव्याभिभूत्यै भवंत्यात्म-

उपेति । अदधत । तत् । असुंराः । न । अन्ववां-
यन्नित्यंनु-अवांयन् । ततंः । देवाः । अभंवन् ।
परेति । असुंराः । यत् । अक्षणयास्तोमीया इत्यं-
क्षणया--स्तोमीयांः । अन्यथां । अनूच्येत्यंनु-
उच्यं । अन्यथां । उपदधातीत्युंप-दधांति । भ्रा-
तृंव्याभिभूत्या इति भ्रातृंव्य-अभिभूत्यै । भवंति ।
आत्मनां । परेतिं । अस्य । भ्रातृंव्यः । भव-

पादधत । ततः पराभवन् । अन्यथा उपधाने निबन्धनं च 'य-
स्य मुख्यवतीः'* इत्यादिना दर्शयिष्यति । अत्राक्षणया अना-
र्जवेन वर्तमानाः स्तोमाः त्रिवृदादयो येषु मन्त्रेषु ते अक्षणया
स्तोमा मन्त्राः तैरुपधेयतया तत्सम्बन्धिन्य इष्टका अक्षणया-
स्तोमीयाः । गहादेराकृतिगणत्वाच्छः । 'आशुस्त्रिवृत्'† इत्यनु-
वाके अष्टादश, 'अग्नेर्भागोसि'‡ इत्यत्र दश । भवत्यात्मनेति
स्वयं भूतिमान् सम्पद्यते । प्रकृत्यादिलक्षणा तृतीया ॥

सं. ५-३-४. *सं. ४-३-८. सं. ४-३-९.

ना परोऽस्य भ्रातृव्यो भवत्याशु
स्त्रिवृदिति पुरस्तादुप दधाति यज्ञ-
मुखं वै त्रिवृत् ॥ ११ ॥ यज्ञमुख-
मेव पुरस्ताद्वि यातयति व्योम स-
प्तदश इति दक्षिणतोऽन्नं वै व्योमा-
न्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते

ति । [2]आशुः । त्रिवृदिति त्रि-वृत् । इति । पुरस्तात् । उपेति । दधाति । यज्ञमुखमिति यज्ञ-मुखम् । वै । त्रिवृदिति त्रि-वृत् ॥ ११ ॥ यज्ञमुखमिति यज्ञ-मुखम् । एव । पुरस्तात् । वीति । यातयति । [3]व्योमेति वि-ओम् । सप्तदश इति सप्त-दशः । इति । दक्षिणतः । अन्नम् । वै । व्योमेति वि-ओम् । अन्नम् । सप्तदश इति सप्त-दशः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् ।

[2]यज्ञमुखं वा इत्यादि ॥ अत्रैव व्यवस्थापयिष्यते मुख्यवत्यः पुरस्तादन्नवत्यो दक्षिणतः प्रतिष्ठावत्यः पश्चादोजस्वत्यः उत्तरत इति । त्रिवृतो यज्ञमुखत्वं बहिष्पवमानापेक्षम् । वियातयत इति । व्यापादयति ॥

[3]अन्नं वै व्योमेति ॥ विविधमति व्योम्नि । ज्वरत्वरादिना ऊठि गुणः । सप्तदशस्यान्नत्वं अन्नसाधनात् सृष्टत्वात् । तस्माद्दक्षिणेन अन्नं भुज्यते ॥

तस्माद्दक्षिणेनान्नमद्यते धरुणं एकविꣳश इति पश्चात्प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्यै भान्तः पञ्चदश इत्युत्तरत ओजो वै भान्त ओजः पञ्चदश ओज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति प्रतू-

दक्षिणेन । अन्नम् । अद्यते । [4]धरुणः । एकविꣳश इत्येक-विꣳशः । इति । पश्चात् । प्रतिष्ठेति प्रति-स्था । वै । एकविꣳश इत्येक-विꣳशः । प्रतिष्ठित्या इति प्रति-स्थित्यै । [5]भान्तः । पञ्चदश इति पञ्च-दशः । इति । उत्तरत इत्युत्-तरतः । ओजः । वै । भान्तः । ओजः । पञ्चदश इति पञ्च-दशः । ओजः । एव । उत्तरत इत्युत्-तरतः । धत्ते । तस्मात् । उत्तरतोभिप्रयायीत्युत्तरतः-अभिप्रयायी । जयति । [6]प्रतूर्तिरिति प्र-तूर्तिः । अष्टादश इत्यष्टा-

---

[4]प्रतिष्ठा वा इति ॥ पद्भ्यां सृष्टत्वात् ॥

[5]भान्तः भानशील इन्द्रः ॥ पञ्चदशस्य ओजस्थानात् उरसो बाहुभ्यां चोत्पत्तिः ॥

[6]द्वौ त्रिवृताविति ॥ द्वे नवके अष्टादशेति । अनुपूर्वं अनुक्रमेण ॥

तिरष्टादश इति पुरस्तात् ॥ १२ ॥ उप दधाति द्वौ त्रिवृतावभिपूर्वं यज्ञमुखे वि यातयत्यभिवर्तस्सविꣳश इति दक्षिणतोऽन्नं वा अभिवर्तोऽन्नꣳ सविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते वर्चो द्वाविꣳश इति पश्चाद्यद्विꣳशतिर्द्वे तेन

दशः । इति । पुरस्तात् ॥ १२ ॥ उपेति । दधाति । द्वौ । त्रिवृताविति त्रि—वृतौ । अभिपूर्वमित्यभि—पूर्वम् । यज्ञमुख इति यज्ञ—मुखे । वीति । यातयति । [7]अभिवर्त इत्यभि—वर्तः । सविꣳश इति स—विꣳशः । इति । दक्षिणतः । अन्नम् । वै । अभिवर्त इत्यभि—वर्तः । अन्नम् । सविꣳश इति स—विꣳशः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणेन । अन्नम् । अद्यते । [8]वर्चः । द्वाविꣳशः । इति । पश्चात् । यत् । विꣳशतिः । द्वे इति । ते-

[7]अभिवर्तस्सामविशेषः । अपरपक्ष इत्येके । सविंशो विंशतिस्तोत्रियासहितः स्तोमः । तयोरन्नसाधनत्वात् अन्नत्वम् । गतमन्यत् ॥

[8]यदिति ॥ यस्मादत्र विंशतिः सन्ति तेन द्वे विराजौ दशके ।

विराजौ यद्वे प्रतिष्ठा तेन विराजो-
रेवाभिपूर्वमन्नाद्ये प्रति तिष्ठति त-
पो नवदश इत्युत्तरतस्तस्मात्सव्यः
॥ १३ ॥ हस्तयोस्तपस्वितरो यो-
निश्चतुर्विꣳश इति पुरस्तादुप दधा-

ने । विराजाविति वि-राजौ । यत् । द्वे इति । प्र-तिष्ठेति प्रति-स्था । तेन । विराजोरिति वि-राजोः । एव । अभिपूर्वमित्यभि-पूर्वम् । अन्नाद्य इत्यन्न-अद्ये । प्रतीति । तिष्ठति । [9]तपः । नवदश इति नव-दशः । इति । उत्तरत इत्युत्-तरतः । तस्मात् । सव्यः ॥ १३ ॥ हस्तयोः । तपस्वितर इति तपस्वि-तरः । [10]योनिः । चतुर्विꣳश इति चतुः-विꣳशः । इति । पुरस्तात् । उपेति । दधाति । चतुर्विꣳशत्यक्षरेति चतुर्विꣳशति-अक्षरा ।

---

यस्मादत्र द्वे स्तः तेन प्रतिष्ठा । तेन विराजोः द्वयोरभिपूर्वं प्रति अन्नाद्यर्थं विराजोऽन्नत्वात् । निमित्तात्सप्तमी ॥

[9]सव्य इति ॥ हस्तयोर्मध्ये सव्यो दक्षिणः तपस्वितरः । तपः दुःखम् । प्रभूततरोपकारक इत्यर्थः ॥

[10]चतुर्विंशत्यक्षरेत्यादि ॥ गतम् । पवमानाभिप्रायं गायत्र्या यज्ञमुखत्वम् ॥

ति चतुर्विꣳशत्यक्षरा गायत्री गायत्री यज्ञमुखं यज्ञमुखमेव पुरस्ताद्वि यातयति गर्भाः पञ्चविꣳश इति दक्षिणतोऽन्नं वै गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यत ओजस्त्रिणव इति पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठति संभरणस्त्रयोविꣳश इति ॥ १४॥ उत्तरतस्तस्मात्सव्यो

गायत्री । गायत्री । यज्ञमुखमिति यज्ञ–मुखम् । यज्ञमुखमिति यज्ञ–मुखम् । एव । पुरस्तात् । वीति । यातयति । गर्भाः । पञ्चविꣳश इति पञ्च–विꣳशः । इति । दक्षिणतः । अन्नम् । वै । गर्भाः । अन्नम् । पञ्चविꣳश इति पञ्च–विꣳशः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणेन । अन्नम् । अद्यते । ओजः । त्रिणव इति त्रि–नवः । इति । पश्चात् । इमे । वै । लोकाः । त्रिणव इति त्रि–नवः । एषु । एव । लोकेषु । प्रतीति । तिष्ठति । संभरण इति सं–भरणः । त्रयोविꣳश इति त्रयः–विꣳशः । इति ॥ १४ ॥ उत्तरत इ-

हस्तयोस्संभार्यतरः क्रतुरेकत्रिꣳश इति पुरस्तादुप दधाति वाग्वै क्रतुर्यज्ञमुखं वाग्यज्ञमुखमेव पुरस्ताद्वि यातयति ब्रध्नस्य विष्टपं चतुस्त्रिꣳश इति दक्षिणतोऽसौ वा आदित्यो ब्रध्नस्य विष्टपं ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोर्धो ब्रह्मव-

त्युत्–तरतः । तस्मात् । सव्यः । हस्तयोः । संभार्यतर इति संभार्य–तरः । क्रतुः । एकत्रिꣳश इत्येक–त्रिꣳशः । इति । पुरस्तात् । उपेति । दधाति । वाक् । वै । क्रतुः । यज्ञमुखमिति यज्ञ–मुखम् । वाक् । यज्ञमुखमिति यज्ञ–मुखम् । एव । पुरस्तात् । वीति । यातयति । [11]ब्रध्नस्य । विष्टपम् । चतुस्त्रिꣳश इति चतुः–त्रिꣳशः । इति । दक्षिणतः । असौ । वै । आदित्यः । ब्रध्नस्य । विष्टपम् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणः । अर्धः । ब्रह्मवर्चसितर

---

[11]असाविति ॥ ब्रध्नस्य विष्टपस्य परिबृढस्यात्मनो विष्टपं स्थानमादित्यः । असाविति परिदृश्यमानमण्डलं निर्दिशति । दक्षिणार्धः दक्षिणैकदेशः । 'अर्धस्यासमद्योतने' इत्यर्धशब्द

र्चसितरः प्रतिष्ठा त्रयस्त्रिꣳश इति पश्चात्प्रतिष्ठित्यै नाकष्षट्त्रिꣳश इत्युत्तरतस्सुवर्गो वै लोको नाकस्सुवर्गस्य लोकस्य समष्ट्यै ॥१५॥

इति ब्रह्मवर्चसि–तरः । प्रतिष्ठेति प्रति–स्था । त्रयस्त्रिꣳश इति त्रयः–त्रिꣳशः । इति । पश्चात् । प्रतिष्ठित्या इति प्रति–स्थित्यै । [12]नाकः । षट्त्रिꣳश इति षट्–त्रिꣳशः । इति । उत्तरत इत्युत्–तरतः । सुवर्ग इति सुवः–गः । वै । लोकः । नाकः । सुवर्गस्येति सुवः–गस्य । लोकस्य । समष्ट्या इति सं–अष्ट्यै ॥ १५ ॥

वै त्रिवृदिति पुरस्तात्सव्यस्त्रयोविꣳश इति सुवर्गो वै पञ्च च ॥ ३ ॥

---

आद्युदात्तः । ब्रह्मवर्चसितरः प्रवृद्ध उज्ज्वलतरः तपोबलत इतरस्माद्भागात् ॥

[12]सुवर्गो वा इति ॥ दक्षिणगोळस्थितानां गोळोर्ध्वभागस्थितस्य स्वर्गस्योत्तरत्वात् । समष्टिः सम्यक्प्राप्तिः । अशू व्याप्तौ, 'तादौ च' इति गतेः प्रकृति स्वरत्वम् ॥

इति पञ्चमे तृतीये तृतीयोनुवाकः.

अग्नेर्भागोसीति पुरस्तादुप दधाति
यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा
यज्ञमुखं ब्रह्म यज्ञमुखं त्रिवृद्यज्ञमु-
खमेव पुरस्ताद्वि यातयति नृचक्ष-
सां भागोसीति दक्षिणतश्शुश्रुवाꣳ-
सो वै नृचक्षसोऽन्नं धाता जातायैवा-
स्मा अन्नमपि दधाति तस्माज्जातो-

[1]अग्नेः । भागः । असि । इति । पुरस्तात् । उपेति । दधाति । यज्ञमुखमिति यज्ञ-मुखम् । वै । अग्निः । यज्ञमुखमिति यज्ञ-मुखम् । दीक्षा। यज्ञमुखमिति यज्ञ-मुखम् । ब्रह्म । यज्ञमुखमिति यज्ञ-मुखम् । त्रिवृदिति त्रि-वृत् । यज्ञमुखमिति यज्ञ-मुखम् । एव । पुरस्तात् । वीति । यातयति। [2]नृचक्षसामिति नृ-चक्षसाम् । भागः । असि । इति । दक्षिणतः । शुश्रुवाꣳसः । वै । नृचक्षस इति नृ-चक्षसः । अन्नम् । धाता । जाताय । एव।

---

[1]अग्नेर्भागोसीत्यादि ॥ अग्निदीक्षामन्त्रः । त्रिवृतां यज्ञमुखत्वं आरम्भभावित्वात् । यज्ञमुखमेवेत्यादि । गतम् ॥

[2]शुश्रुवांस इति ॥ श्रुताध्ययनसम्पन्नाः शुश्रुवांसः । ते चान्न-

न्नमत्ति जनित्रꣳ स्पूतः सप्तदश-
स्स्तोम इत्याहान्नं वै जनित्रम् ॥ १६
अन्नꣳ सप्तदशोन्नमेव दक्षिणतो धत्ते
तस्माद्दक्षिणेनान्नमद्यते मित्रस्य
भागोसीति पश्चात्प्राणो वै मित्रो-
पानो वरुणः प्राणापानावेवास्मिन्-

अस्मै । अन्नम् । अपीति । दधाति । तस्मात् । जातः । अन्नम् । अत्ति । जनित्रम् । स्पूतम् । सप्तदश इति सप्त-दशः । स्तोमः । इति । आह । अन्नम् । वै । जनित्रम् ॥ १६ ॥ अन्नम् । सप्तदश इति सप्त-दशः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणेन । अन्नम् । अद्यते । [3]मित्रस्य । भागः । असि । इति । पश्चात् । प्राण इति प्र-अनः । वै । मित्रः । अपान इत्यप-अनः । वरुणः । प्राणापानाविति प्राण-अपानौ । एव । अस्मिन् । दधाति । दिवः । वृष्टिः । वाताः । स्पूताः ।

वन्तः अन्नं धाता धारकत्वात् । जातायैव जन्मकाल एव जातमात्र एव अन्नजन्महेतुः सप्तदशोऽन्नस्य साधनम् ॥

[3]प्राणो वा इत्यादि ॥ गतम् ॥

न्दधाति दिवो वृष्टिर्वातांस्स्पृता एकविꣳशस्स्तोम इत्याह प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्या इन्द्रस्य भागोसीत्युत्तरत ओजो वा इन्द्र ओजो विष्णुरोजः क्षत्रमोजः पञ्चदशः ॥ १७ ॥ ओज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति वसूनां भागोसीति पुरस्तादुप द-

एकविꣳश इत्येक-विꣳशः । स्तोमः । इति । आह । प्रतिष्ठेति प्रति-स्था । वै । एकविꣳश इत्येक-विꣳशः । प्रतिष्ठित्या इति प्रति-स्थित्यै । [4]इन्द्रस्य । भागः । असि । इति । उत्तरत इत्युत्-तरतः । ओजः । वै । इन्द्रः । ओजः । विष्णुः । ओजः । क्षत्रम् । ओजः । पञ्चदश इति पञ्च-दशः ॥ १७ ॥ ओजः । एव । उत्तरत इत्युत्-तरतः । धत्ते । तस्मात् । उत्तरतोभिप्रयायीत्युत्तरतः-अभिप्रयायी । जयति । [5]वसूनाम् । भागः । अ-

---

[4]ब्रह्मेन्द्रविष्णुक्षत्रपञ्चदशा ओजोबलहेतवः । गतमन्यत् ॥

[5]वसुरुद्रचतुर्विंशानां यज्ञमुखत्वं प्रधानसाधनत्वात् मुख्यत्वात् ॥

धाति यज्ञमुखं वै वसवो यज्ञमुखꣳ
रुद्रा यज्ञमुखं चतुर्विꣳशो यज्ञमु-
खमेव पुरस्ताद्वि यातयत्यादित्या-
नां भागोसीति दक्षिणतोन्नं वा आ-
दित्या अन्नं मरुतोन्नं गर्भा अन्नं प-
ञ्चविꣳशोन्नमेव दक्षिणतो धत्ते त-
स्माद्दक्षिणेनान्नमद्यतेऽदित्यै भागः

सि । इति । पुरस्तात् । उपेति । दधाति । यज्ञमुखमिति यज्ञ–मुखम् । वै । वसवः । यज्ञमुखमिति यज्ञ–मुखम् । रुद्राः । यज्ञमुखमिति यज्ञ–मुखम् । चतुर्विꣳश इति चतुः–विꣳशः । यज्ञमुखमिति यज्ञ–मुखम् । एव । पुरस्तात् । वीति । यातयति । [6]आदित्यानाम् । भागः । असि । इति । दक्षिणतः । अन्नम् । वै । आदित्याः । अन्नम् । मरुतः । अन्नम् । गर्भाः । अन्नम् । पञ्चविꣳश इति पञ्च–विꣳशः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणेन । अन्नम् । अद्यते । [7]अ-

[6]आदित्यमरुत्पञ्चविंशानां यज्ञद्वारेणान्नसाधनत्वं गर्भा अप्यन्नसाधकाः ॥

[7]अदितिपूषत्रिणवाश्च यज्ञद्वारेण प्रतिष्ठाहेतवः ॥

॥ १८ ॥ असीति पश्चात्प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै देवस्य सवितुर्भागोसीत्युत्तरतो ब्रह्म वै देवस्सविता ब्रह्म बृहस्पतिर्ब्रह्म चतुष्टोमो ब्रह्मवर्चसमेवोत्तरतो धत्ते तस्मादुत्तरोर्धो ब्रह्मवर्चसितरस्सावित्रवती भवति

दित्यै । भागः ॥ १८ ॥ असि । इति । पश्चात् । प्रतिष्ठेति प्रति–स्था । वै । अदितिः । प्रतिष्ठेति प्रति–स्था । पूषा । प्रतिष्ठेति प्रति–स्था । त्रिणव इति त्रि–नवः । प्रतिष्ठित्या इति प्रति–स्थित्यै । [8]देवस्य । सवितुः । भागः । असि । इति । उत्तरत इत्युत्–तरतः । ब्रह्म । वै । देवः । सविता । ब्रह्म । बृहस्पतिः । ब्रह्म । चतुष्टोम इति चतुः–स्तोमः । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । एव । उत्तरत इत्युत्–तरतः । धत्ते । तस्मात् । उत्तर इत्युत्–तरः । अर्धः । ब्रह्मवर्चसितर इति ब्रह्मवर्चसि–तरः । [9]सा-

[8]सवितृबृहस्पतिचतुष्टोमानां बृहत्वाद्ब्रह्मत्वम् । ब्रह्मवर्चसितरः प्रवृद्धसम्भाव्यफलत्वादुज्ज्वलतर इतरस्मात् ॥

[9]सावित्रवतीति ॥ सावित्रेणानेन मन्त्रेण तद्वती । तस्माद्ब्राह्म-

प्रसूत्यै तस्माद्ब्राह्मणानामुदीची स-
निः प्रसूता धर्त्रश्चतुष्टोम इति पुर-
स्तादुप दधाति यज्ञमुखं वै धर्त्रः
॥११॥ यज्ञमुखं चतुष्टोमो यज्ञमुख-

वित्रवतीति सावित्र–वती । भवति । प्रसूत्या इति प्र–सूत्यै । तस्मात् । ब्राह्मणानाम् । उदीची । सनिः । प्रसूतेति प्र–सूता । [10]धर्त्रः । चतुष्टोम इति चतुः–स्तोमः । इति । पुरस्तात् । उपेति । दधाति । यज्ञ-मुखमिति यज्ञ–मुखम् । वै । धर्त्रः ॥ ११ ॥ यज्ञ-मुखमिति यज्ञ–मुखम् । चतुष्टोम इति चतुः–स्तो-मः । यज्ञमुखमिति यज्ञ–मुखम् । एव । पुरस्तात् । वीति । यातयति । [11]यावानाम् । भागः । असि ।

---

णानामुत्तरस्यां दिशि सनिर्याच्ञा तया प्रशस्ततया । 'अनिग-न्तोञ्चतौ' इति उदीचीशब्दे गतेः प्रकृतिस्वरत्वम् । प्रसूतेत्यत्र 'गतिरनन्तरः' इति ॥

[10]धर्त्रः धारयिता अग्निष्टोमः स यज्ञानां मुखं चतुष्टोमो वा सप्तष्टिस्तोत्रीयः स्तोमः । तस्य यज्ञमुखत्वं यज्ञमुखभूतत्रिवृदात्मक-त्वात् । चत्वारः स्तोमाः परिमाणमस्येति आभिर्यज्ञसाध्यत्वम् । पूर्व-वत् 'द्विगोः' इति लुकि, 'स्तोमे डविधिः' इति डः ॥

[11]यावानामिति ॥ यावा यानशीलवान् । यातेरौणादिको व-प्रत्ययः । नञिवयुक्तन्यायेन यावसदृशा अर्धमासा अयावा आ-

मेव पुरस्ताद्वि यातयति यावानां भागोसीति दक्षिणतो मासा वै यावा अर्धमासा अयावास्तस्माद्दक्षिणावृतो मासा अन्नं वै यावा अन्नं प्रजा अन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यत ऋभूणां भागोसीति पश्चात्प्रतिष्ठित्यै विवर्तोष्टाचत्वारिꣳश इत्युत्तरतोऽनयोर्लोकयो-

इति । दक्षिणतः । मासाः । वै । यावाः । अर्धमासा इत्यर्ध–मासाः । अयावाः । तस्मात् । दक्षिणावृत इति दक्षिणा–आवृतः । मासाः । अन्नम् । वै । यावाः । अन्नम् । प्रजा इति प्र–जाः । अन्नम् । एव । दक्षिणतः । धत्ते । तस्मात् । दक्षिणेन । अन्नम् । अद्यते । [12]ऋभूणाम् । भागः । असि । इति । पश्चात् । प्रतिष्ठित्या इति प्रति–स्थित्यै । विवर्त इति वि–वर्तः । अष्टाचत्वारिꣳश इत्यष्टा–

गन्तारः तमनुगन्तारश्चेत्यर्थः । दक्षिणावृत इति व्याख्यातम्* । अन्नस्य हेतवो यावा अयावाश्च प्रजाश्चान्नहेतुकाः ॥

[12]प्रतिष्ठित्या इति ॥ प्राधान्यात् । सवीर्यत्वाय समानवीर्यत्वाय ।

*सं. ५-३-२[10].

स्सवीर्यत्वाय तस्मादिमौ लोकौ स-
मावंद्वीर्यौ ॥ २० ॥ यस्य मुख्यंव-
तीः पुरस्तादुपधीयन्ते मुख्यं एव
भवत्याऽस्य मुख्यो जायते यस्यान्नं-
वतीर्दक्षिणतोत्त्यन्नमाऽस्यान्नादो जा-

चत्वारिꣳशः । इति । उत्तरत इत्युत्–तरतः । अनयोः । लोकयोः । सवीर्यत्वायेति सवीर्य–त्वाय । तस्मात् । इमौ । लोकौ । समावद्वीर्याविति समावत्–वीर्यौ ॥ २० ॥ [13]यस्य । मुख्यंवतीरिति मुख्यं–वतीः । पुरस्तात् । उपधीयन्त इत्युप–धीयन्ते । मुख्यः । एव । भवति । एति । अस्य । मुख्यः । जायते । यस्य । अन्नंवतीरित्यन्नं–वतीः । दक्षिणतः । अत्ति । अन्नम् । एति । अस्य । अन्नाद इत्यन्न अदः । जायते । [14]यस्य । प्रतिष्ठावं-

इदमपि श्रुतिप्रामाण्यादेव । समावद्वीर्यौ समवीर्यौ । 'समादावतुप्' इति आवतुप्प्रत्ययः ॥

[13]यस्येत्यादि ॥ मुखशब्देन या स्तुतिः तद्वत्यः पुरस्तादिष्टका उपधीयन्ते सप्त । अयं मुख्यो भवति । आजायते चास्य मुख्यः पुत्रः अन्नादः अन्नादनवान् । तेन सहासावन्नमत्ति । आजायते चास्यान्नादः पुत्रः ॥

[14]प्रतिष्ठावतीः प्रतिस्थितिमत्यः सप्त । प्रतितिष्ठत्येवायम् ॥

यते यस्यं प्रतिष्ठावंतीः पुश्चात्प्रत्येव तिष्ठति यस्यौजंस्वतीरुत्तरत ओ॑जस्व्येव भवत्यास्यौजस्वी जायतेऽ-र्को वा एष यदुग्निस्तस्यैतदेव स्तोत्रमेतच्छस्त्रं यदेषा विधा ॥ २१ ॥ विधीयतेऽर्क एव तदुर्कपर्मनु विधी-

तीरिति प्रतिष्ठा-वतीः । पुश्चात् । प्रतीति । एव । तिष्ठति । [15]यस्यं । ओजंस्वतीः । उत्तरत इत्युत्-तरतः । ओजस्वी । एव । भवति । एति । अस्य । ओजस्वी । जायते । [16]अर्कः । वै । एषः । यत् । अग्निः । तस्यं । एतत् । एव । स्तोत्रम् । एतत् । शस्त्रम् । यत् । एषा । विधेति वि-धा ॥ २१ ॥ विधीयत इति वि-धीयते । अर्कें । एव ।

---

[15]यस्यौजस्वतीरिति ॥ बलार्थवादवत्यः सप्त । अयमोजस्वी भवति । आजायते चास्य ओजस्वी पुत्रः ॥

[16]अर्क इति ॥ अर्चनीयो योऽग्निः स्तोत्रैः स्तोतव्यः शस्त्रैश्च शंसितव्यः तस्यास्य एतदेव स्तोत्रं एतदेव शस्त्रं यदेषा विधा विधीयते यथोक्तमुख्यवत्याद्युपधानप्रकारः क्रियते । तदेतमर्क्यं अर्चनीयं अनु अग्निमुद्दिश्य तस्यार्के अर्चनार्थं एषा विधा विधीयते। 'चजोः कुघिण्यतोः' इति कुत्वम्, उभयत्र ॥

यतेऽत्त्यन्नमास्यान्नादो जायते यस्यै-
षा विधा विधीयते य उ चैनामेवं
वेद सृष्टीरुपं दधाति यथासृष्टमे-
वावं रुन्धे न वा इदं दिवा न न-
क्तंमासीदव्यावृत्तं ते देवा एता व्युं-

तत् । अकर्यम् । अनु । वीति । धीयते । [17]अत्ति । अन्नम् । एति । अस्य । अन्नाद इत्यन्न—अदः । जायते । यस्य । एषा । विधेति वि—धा । विधीयत इति वि—धीयते । यः । उ । च । एनाम् । एवम् । वेद । [18]सृष्टीः । उपेति । दधाति । यथासृष्टमिति यथा—सृष्टम् । एव । अवेति । रुन्धे । [19]न । वै । इदम् । दिवा । न । नक्तम् । आसीत् ।

---

[17]अथास्या विधायाः फलमाह—अत्तीत्यादि ॥ यस्य यजमानस्यैषा विधा विधीयते । यश्चाप्येनां विधां उपधानविधां वेदेति ॥

[18]सृष्टीरिति ॥ 'एकयाऽस्तुवत '* इत्याद्याः सप्तदश । चतस्रो दक्षिणेंस उपदधाति । अथ तिस्रः । अथ चतस्रो दक्षिणादंसात् दक्षिणां श्रोणिं अभ्यायातयति । यथा सृष्टमिति । यथा वै मन्त्रेषु सृष्टिमत्तया सृष्टं प्रजादिकं तदेव फलं अवरुन्धे ॥

[19]न वा इत्यादि ॥ व्युष्टीनां विधिः । इदं सर्वं अव्यावृत्तं अविभक्तरूपमेवासीत् । न वै तदानीं दिवाऽऽसीत्, न च नक्तमा-

---

*सं. ४-३-१०.

ष्टीरपश्यन्ता उपादधत ततो वा इदं
व्यौच्छद्यस्यैता उपधीयन्ते व्येवास्मा
उच्छत्यथो तम एवाप हते ॥२२॥

अव्यावृत्तमित्यवि–आवृत्तम् । ते । देवाः । एताः । व्युष्टीरिति वि–उष्टीः । अपश्यन् । ताः । उपेति । अदधत । ततः । वै । इदम् । वीति । औच्छत् । यस्य । एताः । उपधीयन्त इत्युप–धीयन्ते । वीति । एव । अस्मै । उच्छति । अथो इति । तमः । एव । अपेति । हते ॥ २२ ॥

वै जानित्रं पञ्चदशोदित्यै भागो वै धर्त्रस्समा-
वद्वीर्यौ विधा ततो वा इदं चतुर्दश च ॥४॥

सीत्, एकरूपमन्धंतमसमिवाभवत् । देवानामस्तित्वात् तेषां व्या-मोहमात्रमिदं, न विश्वविलय इत्येके । देवात्मानोपि विश्वविलये विद्यन्ते नित्यत्वादित्यन्ये । ते देवा इत्यादि । ' इयमेव सा या '* इत्यादयो व्युष्टयः पञ्चदश, सिस्त्रः तिस्रो दिक्षु तिस्रो मध्ये व्युष्टिभिश्चितिरवाप्यते । व्यौच्छदिति । अपहततमस्कं विभातमासीत् । उच्छी विवासे । व्येवास्मा इति । सर्वदा अस्य विभातमेव भवति । व्यावृत्तमेव सर्वं भासते । अथो अपिं च तमस्सदृशं एतं सर्वं पापं हन्त्येव । व्यत्ययेनात्मनेपदम् ॥

इति पञ्चमे तृतीये चतुर्थोनुवाकः.

*तै. सं. ४-३-११.

अ॒ग्नेर्नृ॒चक्ष॑सां ज॒नित्रं॑ मि॒त्रस्ये
न्द्र॑स्य॒ वसू॑नामादि॒त्याना॒मदि॑त्यै॒ दे॒-
वस्य॑ सवि॒तुस्सा॑वि॒त्रव॑ती ध॒र्त्रो यावा
नामृ॒भूणां॒ विव॒र्तश्च॒तुर्द॑श ॥
अग्ने॑ जा॒तान्प्रणु॑दानस्स॒पत्ना॒निति॑ पु॒-
रस्ता॒दुप॑ दधाति जा॒ताने॒व भ्रातृ॑व्या॒-
न्प्रणु॑दते॒ सह॑सा जा॒तानिति॑ प॒श्चा-
ज्ज॑नि॒ष्यमा॑णाने॒व प्रति॑ नुदते चतु-

[1]अग्ने॑ । जा॒तान् । प्रेति॑ । नु॒द॒ । न॒ः । स॒पत्ना॑न् । इति॑ । पु॒रस्ता॑त् । उपेति॑ । द॒धा॒ति॒ । जा॒तान् । ए॒व । भ्रातृ॑व्यान् । प्रेति॑ । नु॒द॒ते॒ । सह॑सा । जा॒तान् । इति॑ । प॒श्चात् । ज॒नि॒ष्यमा॑णान् । ए॒व । प्रतीति॑ । नु॒द॒ते॒ । [2]च॒तु॒श्च॒त्वा॒रि॒ꣳ॒श इति॑ चतु॑ः—च॒त्वा॒रि॒ꣳ॒शः । स्तोम॑ः । इति॑ । द॒क्षि॒ण॒तः । ब्र॒ह्म॒-व॒र्च॒समिति॑ ब्रह्म—व॒र्च॒सम् । वै । च॒तु॒श्च॒त्वा॒रि॒ꣳ॒श

[1]अग्ने जातानित्यादिरसपत्नानां विधिः । पञ्चम्यां चितौ असपत्नत्वं आत्मनः आत्मीयानां च याभिः क्रियते ताः असपत्नाः पञ्च । जातान्नाशयति, जनिष्यमाणान् प्रणुदते प्रतीपमुत्पत्त्या नुदते उत्पत्तिनिरोधं करोति ॥

[2]ब्रह्मवर्चसहेतुः चत्वारिंशः । गतमन्यत् ॥

श्चत्वारिꣳशस्स्तोम इति दक्षिणतो
ब्रह्मवर्चसं वै चतुश्चत्वारिꣳशो ब्र-
ह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्द-
क्षिणोर्धो ब्रह्मवर्चसितरष्षोडशस्स्तो-
म इत्युत्तरत ओजो वै षोडश ओज
एवोत्तरतो धत्ते तस्मात् ॥ २३ ॥
उत्तरतोऽभिप्रयायी जयति वज्रो
वै चतुश्चत्वारिꣳशो वज्रष्षोडशो

इति चतुः-चत्वारिꣳशः । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । एव । दक्षिणतः । धत्ते । तस्मात् । द-क्षिणः । अर्धः । ब्रह्मवर्चसितर इति ब्रह्मवर्चसि-तरः । षोडशः । स्तोमः । इति । उत्तरत इत्युत्-तरतः । ओजः । वै । षोडशः । ओजः । एव । उत्तरत इत्युत्-तरतः । धत्ते । तस्मात् ॥ २३ ॥ उत्तरतोभिप्रयायीत्युत्तरतः-अभिप्रयायी । जयति । [3]वज्रः । वै । चतुश्चत्वारिꣳश इति चतुः-चत्वारि-ꣳशः । वज्रः । षोडशः । यत् । एते इति । इष्टके

---

[3]वज्रो वा इत्यादि ॥ चतुश्चत्वारिंशष्षोडशश्च वज्रतुल्यौ सप-त्नानां नाशने । एते इति दक्षिणोत्तरे उच्येते । जातांश्चेति । पूर्वपश्चिमाभ्यां जातान् जनिष्यमाणांश्च भ्रातृव्यान् प्रणुद्य निपीड्य

यदेते इष्टके उपदधाति जाताꣳश्चैव जनिष्यमाणाꣳश्च भ्रातृव्यान्प्रणुद्य वज्रमनु प्र हरति स्तृत्यै पुरीषवतीं मध्य उप दधाति पुरीषं वै मध्यमात्मनस्सात्मानमेवाग्निं चिनुते सात्माऽमुष्मिन्लोके भवति य एवं वेद ॥

इति । उपदधातीत्युप–दधाति । जातान् । च । एव । जनिष्यमाणान् । च । भ्रातृव्यान् । प्रणुद्येति प्र–नुद्य । वज्रम् । अनु । प्रेति । हरति । स्तृत्यै । [4]पुरीषवतीमिति पुरीष–वतीम् । मध्ये । उपेति । दधाति । पुरीषम् । वै । मध्यम् । आत्मनः । सात्मानमिति स–आत्मानम् । एव । अग्निम् । चिनुते । सात्मेति स–आत्मा । अमुष्मिन्न् ।

एताभ्यां दक्षिणोत्तराभ्यां वज्रमनुप्रहरति स्तृत्यै मरणाय । स्तृणोतिः ह्रस्वान्तस्सौवादिकः ॥

[4]पुरीषवतीमिति ॥ 'पृथिव्याः पुरीषमस्यप्सो नाम '* इति पुरुषवतीं पुरुषशब्दवतीं पुरीषसंहितां वा कृत्वा उपदधाति । पुरीषं हि मध्यमात्मन अग्निशरीरस्य मध्यः । तस्मात्सात्मानमग्निं चिनुते आत्मानं च चिनुत इत्यर्थः । एवं वेदिता अमुष्मिन् लोके सात्मा भवति फलवान् व्याप्तवान् भवति ॥

*सं. ४-३-१२.

दैता वा असपत्ना नामेष्टका यस्यै-
ता उपधीयन्ते ॥ २४ ॥ नास्य स-
पत्नो भवति पशुर्वा एष यदग्निर्वि-
राजं उत्तमायां चित्यामुप दधाति

लोके । भवति । यः । एवम् । वेद । [5]एताः । वै । असपत्नाः । नाम । इष्टकाः । यस्य । एताः । उपधीयन्त इत्युप-धीयन्ते ॥ २४ ॥ न । अस्य । सपत्नः । भवति । [6]पशुः । वै । एषः । यत् । अग्निः । विराज इति वि-राजः । उत्तमायामित्युत्-तमायाम् । चित्याम् । उपेति । दधाति । विराजमिति वि-राजम् । एव । उत्तमामित्युत्-तमाम् । पशुषु । दधाति । तस्मात् । पशुमानिति पशु-

---

[5]एता वा इत्यादि । गतम् ॥

[6]पशुर्वा इत्यादि ॥ पशुर्धिकः [शुवर्धकः] निषेकादिक्रमेणोत्पाद्यत्वात् वा पशुः । तस्मात्पश्चात्मन्यस्मिन् उत्तमायां चित्यां पञ्चम्यां चितौ विराज उपदधाति 'एवश्छन्दः'* इत्याद्याः चत्वारिंशतं दश दश दिक्षु मध्ये विराजः चत्वारिंशदक्षरत्वात् । उत्तमत्वमासां विराजनहेतुत्वात् वा, विराजोऽन्नस्य हेतुत्वाद्वा । उत्तमशब्द उञ्छादिरन्तोदात्तः । विराजमेवेति । प्रभूतमन्नम् । उत्तमामिति । ब्राह्मणादिभ्योपि उद्गततमां उज्ज्वलतमां 'भुङ्क्ष्व' इत्यादिकां वाचं

---

*सं. ४-३-१२.

विराजमेवोत्तमां पशुषु दधाति त-
स्मात्पशुमानुत्तमां वाचं वदति द-
शदशोप दधाति सवीर्यत्वायाक्ष्ण-
योप दधाति तस्मादक्ष्णया पशवोऽ-
ङ्गानि प्र हरन्ति प्रतिष्ठित्यै यानि
वै छन्दाꣳसि सुवर्ग्याण्यासन्तैर्देवा-

मान् । उत्तमामित्युत्-तमाम् । वाचम् । वदति । [7]दशदशेति दश-दश । उपेति । दधाति । सवीर्यत्वायेति सवीर्य-त्वाय । [8]अक्ष्णया । उपेति । दधाति । तस्मात् । अक्ष्णया । पशवः । अङ्गानि । प्रेति । हरन्ति । प्रतिष्ठित्या इति प्रति-स्थित्यै । [9]यानि । वै । छन्दाꣳसि । सुवर्ग्याणीति सुवः-ग्यानि । आसन् । तैः । देवाः । सुवर्गमिति सुवः-

वदति पशुमान्यः कश्चिदपि । यद्वा—पशुमान् ब्राह्मणः उत्तमां 'ओं श्रावय' इत्यादिकां वाचं वदति। 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम् ॥

[7]सवीर्यत्वायेति ॥ विराट्सङ्ख्यापूरणात् विराड्वीर्यत्वं, ऊनत्वे हि नीर्वीर्यत्वं स्यात् ॥

[8]अक्ष्णयेत्यादि ॥ गतम्* ॥

[9]यानिवा इत्यादि ॥ स्वर्गमनस्य योग्यतावन्ति स्वर्ग्याणि ।

*सं. ५-२-७.

स्सुवर्गं लोकमायन्तेन ऋषयः॥२५॥
अश्राम्यन्ते तपोतप्यन्त तानि तप-
साऽपश्यन्तेभ्य एता इष्टका निरमि-
मतैवश्छन्दो वरिवश्छन्द इति ता
उपादधत ताभिर्वै ते सुवर्गं लोक-
मायन् यदेता इष्टका उपदधाति

गम्। लोकम्। आयन्। तेन। ऋषयः॥ २५ ॥अ-
श्राम्यन्। ते। तपः। अतप्यन्त। तानि। तपसा।
अपश्यन्। तेभ्यः। एताः। इष्टकाः। निरिति। अ-
मिमत। एवः। छन्दः। वरिवः। छन्दः। इति।
[10]ताः। उपेति। अदधत। ताभिः। वै। ते। सु-
वर्गमिति सुवः-गम्। लोकम्। आयन्। यत्।
एताः। इष्टकाः। उपदधातीत्युप-दधाति। या-
नि। एव। छन्दांसि। सुवर्ग्याणीति सुवः-

'गोद्व्यचः' इति यत्। यानि सर्वाणि छन्दांसि तैर्देवास्स्वर्गं गताः। तेन छन्दसां स्वर्गगमनहेतुना ऋषयोऽश्राम्यन् प्रणिधानेन यत्नं कृतवन्तः तदवस्थानं ज्ञातुम्। ततस्तत् ज्ञात्वा तल्लाभाय तपोऽतप्यन्त। ततस्तानि तेन तपसा दृष्टवन्तः। ततस्तानि दृष्ट्वा तेभ्य एता इष्टका विराड्संज्ञा निरमिमत उत्पादितवन्तः। एमन्नादित्वादेव पररूपत्वम्॥

[10]ता इत्यादि॥ गतम्॥

यान्येव छन्दा᳘ꣳसि सुवर्ग्याणि तैरेव यजमानस्सुवर्गं लोकमेति यज्ञेन वै प्रजापतिः प्रजा असृजत ता-स्स्तोमभागैरेवासृजत यत् ॥ २६ ॥ स्तोमभागा उपदधाति प्रजा एव तद्यजमानस्सृजते बृहस्पतिर्वा ए-

ग्यानि । तैः । एव । यजमानः । सुवर्गमिति सुवः–गम् । लोकम् । एति । [11]यज्ञेन । वै । प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । ताः । स्तोमभागैरिति स्तोम–भागैः । एव । असृजत । यत् ॥ २६ ॥ स्तोमभागा इति स्तोम–भागाः । उपदधातीत्युप–दधाति । प्रजा इति प्र–जाः । एव । तत् । यजमानः । सृजते । बृहस्पतिः । वै । एतत् । यज्ञस्य । तेजः । सममिति । अभरत् । यत् । स्तोमभागा इति स्तोम–भागाः । यत् । स्तोमभागा इति स्तोम–भागाः । उपदधातीत्युप–दधाति । सतेजसमिति स–तेजसम् । एव । अग्निम् । चिनुते । [12]बृहस्पतिः । वै ।

---

[11]यज्ञेन वा इत्यादि ॥ स्तोमभागानां विधिः । स्तोमानां त्रिवृदादीनां भागास्तेजोंशाः बृहस्पतितेजस्साहितमेव चिनुते ॥

[12]प्रतिष्ठामिति॥प्रतितिष्ठति स्तोम आभिरिति प्रतिष्ठाः स्तोम भागाः॥

तद्यज्ञस्य तेजस्सम्भरद्यथ्स्तोमभा-
गा यथ्स्तोमभागा उपदधाति स-
तेजसमेवाग्निं चिनुते बृहस्पतिर्वा
एतां यज्ञस्य प्रतिष्ठामपश्यद्यथ्स्तो-
मभागा यथ्स्तोमभागा उपदधाति
यज्ञस्य प्रतिष्ठित्यै सप्तसप्तोप दधा-
ति सवीर्यत्वाय तिस्रो मध्ये प्रति-
ष्ठित्यै ॥ २७ ॥

एताम् । यज्ञस्य । प्रतिष्ठामिति प्रति-स्थाम् । अ-पश्यत् । यत् । स्तोमभागा इति स्तोम-भागाः । यत् । स्तोमभागा इति स्तोम-भागाः । उपदधातीत्युप-दधाति । यज्ञस्य । प्रतिष्ठित्या इति प्रति-स्थित्यै ।[13]सप्तसप्तेति सप्त-सप्त । उपेति । दधाति । स-वीर्यत्वायेति सवीर्य-त्वाय । तिस्रः । मध्ये । प्र-तिष्ठित्या इति प्रति-स्थित्यै ॥ २७ ॥

उत्तरतो धत्ते तस्मादुपधीयन्त ऋषयोसृज-
त यत्त्रिचत्वारिंशच्च ॥ ५ ॥

---

[13]सवीर्यत्वायेति ॥ शक्तिमत्त्वात् सप्तत्वस्य शाक्करत्वात् । प्रतिष्ठित्या इति । मध्ये उत्तम्भनभावे प्रतिष्ठितं स्यात् ॥

इति पञ्चमे तृतीये पञ्चमोनुवाकः.

रश्मिरित्येवादित्यमसृजत प्रेतिरि-
ति धर्ममन्वितिरिति दिवꣳ सन्धि-
रित्यन्तरिक्षं प्रतिधिरिति पृथिवीं
विष्टम्भ इति वृष्टिं प्रवेत्यहरनुवेति

[1]रश्मिः । इति । एव । आदित्यम् । असृज-
त । प्रेतिरिति प्र-इतिः । इति । धर्मम् । अन्वि-
तिरित्यनु-इतिः । इति । दिवम् । सन्धिरिति सं-
धिः । इति । अन्तरिक्षम् । प्रतिधिरिति प्रति-धिः।
इति । पृथिवीम् । विष्टम्भ इति वि-स्तम्भः ।
इति । वृष्टिम् । प्रवेति प्र-वा । इति । अहः । अ-

[1]उक्तं—'यज्ञेन वै प्रजापतिः प्रजा असृजत तास्स्तोमभागै-रेवासृजत'* इति । तत्र केन कामसृजतेत्याह—रश्मिरित्येवेति ॥ 'रश्मिरसि क्षयाय त्वा क्षयं जिन्व'† इत्यनेनादित्यमसृजतेत्येवं रश्मिमान् रश्मिरादित्यः । मत्वर्थीयो लुप्यते । क्षयन्ति निवसन्ति सर्वे देवा अस्मिन्निति क्षय आदित्यः । 'क्षयो निवासे' इत्या-द्युदात्तत्वम् । प्रकृष्टा गतिः प्रेतिः धर्मसुकृतार्जनानन्तरं भोगाय गम्यत इति । अन्वितिरिति द्यौः । उभयत्रापि 'तादौच' इति गतेः प्रकृतिस्वरत्वम् । सन्धीयेते द्यावापृथिव्यावनेनेति सन्धिः अन्त-रिक्षम् । 'उपसर्गे घोः किः' प्रत्येकं धारयति मातृवत्प्रजा इति प्रतिधिः पृथिवी । पूर्ववत्किः । विष्टभ्यन्ते धार्यन्ते प्रजा अने-नेति विष्टम्भो वृष्टिः । थाथादिना उत्तरपदान्तोदात्तत्वम् । प्रथ-

*सं. ५-३-५[11]. †सं. ४-४-१.

रात्रिमुशिगिति वसून्प्रकेत इति रु-
द्रान्थ्सुदीतिरित्यादित्यानोज इति
पितॄꣳस्तन्तुरिति प्रजाः पृतनाषाडिति
पशून्रेवदित्योषधीरभिजिदसि युक्त-

नुवेत्यनु-वा । इति । रात्रिम् । उशिक् । इति । व-
सून् । प्रकेत इति प्र-केतः । इति । रुद्रान् । सु-
दीतिरिति सु-दीतिः । इति । आदित्यान् । ओ-
जः । इति । पितॄन् । तन्तुः । इति । प्रजा इति
प्र-जाः । पृतनाषाट् । इति । पशून् । रेवत् ।
इति । ओषधीः । [2]अभिजिदित्यभि-जित् । अ-

मतः प्राप्यन्ते बुध्यन्त इति वा । दिव उकारान्तादेशः 'मन्
क्तिन् व्याख्यान' इत्यादिना उत्तरपदान्तोदात्तत्वम् । बहुव्रीहौ
'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । उशिजो वसवः ।
वश कान्तौ, इति । प्रकृष्टज्ञाना रुद्राः । कित ज्ञाने । शोभन-
दीधितयः आदित्याः । ओजस्विनः पितरः । मत्वर्थीयो
लुप्यते । तन्तवः प्रजाः पृतनाः मनुष्यसङ्घातान् सहन्ति क्षीरा-
दिना धारयन्तीति पृतनाषाहः पशवः । 'छन्दसि सहः'
इति 'सहेः पृतनर्ताभ्याम्' इति षत्वम् । रेवत् धनवत् । धन-
वत्यः ओषधयः । क्रियाविनिमयादिना धनसाधनत्वात् धनवत्यः ।
सामान्यविवक्षया नपुंसकत्वम् । 'रयेर्मतौ बहुलम्' इति संप्र-
सारणम् । 'रेशब्दाच्च' इति मतुपो वत्वम् ॥

[2]आभिमुख्येन सपत्नान् जयतीत्यभिजिदिन्द्रः । वज्रं वज्रवन्तं

ग्रावा ॥ २८ ॥ इन्द्राय त्वेन्द्रं जि-
न्वेत्येव दक्षिणतो वज्रं पर्यौहदभि-
जित्यै ताः प्रजा अपप्राणा असृ-
जत तास्वधिपतिरसीत्येव प्राणमं-

सि । युक्तग्रावेति युक्त-ग्रावा ॥ २८ ॥ इन्द्राय । त्वा । इन्द्रम् । जिन्व । इति । एव । दक्षिणतः । वज्रम् । परीति । औहत् । अभिजित्या इत्यभि-जित्यै । [3]ताः । प्रजा इति प्र-जाः । अपप्राणा इत्यप-प्राणाः । असृजत । तासु । अधिपतिरित्यधि-पतिः । असि । इति । एव । प्राणमिति प्र-अनम् । अदधात् । यन्ता । इति । अपानमित्यप-

कृत्वा जयिनं अनेनेन्द्रमकरोदित्यभिप्रायः । दक्षिणत इत्यादि । अनेन मन्त्रेण दक्षिणे हस्ते वज्रं अधारयत् प्रजापत्यनुग्रहादिन्द्रः । तस्मादनेन मन्त्रेणोपधानमभिजित्यै भवति ॥

[3]ता इत्यादि ॥ ताः पूर्वाः सृष्टाः सर्वा अपि प्रजाः अपप्राणाः प्राणापानचक्षुश्शोत्रहीना एव असृजत। तासु 'अधिपतिरसि '* इत्यादिभिः प्राणादीन् अदधात् स्थापितवान् । अध्यारूढः प्रजाः पातीति अधिपतिः प्राण उपरिवृत्तिः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । यमयतीति यन्ता अधोवृत्तिरपानः । प्राणापानशब्दौ ण्यन्तात्पचाद्यजन्तौ । थाथादिस्वरः । संसर्पति ध्रुवतारकादिष्व-

*सं. ४-४-१.

दधाद्यन्तेत्यंपानꣳ सꣳसर्प इति च-
क्षुर्वयोधा इति श्रोत्रं ताः प्रजाः
प्राणतीरंपानतीः पश्यंन्तीश्शृण्वती-
र्न मिंथुनी अंभवन्तासुं त्रिवृदसी-
त्येव मिंथुनमंदधात्ताः प्रजा मिंथु-

अनम् । सꣳसर्प इतिं सं–सर्पः । इतिं । चक्षुः । वयोधा इतिं वयः–धाः । इतिं । श्रोत्रंम् । [4]ताः । प्रजा इतिं प्र–जाः । प्राणतीरितिं प्र–अनतीः । अपानतीरित्यंप–अनतीः । पश्यंन्तीः । शृण्वतीः । न । मिथुनी । अभवन्न् । तासुं । त्रिवृदितिं त्रि–वृत् । असि । इतिं । एव । मिथुनम् । अदधात् । [5]ताः । प्रजा इतिं प्र–जाः । मिथुनी ॥ २९ ॥ भवंन्तीः ।

पीति संसर्पः चक्षुः । पचाद्यचि 'परादिश्छन्दसि बहुलम्'। वयोधाः वय इव सर्वतो गत्वा दधाति शब्दमिति । नद्या उदात्तत्वम् ॥

[4]तासु 'त्रिवृदसि'* इत्यादिभिः मिथुनशक्तिमदधात् । त्रिवृत्संश्लेषः . प्रवर्तनसंवर्तननिवर्तनानि मिथुनीभवनविशेषाः । कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

[5]ता इत्यादि ॥ मिथुनीभवन्तीः मैथुनं कुर्वन्त्योपि न प्राजायन्त न प्रजाः प्राजनयन् । ततः 'संरोहोसि'* इत्यादिभिः

*सं. ४-४-१.

नी ॥ २९ ॥ भवन्तीर्न प्राजायन्त ताःसꣳरोहोसि नीरोहोसीत्येव प्राजनयत्ताः प्रजाः प्रजाता न प्रत्यतिष्ठन्ता वसुकोसि वेषश्रिरसि वस्यष्टिरसीत्येवैषु लोकेषु प्रत्यस्थापयद्यदाह वसुकोसि वेषश्रिरसि व-

न । प्रेति । अजायन्त । ताः । सꣳरोह इति सं–रोहः । असि । नीरोह इति निः–रोहः । असि । इति । एव । प्रेति । अजनयत् । [6]ताः । प्रजा इति प्र–जाः । प्रजाता इति प्र–जाताः । न । प्रतीति । अतिष्ठन् । ताः । वसुकः । असि । वेषश्रिरिति वेष–श्रिः । असि । वस्यष्टिः । असि । इति । एव । एषु । लोकेषु । प्रतीति । अस्थापयत् । यत् । आह । वसुकः । असि । वेषश्रिरिति वेष–श्रिः ।

---

चतुर्भिः प्राजनयन् प्रजननशक्तिमतीरकरोत् । सम्यक् रोहः संरोहः । निश्चयेन रोहो नीरोहः । प्रथमरोहः प्ररोहः पुत्रादिः । पश्चाद्रोहोऽनुरोहः पौत्रादिः । थाथादिस्वरः ॥

[6]ता इत्यादि ॥ प्रजाता अपि ता न प्रत्यातिष्ठन् प्रतिष्ठिता नाभवन् । ताः 'वसुकोसि'* इत्यादिभिरेषु लोकेषु प्रतिष्ठिता अकरोत् ।

---

*सं. ४-४-१.

स्यंष्टिरसीतिं प्रजा एव प्रजांता ए-
षु लोकेषु प्रतिष्ठापयति सात्मा ऽन्त-
रिक्षꣳ रोहति सप्राणो ऽमुष्मिन्लोके
प्रतिं तिष्ठत्यव्यर्धुकः प्राणापानाभ्यां
भवति य एवं वेदं ॥ ३० ॥

असि । वस्यंष्टिः । असि । इतिं । प्रजा इतिं प्र-जाः । एव । प्रजांता इति प्र-जाताः । एषु । लो-केषुं । प्रतीतिं । स्थापयति । [7]सात्मेति स-आ-त्मा । अन्तरिक्षम् । रोहति । सप्राण इति स-प्राणः । अमुष्मिन्नं । लोके । प्रतीतिं । तिष्ठति । अव्यर्धुक इत्यवि-अर्धुकः । प्राणापानाभ्यामितिं प्राण-अपानाभ्यांम् । भवति । यः । एवम् । वेदं ॥ ३०

युक्तग्रांवा प्रजा मिथुन्यंन्तरिंक्षं द्वादंश च ॥ ६ ॥

---

वसुकः वसुमान् । व्याप्यमानश्रीः वेषश्रीः । उकारान्तादेशः । वसुषु भक्तिमान् वस्यष्टिः । पृषोदरादिः ॥

[7]सात्मेत्यादि ॥ विदुषः फलम् । ऋतेः छान्दस उकञ् ॥

इति पञ्चमे तृतीये षष्ठोनुवाकः.

नाकसद्भिर्वै देवास्सुवर्गं लोकमाय-
न्तन्नाकसदां नाकसत्त्वं यन्नाकसद
उपदधाति नाकसद्भिरेव तद्यजमा-
नस्सुवर्गं लोकमेति सुवर्गो वै लो-
को नाको यस्यैता उपधीयन्ते ना-

[1]नाकसद्भिरिति नाकसत्-भिः। वै। देवाः। सुव-र्गमिति सुवः-गम्। लोकम्। आयन्न्। तत्। नाकस-दामिति नाक-सदाम्। नाकसत्त्वमिति नाकसत्-त्वम्। यत्। नाकसद इति नाक-सदः। उपदधातीत्युप-दधाति। नाकसद्भिरिति नाकसत्-भिः। एव। तत्। यजमानः। सुवर्गमिति सुवः-गम्। लोकम्। एति। सुवर्ग इति सुवः-गः। वै। लोकः। नाकः। यस्य। एताः। उपधीयन्त इत्युप-धीयन्ते। न।

---

[1]नाकसद्भिरित्यादिना नाकसदां विधिः ॥ नाकस्य पृष्ठे स्वर्गे लोके इत्यनुषङ्गः। तेनोपलक्षिता नाकसदः 'राज्ञ्यसि'* इत्यादयः पञ्च एकैका दिक्षु एकां मध्ये उपदधानः अस्माकं कं सुखं अकं दुःखं तत्स्वभावो न भवतीति नाकः। 'नभ्राण्णपात्' इति प्रकृत्या भावः ॥

---

*सं. ४-४-२.

स्मा अर्कं भवति यजमानायतनं
वै नाकसदो यन्नाकसदं उपदधात्या-
यतंनमेव तद्यजंमानः कुरुते पृष्ठा-
नां वा एतत्तेजस्संभृतं यन्नाकसदो
यन्नाकसदंः ॥ ३१ ॥ उपदधाति
पृष्ठानांमेव तेजोवं रुन्धे पञ्चचोडा

अस्मै । अर्कम् । भवति । [2]यजमानायतनमिति यजमान–आयतनम् । वै । नाकसद इति नाक–सदंः । यत् । नाकसद इति नाक–सदंः । उपद-धातीत्युंप–दधांति । आयतंनमित्यां–यतंनम् । ए-व । तत् । यजंमानः । कुरुते । [3]पृष्ठानांम् । वै । एतत् । तेजंः । सम्भृतमिति सं–भृतम् । यत् । नाकसद इति नाक–सदंः । यत् । नाकसद इति नाक–सदंः ॥ ३१ ॥ उपदधातीत्युंप–दधांति । पृ-ष्ठानांम् । एव । तेजंः । अवेतिं । रुन्धे । [4]पञ्चचो-

[2]यजमानायतनमिति ॥ तत्साधनत्वात्ताच्छब्द्यम् ॥

[3]पृष्ठानामिति ॥ रथन्तरादीनां साम्नां तेजस्सम्भृतं इष्टकारूपेण । तस्मात् पृष्ठसाध्यं तेजः आसामुपधानेन लभते ॥

[4]पञ्चचोडा इति ॥ उपरिष्टान्नाकसदामुपदधाति तस्मा*त्प्रा-

*पश्चा.

उप॑ दधात्यप्सरसं॑ ए॒वैन॑मे॒ता भू॒ता
अ॒मुष्मि॑न्लो॒क उप॑ शे॒रेऽथो॑ तनूपा-
नी॑रे॒वैता यज॑मानस्य॒ यं द्वि॒ष्यात्त-
मु॑प॒दध॑द्ध्यायेदे॒ताभ्य॑ ए॒वैनं॑ दे॒वता॑-

डा इति॑ पञ्च–चोडाः । उपेति॑ । द॒धा॒ति॒ । अ॒प्स॒र-
सः॑ । ए॒व । ए॒नम् । ए॒ताः । भू॒ताः । अ॒मुष्मिन्न् ।
लो॒के । उपेति॑ । शे॒रे॒ । अथो॒ इति॑ । त॒नू॒पा॒नी॒रिति॑
तनू–पानीः॑ । ए॒व । ए॒ताः । यज॑मानस्य । यम् ।
द्वि॒ष्यात् । तम् । उ॒प॒द॒ध॒दित्यु॑प–दध॑त् । ध्या॒ये॒त् ।
ए॒ताभ्यः॑ । ए॒व । ए॒नम् । दे॒वता॑भ्यः । एति॑ । वृ॒श्च॒ति॒ ।

चीमुत्तमां नाकसद एव 'अयं पुरो हरिकेशः'* इत्याद्याः पञ्च एकैका दिक्षु एकां मध्ये । चुड संवरणे, चोडाः संवृताभ्यः अप्सरसः संस्तवात् पञ्चैव चोडाः पञ्चचोडाः । 'दिक्संख्ये संज्ञायाम्' इति समासः सप्तर्षिवत् । एताः पञ्चचोडाः अप्सरसः एवम्भूता अमुष्मिन् लोके यजमानमुपशेरते रमयन्ति जायाभूताः । 'लोपस्त आत्मनेपदेषु' इति लोपः 'बहुलं छन्दसि' इति रुट् । अथो अपि च एता यजमानस्य तनूपानीः शरीरस्य पालिन्यः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । तस्माद्यजमानो यं द्विष्यात्तं पुरुषं एता उपदध्यात् । एताभ्यः तनूपानीभ्यः पञ्चचोडाभ्यो देवताभ्य एनं द्वेष्यमावृश्चति छिनत्ति पृथक्त्वेनोपधानकाले ध्यातत्वात् । ततश्च विनष्टतनुस्सन् तदानीमेवार्तिं गच्छति ॥

*सं. ४-४-३.

भ्य आ वृंश्चति ताजगार्तिमार्च्छेत्यु-
त्तंरा नाकसद्भ्य उपं दधाति यथां
जायामानीयं गृहेषुं निषादयंति ता-
दृगेव तत् ॥ ३२ ॥ पश्चात्प्राचीमु-
त्तमामुपं दधाति तस्मांत्पश्चात्प्राची
पत्नयन्वांस्ते स्वयमातृण्णां चं विकु-

ताजक्। आर्तिम्। एतिं। ऋच्छति। [5]उत्तंरा इत्युत्-तराः। नाकसद्भ्य इतिं नाकसत्-भ्यः। उपेतिं। दधाति। यथां। जायाम्। आनीयेत्यां-नीयं। गृहेषुं। निषादयतीतिं नि-सादयंति। ताद्दक्। एव। तत्॥ ३२ ॥ पश्चात्। प्राचीम्। उत्तमामित्युंत्-तमाम्। उपेतिं। दधाति। तस्मांत्। पश्चात्। प्राचीं। पत्नीं। अन्विति। आस्ते। [7]स्वयमा-

[5]उत्तरा इत्यादि ॥ उत्तराः उद्गततरा नाकसद्भ्य उपदधाति पञ्चचोडाः। यथेत्यादि। आयतनस्थानीयानां नाकसदां उपरि जायास्थानीयानां पञ्चचोडानां उपधानात् ॥

[6]पश्चात्प्राचीमित्यादि ॥ प्राच्यां प्राङ्मुख उत्तमां अन्त्यामुपदधाति। केचिदाहुः—प्राचीं दक्षिणां उत्तरां मध्यमाञ्चोपधाय प्रतीच्यां दिशि क्रमोपधेया तृतीया ? ॥

[7]प्राणो वा इत्यादि ॥ प्राणस्थानीया स्वयमातृण्णा विकर्णी चापि शब्द्यते ॥

र्णीं चोत्तमे उप दधाति प्राणो वै स्वं-
यमातृण्णाऽऽयुर्विकर्णी प्राणं चैवा-
युश्च प्राणानामुत्तमौ धत्ते तस्मात्प्रा-
णश्चायुश्च प्राणानामुत्तमौ नान्यामु-
त्तरामिष्टकामुप दध्याद्यदन्यामुत्तरा-
मिष्टकामुपदध्यात्पशूनाम् ॥ ३३ ॥

तृण्णामिति स्वयं–आतृण्णाम् । च । विकर्णीमिति वि–कर्णीम् । च । उत्तमे इत्युत्–तमे । उपेति । दधाति । प्राण इति प्र–अनः । वै । स्वयमातृण्णेति स्वयं–आतृण्णा । आयुः । विकर्णीति वि–कर्णी । प्राणमिति प्र–अनम् । च । एव । आयुः । च । प्राणानामिति प्र–अनानाम् । उत्तमावित्युत्–तमौ । धत्ते । तस्मात् । प्राण इति प्र–अनः । च । आयुः । च । प्राणानामिति प्र–अनानाम् । उत्तमावित्युत्–तमौ । [8]न । अन्याम् । उत्तरामित्युत्–तराम् । इष्टकाम् । उपेति । दध्यात् । यत् । अन्याम् । उत्तरामित्युत्–तराम् । इष्टकाम् । उपदध्यादित्युप–दध्यात् । पशूनाम्॥३३॥

[8]यदित्यादि ॥ अपिदध्यात् तिरोदध्यात् नाशयेत् । तस्मादन्या तयोरुपरि निधेयेति ॥

च यजमानस्य च प्राणं चायुश्चापि दध्यात्तस्मान्नान्योत्तरेष्टकोपधेया स्वयमातृण्णामुप दधात्यसौ वै स्वयमातृण्णाऽमूमेवोप धत्तेऽश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते स्वयमातृण्णा भवति प्राणा-

च । यजमानस्य । च । प्राणमिति प्र—अनम् । च । आयुः । च । अपीति । दध्यात् । तस्मात् । न । अन्या । उत्तरेत्युत्—तरा । इष्टका । उपधेयेत्युप—धेया । [9]स्वयमातृण्णामिति स्वयं—आतृण्णाम् । उपेति । दधाति । असौ । वै । स्वयमातृण्णेति स्वयं—आतृण्णा । अमूम् । एव । उपेति । धत्ते । अश्वम् । उपेति । घ्रापयति । प्राणमिति प्र—अनम् । एव । अस्याम् । दधाति । अथो इति । प्राजापत्य इति प्राजा—पत्यः । वै । अश्वः । प्रजापतिनेति प्रजा—पतिना । एव । अग्निम् । चिनुते । स्वयमातृण्णेति स्वयं—आतृण्णा ।

[9]स्वयमातृण्णामित्यादि ॥ व्याख्यातम्* । 'असौ वै' इत्यादि शेषः ॥

*सं. ५-२-८.

नामुत्सृष्ट्या अथो सुवर्गस्य लोक-
स्यानुख्यात्या एषा वै देवानां वि-
क्रान्तिर्यद्विकर्णी यद्विकर्णीमुपदधाति
देवानामेव विक्रान्तिमनु वि क्रमत
उत्तरत उप दधाति तस्मादुत्तरत-

भवति । प्राणानामिति प्र—अनानाम् । उत्सृष्ट्या इत्युत्—सृष्ट्यै । अथो इति । सुवर्गस्येति सुवः—गस्य । लोकस्य । अनुख्यात्या इत्यनु—ख्यात्यै ।
10 एषा । वै । देवानाम् । विक्रान्तिरिति वि—क्रान्तिः । यत् । विकर्णीति वि—कर्णी । यत् । विकर्णीमिति वि—कर्णीम् । उपदधातीत्युप—दधाति । देवानाम् । एव । विक्रान्तिमिति वि—क्रान्तिम् । अनु । वीति । क्रमते । 11 उत्तरत इत्युत्—तरतः । उपेति । दधाति । तस्मात् । उत्तरतउपचार इत्युत्तरतः—उपचा-

[10] एषा वा इत्यादि ॥ विक्रान्तिः विजयशक्तिः तामनुविक्रमते तया सहाप्रतिबन्धेन आक्रामति । तृतीयार्थेऽनोः कर्मप्रवचनीयत्वम् । 'वृत्तिसर्गतायनेषु क्रमः' इति वृत्तावात्मनेपदम् ॥

[11] उत्तरत इति ॥ उत्तरतः प्रक्रमवेलायां प्रकीर्णमुपदधाति । उत्तरतउपचारः उत्तरस्यां दिशि कर्तव्या उपचारा यस्य तादृशोऽग्निः तस्माद्भवति ॥

उपचारोऽग्निर्वायुमती भवति समि-
द्धयै ॥ ३४ ॥
छन्दांस्युप दधाति पशवो वै छ-
न्दांसि पशूनेवाव रुन्धे छन्दांसि

रः । अग्निः । [12]वायुमतीति वायु–मती । भवति ।
समिद्ध्या इति सं–इद्धयै ॥ ३४ ॥

संभृतं यन्नाकसदो यन्नाकसदस्तत्पशूनामे-
षा वै द्वाविंशतिश्च ॥ ७ ॥

[1]छन्दांसि । उपेति । दधाति । पशवः । वै ।
छन्दांसि । पशून् । एव । अवेति । रुन्धे । छ-
न्दांसि । वै । देवानाम् । वामम् । पशवः । वा-

[12]वायुमतीति ॥ वायुशब्दवान्मन्त्रः 'आदस्य वातः'* इति । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । समिध्या इति । अग्नेस्समिन्धनार्थम् । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

इति पञ्चमे तृतीये सप्तमोनुवाकः.

---

[1]छन्दांस्युपदधातीत्यादि ॥ छन्दोभिः गायत्र्यादिभिः उपधेया इष्टका छन्दांसि 'अग्निर्मूर्धा'† इत्याद्याः तिस्रस्तिस्रो यथाम्नानमेकैकस्यां दिशि । पशवो वा इति । तत्साधनत्वात्ताच्छब्द्यम् । नानारूपत्वाद्वा । छन्दांसि वा इति । देवानां स्व-

*सं. ४-४-३. †सं. ४-४-४.

वै देवानां वामं पशवो वाममेव प-
शूनवं रुन्ध एताᳬं ह वै यज्ञसेनश्चै-
त्रियायणश्चितिं विदां चकार तया वै
स पशूनवारुन्ध यदेतामुप दधाति
पशूनेवावं रुन्धे गायत्रीः पुरस्तादु-

मम् । एव । पशून् । अवेति । रुन्धे । [2]एताम् । ह । वै । यज्ञसेन इति यज्ञ—सेनः । चैत्रियायणः । चितिम् । विदाम् । चकार । तया । वै । सः । पशून् । अवेति । अरुन्ध । यत् । एताम् । उपदधातीत्युप—दधाति । पशून् । एव । अवेति । रुन्धे । [3]गायत्रीः । पुरस्तात् । उपेति । दधाति ।

---

भूतं वामं वननीयं यद्धनं पश्वात्मकं तत्खलु छन्दांसि । तस्माच्छन्दसामुपधानेन पश्वात्मकं धनं वाममवरुन्धे ॥

[2]एतां ह वा इत्यादि ॥ यज्ञसेनो नाम चित्रियायणस्य अपत्यं पुमान् चैत्रियायणः । 'वृद्धस्य च पूजायाम्' इति युवत्वम्, 'यञिञोश्च' इति फक् । नडादिश्चायं द्रष्टव्यः । यद्वा—नडादिषु चित्रशब्दः पठ्यते । तस्मात् फक् । छान्दसो यकारोपजनः । स एताः छन्दश्चितिं विदांचकार ज्ञातवान् । 'उषविदजागृभ्यः' इत्याम्प्रत्ययः । विदेरदन्त्विति निपातनाद्गुणाभावः । तयेत्यादि । गतम् ॥

[3]गायत्रीरिति ॥ 'अग्निर्मूर्धा'* इत्याद्याः । तेजो वा इति । तेजोहेतुत्वात् तेजसा सहोत्पन्नत्वात् ॥

---

*सं. ४-४-४.

पं दधाति तेजो वै गायत्री तेज एव
॥ ३५ ॥ मुखतो धत्ते मूर्धन्वतीर्भ-
वन्ति मूर्धानमेवैनꣳ समानानां क-
रोति त्रिष्टुभ उपं दधातीन्द्रियं वै
त्रिष्टुगिन्द्रियमेव मध्यतो धत्ते ज-
गतीरुपं दधाति जागता वै पशवः

तेजः । वै । गायत्री । तेजः । एव ॥ ३५ ॥ मुखतः । धत्ते । [4]मूर्धन्वतीरिति मूर्धन्न्–वतीः । भवन्ति । मूर्धानम् । एव । एनम् । समानानाम् । करोति । [5]त्रिष्टुभः । उपेति । दधाति । इन्द्रियम् । वै । त्रिष्टुक् । इन्द्रियम् । एव । मध्यतः । धत्ते । [6]जगतीः । उपेति । दधाति । जागताः । वै । पु-

---

[4]मूर्धन्वतीरिति ॥ वयस्यासुमूर्ध्नां मतुब्विधीयते । नैता वयस्याः; तर्हि 'तद्वानासां' इति न विवक्ष्यते । मूर्धशब्दवत्यो मूर्धन्वत्यः । 'अनो नुट्' 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । पूर्ववत्सवर्णदीर्घत्वम् । ताभिरुपधेया अप्युपचारेण गायत्र्यः मूर्धन्वत्यश्च । मूर्धानं प्रधानमित्यर्थः ॥

[5]त्रिष्टुभ इति ॥ 'भुवो यज्ञस्य'* इत्याद्याः तिस्रो दक्षिणतः । इन्द्रियं वा इति । पूर्ववत्ताच्छब्द्यम् ॥

[6]जगतीरिति ॥ 'जनस्य गोपाः'* इत्याद्यास्तिस्रः पश्चात् ॥

---

*सं. ४-४-४.

पशूनेवावं रुन्धेऽनुष्टुभ उपं दधाति
प्राणा वा अंनुष्टुप्प्राणानामुत्सृंष्ट्यै
बृहतीरुष्णिहाः पङ्क्तीरक्षरंपङ्क्तीरिति
विषुंरूपाणि छन्दाꣳस्युपं दधाति
विषुंरूपा वै पशवंः पशवंः ॥३६॥
छन्दाꣳसि विषुंरूपानेव पशूनवं रु-

शवंः । पशून् । एव । अवेतिं । रुन्धे । [7]अनुष्टुभ इत्यंनु–स्तुभंः । उपेतिं । दधाति । प्राणा इतिं प्र–अनाः । वै । अनुष्टुबित्यंनु–स्तुप् । प्राणानामितिं प्र–अनानांम् । उत्सृंष्ट्या इत्युत्–सृष्ट्यै । [8]बृहतीः । उष्णिहाः । पङ्क्तीः । अक्षरंपङ्क्तीरित्यक्षरं–पङ्क्तीः । इतिं । विषुंरूपाणीति विषुं–रूपाणि । छन्दाꣳसि । उपेतिं। दधाति। विषुंरूपा इति विषुं–रूपाः। वै। पशवंः। पशवंः ॥३६॥ छन्दाꣳसि । विषुंरूपानिति विषुं–रूपान् । एव । पशून् । अवेतिं । रुन्धे । विषुंरू-

[7]अनुष्टुभ इति ॥ 'त्वां चित्रश्रवस्तम'* इत्याद्यास्तिस्रः उत्तरतः । प्राणानामुत्सृष्ट्या इति । अनिरोधायेत्यर्थः ॥

[8]बृहतीरित्यादि ॥ उक्तमुपधानं सम्प[समानपा]दानां गायत्रीत्रिष्टुप्जगत्यनुष्टुभाम् । बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरित्येतानि विषुरूपाणि विषमरूपतया नानारूपाणि उपदध्यात् । तत्र मध्ये

*सं. ४-४-४.

न्धे विषुरूपमस्य गृहे दृश्यते यस्यै-
ता उपधीयन्ते य उचैना एवं वेदाति-
च्छन्दसमुप दधात्यतिच्छन्दा वै स-
पमिति विषु-रूपम् । अस्य । गृहे । दृश्यते ।
यस्य । एताः । उपधीयन्त इत्युप-धीयन्ते । यः ।
उ । च । एनाः । एवम् । वेद । [9]अतिच्छन्दसमित्य-

बृहतीस्तिस्र उपदधाति 'एना वः'* इत्याद्याः बृहती द्वादशाक्षरा त्रयश्चाष्टाक्षरा इति विषमपादत्वम् । तत्र प्रथमातृतीये पथ्याबृहत्यौ । द्वितीया पुरस्ताद्बृहती चतुरक्षराभिक्रान्ता । अथ पुरस्तादुष्णिहस्तिस्र उपदधाति 'अग्ने वाजस्य'* इत्याद्याः । द्वाभ्यामष्टाक्षराभ्यां द्वादशाक्षरेण चैकेनेति विषुरूपत्वम् । (निरोपि परोष्णिहः) । अथ पङ्क्तीस्तिस्रो दक्षिणत उपदधाति 'आ ते अग्ने'* इत्याद्याः । सर्वाश्चैताः पङ्क्तयः यथोक्तं 'पथ्या पञ्चभिरष्टाक्षरैः' इति । अत्र पादसङ्ख्याविषमत्वात् विषुरूपत्वम् । अथाष्टाक्षरपङ्क्तीश्चतस्रः पश्चादुपदधाति 'अग्ने तमद्य'* इत्याद्याः । ननु यत्र चत्वारः पञ्चकाः द्वौ भूयो वा तामक्षरपङ्क्तिमाहुः यत्र तु पञ्चपञ्चकाः यत्र वा पञ्चपञ्चकाः चतुष्कषट्कौ यत्र वा चत्वारः पञ्चकाः षट्कश्चैकः तां त्रिविधां पदपङ्क्तिमाहुः । अत्र चैतासां पदपङ्क्तित्वं पश्यामः । अत्र ब्रूमः—श्रुतिप्रामाण्यादक्षरपङ्क्तेः लक्षणान्तरं मृग्यम् । स्पष्टं विषुरूपत्वमासाम् । विषुरूपमस्येति । विदुषः फलम् । नानारूपं हिरण्यरजतादि अस्य गृहे सर्वदा दृश्यते य एवं विद्वानेता उपदधातीति ॥

[9]अतिच्छन्दसमित्यादि ॥ उत्तरतो मध्ये वा अतिच्छन्दसमुपदधाति

*सं. ४-४-४.

र्वाणि छन्दाꣳसि सर्वैभिरेवैनं छ-
न्दोभिश्चिनुते वर्ष्म वा एषा छन्द-
सां यदतिच्छन्दा यदतिच्छन्दसमुप-
दधाति वर्ष्मैवैनꣳसमानानां करो-
ति द्विपदा उपं दधाति द्विपाद्यज-

तिं–छन्दसम् । उपेति । दधाति । अतिच्छन्दा इ-
त्यति–छन्दाः । वै । सर्वाणि । छन्दाꣳसि । सर्वै-
भिः । एव । एनम् । छन्दोभिरिति छन्दः–भिः ।
चिनुते । [10]वर्ष्म । वै । एषा । छन्दसाम् । यत् ।
अतिच्छन्दा इत्यति–छन्दाः । यत् । अतिच्छन्द-
समित्यति–छन्दसम् । उपदधातीत्युप–दधाति ।
वर्ष्म । एव । एनम् । समानानाम् । क-
रोति । [11]द्विपदा इति द्वि–पदाः । उपेति । दधाति ।

‘अग्निं होतारं’* इत्याष्टिं सप्तपदामेकाम् । गायत्र्यादिजगत्यन्ता-न्यतिछन्दांसि । सर्वाणीति । जगत्यन्तानां सर्वासां तत्रान्तर्भावात् । सर्वेभिरिति । ‘बहुलं छन्दसि’ इत्यैसभावः ॥

[10]वर्ष्मेति ॥ उच्छ्रायवत्त्वात्ताच्छब्द्यम् । समानानां मध्ये यज-मानमुच्छ्रितं करोति ॥

[11]द्विपदा इति ॥ मध्ये उत्तरतो वा तिस्रः ‘अग्ने त्वं नः’* इत्याद्याः । सर्वाश्चैता विराजः विराड्गतगायत्राभ्यामिति, द्वौ

*सं. ४-४-४.

मानः प्रतिष्ठित्यै ॥ ३७ ॥

सर्वाभ्यो वै देवताभ्योऽग्निश्चीयते य-
त्सयुजो नोपदध्याद्देवता अस्याग्निं

द्विपादिति द्वि-पात् । यजमानः । प्रतिष्ठित्या इति
प्रति-स्थित्यै ॥ ३७ ॥

तेज एव पशवः पशवो यजमान एकं च ॥८॥

[1]सर्वाभ्यः । वै । देवताभ्यः । अग्निः । चीयते ।
यत् । सयुज इति स-युजः । न । उपदध्यादित्यु-
प-दध्यात् । देवताः । अस्य । अग्निम् । वृञ्जीरन् ।
यत् । सयुज इति स-युजः । उपदधातीत्युप-द-

पादौ आसामिति बहुव्रीहौ 'सङ्ख्यासुपूर्वस्य' इति लोपे समासान्ते 'टाबृचि' इति टाप्, 'पादः पत्' इति पद्भावः, 'द्वित्रिभ्यां पद्दन्' इत्यन्तोदात्तत्वम् । द्विपदानामासामुपधानं द्विपदो यजमानस्य प्रतिष्ठित्यै भवतीति । 'उदेतौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

इति पञ्चमे तृतीये अष्टमोनुवाकः.

[1]सर्वाभ्यो वै देवताभ्य इत्यादि सयुजां विधिः ॥ सह यो यजति यजमानमग्निनेति सयुजः 'इन्द्राग्निभ्यां'* इत्यष्टौ । 'सहस्य सः संज्ञायाम्' इति सभावः । सर्वदेवतार्थमग्निश्चीयते, सर्वासामप्यङ्गप्रधानदेवतानां तत्रेज्यमानत्वात् । तत्र यदि सयुजो नो-

*सं. ४-४-५.

वृञ्जीरन् यथ्सयुजं उपदधात्यात्मनै-
वैनꣳ सयुजं चिनुते नाग्निना व्यृ-
ध्यतेऽथो यथा पुरुषस्स्नावभिस्संतत
एवमेवैताभिरग्निस्संततोऽग्निना वै दे-
धाति । आत्मना । एव । एनम् । सयुजमिति
स-युजम् । चिनुते । न । अग्निना । वीति । ऋ-
ध्यते । अथो इति । यथा । पुरुषः । स्नावभिरिति
स्नाव-भिः । संतत इति सं-ततः । एवम् । एव ।
एताभिः । अग्निः । संतत इति सं-ततः । [2]अग्नि-

पदध्यात् अस्याग्निं देवता युञ्जीरन् वर्जयेरन् । तस्मात्सयुजा-मुपधानेन एनं सयुजं सहयुक्तं चिनुते । ततोऽयं नाग्निना व्यृध्यते अग्निसम्पाद्यया सिद्ध्या विहीनो न भवति । अथो अपि च यथा पुरुषः स्नावभिः सिराभिः सन्ततः व्याप्तः एवमेवैताभिः स-युग्भिरग्निभिः सन्ततः चित्यांचित्यां व्याप्तः । तस्मात्सर्वासु चितिषु सयुजउपदध्यादिति विधिः । तत्राद्यन्तयोरेकैकां उपदधाति 'इन्द्रा-ग्निभ्यां त्वा'* 'रय्यै पोषाय सजातानां मध्यमस्थेयाय मया त्वा'* इति । द्वितीयतृतीयचतुर्थेषु द्वेद्वे 'आघाराभ्यां त्वा'* 'तेजसा त्वा'* इति, द्वितीयस्यां 'वर्चसा त्वा'* 'उक्थेभिस्त्वा'* इति, तृतीयस्यां 'स्तोमेभिस्त्वा'* 'छन्दोभिस्त्वा'* इति, चतुर्थ्यां 'सयुजा युजा युनज्मि'* इति ॥

[2]यथा देवाः गताः गच्छन्ति च प्रकाशं यथा देवा दिवि

*सं. ४-४-५.

वास्सुवर्गं लोकमायन्ता अमूः कृ-
त्तिका अभवन् यस्यैता उपधीय-
न्ते सुवर्गमेव ॥ ३८ ॥ लोकमेति
गच्छंति प्रकाशं चित्रमेव भवति म-
ण्डलेष्टका उप दधातीमे वै लोका
मंण्डलेष्टका इमे खलु वै लोका दे-

नां । वै । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन्न् । ताः । अमूः । कृत्तिकाः । अभवन्न् । यस्य । एताः । उपधीयन्त इत्युप—धीयन्ते । सुवर्गमिति सुवः—गम् । एव ॥ ३८ ॥ लोकम् । एति । गच्छंति । प्रकाशमिति प्र—काशम् । चित्रम् । एव । भवति । [3]मण्डलेष्टका इति मण्डल—इष्टकाः । उपेति । दधाति । इमे । वै । लोकाः । मण्डलेष्टका इति मण्डल—इष्टकाः । इमे । खलु । वै । लोकाः । दे-

प्रकाशन्ते चित्रं चास्य चरितं चायनीयं भवति सर्वदा यथा देवानामिति । चित्रं सर्वदा भवति कृत्तिकावत् सन्निविष्टत्वात्* कृत्तिकाः । देवनद्य एता इति केचित् । एताश्च दक्षिणेंऽसे गुलमकृता उपधेयाः ॥

[3]मण्डलेष्टका इत्यादि ॥ प्रथममध्यमोत्तमासु चितिषु ' पृथिव्युदपुरं '† इत्याद्याः क्रमेण ति उपदधाति । इमे वा इति । स्थान-

*सन्निकृष्टत्वात्.

† सं. ४-४-५.

वपुरा देवपुरा एव प्र विशति नार्ति-
माच्छत्यग्निं चिक्यानो विश्वज्योतिष
उप दधातीमानेवैताभिर्लोकाञ्ज्यो-
तिष्मतः कुरुतेऽथो प्राणानेवैता य-

वपुरा इति देव-पुराः । देवपुरा इति देव-पुराः । एव । प्रेति । विशति । न । आर्तिम् । एति । ऋच्छति । अग्निम् । चिक्यानः । 'विश्वज्योतिष इति विश्व-ज्योतिषः । उपेति । दधाति । इमान् । एव । एताभिः । लोकान् । ज्योतिष्मतः । कुरुते । अथो इति । प्राणानिति प्र-अनान् । एव । एताः । य-

---

सामान्यात् । इमे खल्विति । देवानां पुरा वासस्थानानि । 'ऋक्पूरब्धूः' इत्याकारस्समासान्तः । तस्माद्देवानामेव पुरः प्रविशति न चार्तिं कांचिदपि गच्छति; कः मण्डलेष्टकावन्तं अग्निं चिक्यानः चिन्वानः । छान्दसो लिटः कानजादेशः, 'विभाषाश्चेः' इति कुत्वम् ॥

'विश्वज्योतिष इति ॥ तास्वेव चितिषु 'बृहस्पतिस्त्वा सादयतु'* इत्याद्याः तिस्रः क्रमेणोपदधाति । विश्वज्योतिः याभिः प्राप्यते ता विश्वज्योतिषः । या मण्डलेष्टकाभिः प्रविशति इमान् लोकान् आभिर्विश्वज्योतिर्भिः ज्योतिष्मतः प्रकाशवतः कुरुते । अथो अपि च एता विश्वज्योतिषः यजमानस्य प्राणान्दाधर्ति धारयति । छान्दसः शपः श्लुः । 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् ॥

---

*सं. ४-४-६.

जंमानस्य दाध्रत्येता वै देवतांस्सु-
वर्ग्यांस्ता एवान्वारभ्यं सुवर्गं लो-
कमेति ॥ ३९ ॥
वृष्टिसनीरुपं दधाति वृष्टिमेवावं रु-
न्धे यदेंकधोपंदध्यादेकंमृतुं वंर्षेद-

जंमानस्य । दाध्रति । [5]एताः । वै । देवतांः । सुव-
र्ग्यां इति सुवः-र्ग्यांः । ताः । एव । अन्वारभ्येत्य-
त्यंनु-आरभ्यं । सुवर्गमितिं सुवः-गम् । लोकम् ।
एति ॥ ३९ ॥

सुवर्गमेव ता एव चत्वारि च ॥ ९ ॥

[1]वृष्टिसनीरितिं वृष्टि-सनीः । उपेतिं । दधा-
ति । वृष्टिम् । एव । अवेतिं । रुन्धे । यत् । एक-

[5]एता वा इति ॥ बृहस्पतिविश्वकर्मप्रजापतयः स्वर्गप्राप्तिनिमित्त-
भूताः । 'गोद्व्यचचः' इति यत् । ता एवान्वारभ्य अवलम्ब्य
स्वर्गं गच्छति विश्वज्योतिषामुपधाता ॥

इति पञ्चमे तृतीये नवमोनुवाकः.

[1]वृष्टिसनीरित्यादि ॥ व्याख्यातम्* । इह तु 'पुरोवातसनिः'†
इत्याद्या वेदितव्याः । एताश्च पञ्च एकैका दिक्षु एकां मध्ये । एतद्वा

*सं. ५-३-१. †सं. ४-४-६.

नुपरिहार२ँ सादयति तस्मात्सर्वा-
नृतून् वर्षति पुरोवातसनिरसीत्या-
हैतद्वै वृष्ट्यै रूप२ँ रूपेणैव वृष्टिमव
रुन्धे संयानीभिर्वै देवा इमान्लोका-
न्थ्समयुस्तथ्संयानीना२ँ संयानित्वं

धेत्यैक–धा । उपदध्यादित्युप–दध्यात् । एकम् । ऋतुम् । वर्षेत् । अनुपरिहारमित्यनु–परिहारम्। सादयति । तस्मात् । सर्वान् । ऋतून् । वर्षति । पुरोवातसनिरिति पुरोवात–सनिः । असि । इति । आह । एतत् । वै । वृष्ट्यै । रूपम् । रूपेण । एव । वृष्टिम् । अवेति । रुन्धे । [2]संयानीभिरिति सं–यानीभिः । वै । देवाः । इमान् । लोकान् । समिति । अयुः । तत् । संयानीनामिति सं–यानीनाम् । संयानित्वमिति संयानि–त्वम् । यत् । सं-यानीरिति सं–यानीः । उपदधातीत्युप–दधाति ।

इति । वृष्टेरेतद्रूपं रूपणं पुरोवातकालिकं लिङ्गं रूपं तद्भावे भावात् ॥

[2]संयानीभिर्वा इति ॥ 'अग्नेर्यान्यसि '* इत्याद्याः पञ्चस्वपि चितीषूपदधाति । लोकानां संयानहेतुत्वात् संयान्यः । तत्र प्रथम-

*सं. ४-४-४.

यथ्संयानीरुपदधाति यथाऽप्सु ना-
वा संयात्येवम् ॥ ४० ॥ एवैताभि-
र्यजमान इमान्लोकान्थ्सं याति प्लु-
वो वा एषोऽग्नेर्यथ्संयानीर्यथ्संया-
नीरुपदधाति प्लुवमेवैतमग्नय उप
दधात्युत यस्यैतासूपहितास्वापोऽग्निꣳ

यथा । अप्स्वित्यप्-सु । नावा । संयातीति सं-याति । एवम् ॥ ४० ॥ एव । एताभिः । यजमानः । इमान् । लोकान् । समिति । याति । [3]प्लुवः । वै । एषः । अग्नेः । यत् । संयानीरिति सं-यानीः । यत् । संयानीरिति सं-यानीः । उपदधातीत्युप-दधाति । प्लुवम् । एव । एतम् । अग्नये । उपेति । दधाति । उत । यस्य । एतासु । उपहितास्वि-

---

मध्यमोत्तमासु चितिषु द्वेद्वे उपदधाति, इतरयोरेकैकाम् । संयानित्वमिति । 'त्वेच' इति ह्रस्वत्वं । यथेति । यथा अप्सु नावा (अनवमनः) संयाति एव मेताभिः संयानीभिः नौस्थानीयाभिरिमान् लोकानुदधिस्थानीयान् सं याति सन्तरति ॥

[3]प्लुवो वा इति ॥ प्लवस्थीनायाः संयान्योग्नेः तस्मादेतासु प्लवस्थानीयासूपहितासु यस्यामग्निमापो हरन्ति अह्वत एवासौ यद्यपि

हरन्त्यहृत एवास्याग्निरादित्येष्टका
उपं दधात्यादित्या वा एतं भूत्यै प्र-
तिं नुदन्ते योऽलं भूत्यै सन्भूतिं न
प्राप्नोत्यादित्याः ॥ ४१ ॥ एवैनं भू-
तिं गमयन्त्यसौ वा एतस्यादित्यो
रुचमा दंत्ते योऽग्निं चित्वा न रोचं-

त्युपं–हितासु । आपंः । अग्निम् । हरंन्ति । अहृं-
तः । एव । अस्य । अग्निः । [4]आदित्येष्टका इत्यां-
दित्य–इष्टकाः । उपेति । दधाति । आदित्याः ।
वै । एतम् । भूत्यै । प्रतीति । नुदन्ते । यः । अ-
लम् । भूत्यै । सन्न् । भूतिम् । न । प्राप्नोतीति
प्र–आप्नोति । आदित्याः ॥ ४१ ॥ एव । एनम् ।
भूतिम् । गमयन्ति । [5]असौ । वै । एतस्य । आ-
दित्यः । रुचम् । एति । दत्ते । यः । अग्निम् । चि-

---

हरन्ति अहृत एवेति प्रतिपादयितुमुत शब्दः । न हि प्लवेन प्लवमानोद्भिः हृतो भवति ॥

[4]आदित्येष्टका इति ॥ 'सलिलाय त्वा' इत्याद्या अष्टौ द्वेद्वे दिक्षु मध्ये । आदित्या वा इत्यादि । गतम् ॥

[5]असौ वा इति ॥ चित्वाप्यग्निं यो दीप्तिमान्न भवति स आदित्येष्टकोपधानेन दीप्तिमान् भवति ॥

ते यदादित्येष्टका उपदधात्यसावेवा-
स्मिन्नादित्यो रुचं दधाति यथाऽसौ
देवानाꣳ रोचत एवमेवैष मनुष्या-
णाꣳ रोचते घृतेष्टका उपदधात्ये-
तद्वा अग्नेः प्रियं धाम यद्घृतं प्रिये-
णैवैनं धाम्ना समर्धयति ॥ ४२ ॥

त्वा । न । रोचते । यत् । आदित्येष्टका इत्यादित्य–इष्टकाः । उपदधातीत्युप–दधाति । असौ । एव । अस्मिन् । आदित्यः । रुचम् । दधाति । यथा । असौ । देवानाम् । रोचते । एवम् । एव । एषः । मनुष्याणाम् । रोचते । [6]घृतेष्टका इति घृत–इष्टकाः । उपेति । दधाति । एतत् । वै । अग्नेः । प्रियम् । धाम । यत् । घृतम् । प्रियेण । एव । एनम् । धाम्ना । समिति । अर्धयति ॥ ४२॥ अथो इति । तेजसा । [7]अनुपरिहारमित्यनु–परिहा-

---

[6]घृतेष्टका इति ॥ ऋचेत्याद्याः पञ्च एकैका दिक्षु एकाम्मध्ये । एतद्वा इत्यादि । प्रियं धाम स्थानं गुणभूतमस्य घृतेष्टका, प्रधानस्य तु घृतम् । अथो अपि च तेजसा समर्धयति ॥

[7]अनु परिहारमिति ॥ अनुक्रमेण परितो हृत्वा सादनेन अप-

अथो तेजसाऽनुपरिहारꣳ सादयत्यपरिवर्गमेवास्मिन्तेजो दधाति प्रजापतिरग्निमचिनुत स यशसा व्यार्ध्यत स एता यशोदा अपश्यत्ता उपाधत्त ताभिर्वै स यश आत्मन्नधत्त यद्यशोदा उप दधाति यश एव ता-

रम् । सादयति । अपरिवर्गमित्यपरि-वर्गम् । एव । अस्मिन्न् । तेजः । दधाति । [8]प्रजापतिरिति प्रजा-पतिः । अग्निम् । अचिनुत । सः । यशसा । वीति । आर्ध्यत । सः । एताः । यशोदा इति यशः-दाः । अपश्यत् । ताः । उपेति । अधत्त । ताभिः । वै । सः । यशः । आत्मन्न् । अधत्त । यत् । यशोदा इति यशः-दाः । उपदधातीत्युप-दधाति । यशः । एव । ताभिः । यजमानः । आत्मन्न् । धत्ते ।

---

रिवर्गं न किञ्चिदपि परिहार्य[य] सर्वां रुचिं दीप्तिं अस्मिन् यजमाने दधाति । घृतेश्छान्दसो घमुञ् । घृ क्षरणदीप्त्योः । घरणहेतवो घृतेष्टकाः ॥

[8]प्रजापतिरित्यादि यशोदानां विधिः । ताभिर्वा इति ॥ यशो ददते यजमानाय एताः ॥

भिर्यजमान आत्मन्धत्ते पञ्चोप दधा-
ति पाङ्क्तः पुरुषो यावानेव पुरुषस्त-
स्मिन् यशो दधाति ॥ ४३ ॥
देवासुरास्संयत्ता आसन्कनीयाꣳ-
सो देवा आसन्भूयाꣳसोसुरास्ते

[9]पञ्च । उपेति । दधाति । पाङ्क्तः । पुरुषः । यावान् । एव । पुरुषः । तस्मिन्न् । यशः । दधाति ॥ ४३ ॥

एवं प्राप्नोत्यादित्या अर्धयत्येकान्नपञ्चाशच्च ॥१०॥

[1]देवासुरा इति देव–असुराः । संयत्ता इति सं–यत्ताः । आसन्न् । कनीयाꣳसः । देवाः । आसन्न् । भूयाꣳसः । असुराः । ते । देवाः । एताः ।

---

[9]एताश्च पञ्च एकैका दिक्षु एकाम्मध्ये । पाङ्क्त इति । उत्सादित्वादञ् । यावानिति । यावत्किञ्चित्पुरुषकृत्यं तत् सर्वं यशस्विनो भवति यशोदानामुपधातुः ॥

इति पञ्चमे तृतीये दशमोनुवाकः.

---

[1]देवासुरा इत्यादि ॥ भूयस्कृतां विधिः । कनीयांसः अल्पतराः क्षीणभूयिष्ठा देवा आसन् । असुरास्तु भूयांसः बहुधा समृद्धा आसन् । ते देवा एता 'भूयस्कृदसि' इत्याद्याः भूयस्कृतोपश्यन् उपादधत च एताश्च पञ्च । एकैका दिक्षु एकाम्मध्ये 'भूयस्कृ-

देवा एता इष्टका अपश्यन्ता उपादधत भूयस्कृदसीत्येव भूयाꣳसोऽभवन्वनस्पतिभिरोषधीभिर्वरिवस्कृदसीतीमामजयन्प्राच्यसीति प्राचीं दिशमजयन्नूर्ध्वाऽसीत्यमूमजयन्नन्तरिक्षसदस्यन्तरिक्षे सीदेत्यन्तरिक्षमजयन्ततो देवा अभवन् ॥ ४४ ॥

इष्टकाः । अपश्यन् । ताः । उपेति । अदधत । भूयस्कृदिति भूयः–कृत् । असि । इति । एव । भूयाꣳसः । अभवन् । वनस्पतिभिरिति वनस्पति–भिः । ओषधीभिरित्योषधि–भिः । [2]वरिवस्कृदिति वरिवः–कृत् । असि । इति । इमाम् । अजयन् । प्राची । असि । इति । प्राचीम् । दिशम् । अजयन् । ऊर्ध्वा । असि । इति । अमूम् । अजयन् । अन्तरिक्षसदित्यन्तरिक्ष–सत् । असि । अन्तरिक्षे । सीद । इति । अन्तरिक्षम् । अजयन् । ततः । देवाः ।

---

दसि ' इत्येतामुपधाय वनस्पतिभिरोषधीभिः ज्यायांसोभवन् अक्षीयमाणा अभवन् ॥

[2]वरिवस्कृदसीत्यादि ॥ समृद्धिकथनम् । ततो देवा अभवन् । असुराः परा भूताः । यस्येत्यादि गतम् ॥

परा॒ऽसु॑रा॒ यस्यै॒ता उ॑पधी॒यन्ते॒ भूया॑-
ने॒व भ॑वत्य॒भीमाँल्लो॒काञ्जय॑ति॒ भ-
व॑त्या॒त्मना॒ परा॑ऽस्य॒ भ्रातृ॑व्यो भव-
त्यप्सु॒षद॑सि श्ये॒न॒सद॒सीत्या॑है॒तद्वा
अ॒ग्ने रू॒पꣳ रू॒पेणै॒वाग्निमव॑ रुन्धे पृ-
थि॒व्यास्त्वा॒ द्रवि॑णे साद॒या॒मीत्या॑-

अभ॑वन् ॥४४॥ परेति॑ । असु॑राः । यस्य॑ । ए॒ताः ।
उ॒प॒धी॒यन्त॒ इत्यु॑प-धी॒यन्ते॑ । भूया॑न् । ए॒व । भ॒व॒ति॒ ।
अ॒भीति॑ । इ॒मान् । लो॒कान् । ज॒य॒ति॒ । भव॑ति ।
आ॒त्मना॑ । परेति॑ । अ॒स्य॒ । भ्रातृ॑व्यः । भ॒व॒ति॒ ।
[3]अ॒प्सु॒षदित्य॑प्सु-सत् । अ॒सि॒ । श्ये॒न॒सदिति॑ श्ये-
न-सत् । अ॒सि॒ । इति॑ । आ॒ह॒ । ए॒तत् । वै । अ॒ग्नेः ।
रू॒पम् । रू॒पेण॑ । ए॒व । अ॒ग्निम् । अवेति॑ । रु॒न्धे॒ ।
[4]पृ॒थि॒व्याः । त्वा॒ । द्रवि॑णे । सा॒द॒या॒मि॒ । इति॑ ।

---

[3]अथ अप्सुषदसीत्याद्याः पञ्च एकैका दिक्षु एकां मध्ये । एतद्वा इति । अबादयः । अप्सुषदादयः—अप्सु सीदन्तीति क्विप् । 'तत्पुरुषेकृति बहुळम्' इत्यलुक् ॥

[4]अथ 'पृथिव्यास्त्वा द्रविणे सादयामि' इत्याद्या द्रविणोदाः पञ्च एकैका दिक्षु एकां मध्ये । द्रविणस्य धनस्य धात्र्यः ।

हेमानेवैताभिर्लोकान्द्रविणावतः कु-
रुत आयुष्या उप दधात्यायुरेव॥४५॥
अस्मिन्दधात्यग्ने यत्ते परꣳ हृन्नामे-
त्याहैतद्वा अग्नेः प्रियं धाम प्रियमे-

आह । इमान् । एव । एताभिः । लोकान् । द्रवि-णावत इति द्रविणं–वतः । कुरुते । [5]आयुष्याः । उपेति । दधाति । आयुः । एव ॥४५॥ अस्मिन् । दधाति । अग्ने । यत् । ते । परम् । हृत् । नाम । इति । आह । एतत् । वै । अग्नेः । प्रियम् । धाम । प्रियम् । एव । अस्य । धाम । उपेति । आ-

पूर्वपदस्यासुगागमश्छान्दसः । द्रविणावतः धनवतः । 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ॥

[5]अथ प्राणं मे पाहीत्याद्या आयुष्याः सप्त । एकैका दिक्षु तिस्रो मध्ये । केचिदाहुः—षडायुष्याः 'अग्ने यत्ते' इति, सप्तमं अग्नेर्हृदयं इति । आयुर्मे पाहीत्यायुश्शब्दवता मन्त्रेणोपधेयत्वादायुष्याः । पूर्ववत् छत्रिन्यायेन सर्वा अप्यायुष्याः । यद्वा—आयुषो निमित्ताः । 'गोद्व्यचः' इति यत् । अत्र 'यस्यैता उपधीयन्ते' इति भूयस्कृत्सूपधानं श्रूयते, 'आयुष्या उपदधाति' इति च आयुष्यासु । अप्सुषत्सु द्रविणोदासु नोपधानं श्रूयते । तत्र पञ्चदशाप्येता भूयस्कृत इव लक्ष्यन्ते । एतद्वा इति । अग्निहृदयाख्या सप्तमी । तस्मादस्या उपधानेन अग्नेः प्रियं धामोपाप्नोति ॥

वास्य धामोपाप्नोति तावेहि सꣳ रभावहा इत्याह व्येवैनेन परि धत्ते पाञ्चजन्येष्वप्येध्यग्न इत्याहैष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकस्तस्मादेवमाहर्तव्या उप दधात्येतद्वा

प्नोति । [6]तौ । एति । इहि । समिति । रभावहै । इति । आह । वीति । एव । एनेन । परीति । धत्ते । [7]पाञ्चजन्येष्विति पाञ्च–जन्येषु । अपीति । एधि । अग्ने । इति । आह । एषः । वै । अग्निः । पाञ्चजन्य इति पाञ्च–जन्यः । यः । पञ्चचितीक इति पञ्च–चितीकः । तस्मात् । एवम् । आह । [8]ऋतव्याः । उपेति । दधाति । एतत् । वै । ऋतूनाम् । प्रियम् । धाम । यत् । ऋतव्याः । ऋतू-

[6]व्येवैनेनेति ॥ एनेनाग्निना सह विपरिधत्ते यजमानव्यापारनियमेपि सभा [सहभा] वा भाव(?) इति द्वयोरेकी भूतत्वात् ॥

[7]एषवा इति । पञ्च चितयो निवृत्ता यस्य सोग्निः पाञ्चजन्यः पञ्चसु योनिभूतासु चितिषु भवः पाञ्चजन्यः । छान्दसो ञ्यः । तस्मादेवमिति । कः ? पञ्चस्वपि जनेषु एधि भव आह अग्न इति मन्त्रः ॥

[8]ऋतव्या इति । 'यावा अया वा' इत्याद्यास्सप्तर्तव्याः ।

ऋतूनां प्रियं धाम यद्दृतव्या ऋतू-
नामेव प्रियं धामाव रुन्धे सुमेक
इत्याह संवथ्सरो वै सुमेकस्संवथ्स-
रस्यैव प्रियं धामोपाप्नोति ॥ ४६ ॥
प्रजापतेरक्ष्यश्वयत्तत्पराऽपतत्तदश्वो-

नाम । एव । प्रियम् । धाम । अवेति । रुन्धे ।
[9]सुमेक इति सु–मेकः । इति । आह । संवत्सर
इति सं–वत्सरः । वै । सुमेक इति सु–मेकः ।
संवत्सरस्येति सं–वत्सरस्य । एव । प्रियम् । धा-
म । उपेति । आप्नोति ॥ ४६ ॥

अभवन्नायुरेवर्तव्या उप षड्विंशतिश्च ॥ ११ ॥

[1]प्रजापतेरिति प्रजा–पतेः । अक्षि । अश्वयत् ।

---

एकैका दिक्षु तिस्रो मध्ये । ऋतुप्राप्तिहेतुभूता ऋतव्याः । पूर्ववद्यत् ॥

[9]सुमेक इति ॥ शोभनमेहनः प्रजानामुत्पादयितॄणां मुख्यः संवत्सरः । ककारश्छान्दसः । ‘ आद्युदात्तं द्व्यच्छन्दसि ’ इत्युत्तरपदाद्युदात्तत्वम् ॥

इति पञ्चमे तृतीये एकादशोनुवाकः.

---

[1]अधुना अश्वमेधमधिकृत्योच्यते—प्रजापतेरित्यादि ॥ वैश्वदेवं काण्डम् । प्रजापतेरक्षि अश्वयत् शूनमभवत् स्थानात् परेत्या-

भवद्यदश्वंयत्तदश्वंस्याश्वत्वं तद्देवा अं-
श्वमेधेनैव प्रत्यंदधुरेष वै प्रजापंतिं
सर्वं करोति योऽश्वमेधेन यजंते सर्वं
एव भंवति सर्वंस्य वा एषा प्राय-

तत् । परेति । अपतत् । तत् । अश्वंः । अभवत् ।
यत् । अश्वंयत् । तत् । अश्वंस्य । अश्वत्वमित्यं-
श्व–त्वम् । तत् । देवाः । अश्वमेधेनेत्यंश्व–मेधेनं ।
एव । प्रतीति । अदधुः । एषः । वै । प्रजापंति-
मिति प्रजा–पतिम् । सर्वम् । करोति । यः ।
अश्वमेधेनेत्यंश्व–मेधेनं । यजंते । सर्वः । एव ।
भवति । [2]सर्वंस्य । वै । एषा । प्रायंश्चित्तिः । सर्वं-

---

पतत् । तदश्वोभवत् । तस्मादश्वत्वं अश्वस्य । अश्वयदित्यादि व्याख्यातमेव । एकदेशलोपेन नामत्वेन परिग्रहः । यद्वा—श्वयनादश्वः । छान्दसो डप्रत्ययोऽडागमश्च । तत्प्रजापतेरक्षि देवा अश्वमेधेनैवानुष्ठितेन प्रत्यदधुः स्वस्थाने अविकलं पुनस्थापितवन्तः । तस्मादेष प्रजापतिं सर्वमविकलं करोति योश्वमेधेन यजते । स्वयमपि सर्वोऽविकलो भवति ॥

[2]सर्वस्य वा इति ॥ सर्वस्य प्रतिषिद्धनिमित्तकरणस्य अधर्मस्य स्तेयादेर्विहिताकरणनिमित्तस्य च सन्ध्यालोपादेः प्रायश्चित्तिः निर्यातनहेतुः अश्वमेधः । प्रायणं प्रायो धर्मलोपः । तन्निवृत्तिः चित्तिः प्रायश्चित्तिः । प्रायश्शब्दस्य अव्ययत्वादव्ययपूर्वपदप्रकृतिस्वरत्वम् ।

श्चित्तिस्सर्वस्य भेषजꣳ सर्वं वा एतेनं पाप्मानं देवा अंतरन्नपि वा एतेनं ब्रह्महत्यामंतरन्थ्सर्वं पाप्मानंम् ॥ ४७ ॥ तरति तरंति ब्रह्महत्यां योऽश्वमेधेन यजंते य उं चैनमेवं वेदोत्तरं वै तत्प्रजापंतेरक्ष्यंश्वयत्तस्मादश्वंस्योत्तरतोऽवंद्यन्ति दक्षि-

स्य । भेषजम् । सर्वम् । वै । एतेनं । पाप्मानं । देवाः । अतरन् । अपीति । वै । एतेनं । ब्रह्महत्यामिति ब्रह्म-हत्याम् । अतरन् । [3]सर्वम् । पाप्मानंम् ॥४७॥ तरति । तरंति । ब्रह्महत्यामिति ब्रह्म-हत्याम् । यः । अश्वमेधेनेत्यंश्व-मेधेनं । यजंते । यः । उ । च । एनम् । एवम् । वेदं । [4]उत्तरमित्युत्-तरम् । वै । तत् । प्रजापंतेरिति प्रजा-पतेः । अक्षि । अश्वयत् । तस्मात् । अश्वंस्य । उ-

किञ्च सर्वस्य रोगस्य राजयक्ष्मादेरपि भेषजं औषधं शमनहेतुः । सर्वं वा इत्यादि । गतम् । पुनर्ब्रह्महत्याग्रहणं तस्मादुत्तरत्वख्यापनार्थम् । 'हनस्त च' इति क्विप् ॥

[3]सर्वं पाप्मानमित्यादि ॥ यष्टुर्वेदितुश्च फलम् ॥

[4]उत्तरं वा इति ॥ उत्तरस्य शूनस्याक्ष्णोश्वमेधेन प्रतिहतत्वात्

णतोऽन्येषां पशूनां वैतसः कटो भवत्यप्सुयोनिर्वा अश्वोऽप्सुजो वैतसस्स्व एवैनं योनौ प्रतिष्ठापयति चतुष्टोमस्स्तोमो भवति सरड्ढ वा अश्वस्य सक्थ्यावृहत्तद्देवाश्वतुष्टोमे-

त्तरत इत्युत्–तरतः । अवेति । द्यन्ति । दक्षिणतः । अन्येषाम् । पशूनाम् । [5]वैतसः । कटः । भवति । अप्सुयोनिरित्यप्सु–योनिः । वै । अश्वः । अप्सुज इत्यप्सु–जः । वैतसः । स्वे । एव । एनम् । योनौ । प्रतीति । स्थापयति । [6]चतुष्टोम इति चतुः–स्तोमः । स्तोमः । भवति । सरट् । ह । वै । अश्वस्य ।

---

प्रजापतेरुत्तरो भागः अश्वमेधसम्बद्धः प्रशस्तः । तथैव प्राजापत्यस्याश्वमेधस्य । तस्मादश्वस्योत्तरतोऽवद्यन्ति । कस्मादेवमुच्यते इति चेत्—दक्षिणतोन्येषां पशूनां अवद्यन्तीत्येव । दक्षिणोत्तराभ्यामतसुच् ॥

[5]वैतस इति ॥ वेतसो वञ्जुळः । 'पलाशादिभ्यो वा' इति अनुदात्तलक्षणस्य अञो निवृत्तिः । 'अपो योनियन्मतुषु' इति सप्तम्या अलुक् । अप्सुज इति । 'सप्तम्यां जनेर्डः' 'तत्पुरुषे कृति बहुळम्' इत्यलुक् । स्व एवेति । उभयोरपि अप्सुयोनित्वात् स्वस्मिन् योनौ कारणे अप्सु अश्वं प्रतिष्ठापयति । वैतसः कटः ॥

[6]चतुष्टोम इति ॥ चतुष्टोम इति चतुरुत्तरस्य चतुष्टोमत्वम् ।

नैव प्रत्यदधुर्यच्चतुष्टोमस्स्तोमो भ-
वत्यश्वस्य सर्वत्वाय ॥ ४८ ॥

सक्थि । एति । अवृहत् । तत् । देवाः । चतुष्टोमेनेति च-
तुः-स्तोमेन । एव । प्रतीति । अदधुः । यत् । च-
तुष्टोम इति चतुः-स्तोमः । स्तोमः । भवति ।
अश्वस्य । सर्वत्वायेति सर्व-त्वाय ॥ ४८ ॥

सर्वं पाप्मानमवृहद्द्वादश च ॥ १२ ॥

उत्सन्न यज्ञ इन्द्राग्नीदेवा वा अक्ष्णयास्तोमीयां-
अग्नेर्भागोस्यग्ने जातान्रश्मिरिति नाकसद्भिश्छन्दा-
ꣳसि सर्वाभ्यो वृष्टिसनीर्देवासुराः कनीयाꣳसः
प्रजापतेरक्षि द्वादश ॥ १२ ॥

उत्सन्नयज्ञो देवा वै यस्य मुख्यवतीर्नाकसद्भि-
रेवैताभिरष्टाचत्वारिꣳशत् ॥ ४८ ॥

॥ पञ्चमकाण्डे तृतीयः प्रपाठकस्समाप्तः ॥

---

सरडिति । कृकलास इत्येके । कलविङ्क इत्यन्ये । सोश्वस्योत्तरं सक्थि अवृहत् आच्छिद्य गृहीतवान् । वृहू उद्यमने । तत्सक्थि देवाश्चतुष्टोमेन प्रत्यदधुः पूर्ववत्स्थापितवन्तः । तस्माच्चतुष्टोमः स्तोमोश्वस्य सर्वत्वाय अविकलत्वाय भवति ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
पञ्चमे काण्डे तृतीये प्रपाठके द्वादशोनुवाकः.

समाप्तः प्रपाठकः.

देवासुरास्संयत्ता आसन्ते न व्यं-
जयन्त स एता इन्द्रस्तनूरपश्यत्ता
उपाधत्त ताभिर्वै स तनुवमिन्द्रियं
वीर्यमात्मन्नधत्त ततो देवा अभव-
न्पराऽसुरा यदिन्द्रतनूरुपदधाति त-
नुवमेव ताभिरिन्द्रियं वीर्यं यज-

[1]देवासुरा इति देव-असुराः । संयत्ता इति सं-यत्ताः । आसन्न् । ते । न । वीति । अजयन्त । सः । एताः । इन्द्रः । तनूः । अपश्यत् । ताः । उ-पेति । अधत्त । ताभिः । वै । सः । तनुवम् । इन्द्रि-यम् । वीर्यम् । आत्मन्न् । अधत्त । ततः । देवाः । अभवन्न् । परेति । असुराः । यत् । इन्द्रतनूरितीन्द्र-तनूः । उपदधातीत्युप-दधाति । तनुवम् । एव । ताभिः । इन्द्रियम् । वीर्यम् । यजमानः । आ-

[1]अथाग्निकाण्डमेवाग्नेयं—देवासुरा इत्यादि ॥ इन्द्रतनूनां विधिः । ते न व्यजयन्त पृथक्पृथक् नाजयन् देवाश्च असुरान् असुराश्च देवान् । स एता इति । 'अग्निना विश्वाषाट्' इत्याद्या द्वाविंशतिः आत्मनो विग्रहविशेषात्मिका इष्टका अपश्यत् । ता उपाधत्त पञ्च दिक्षु द्वे मध्ये । ततश्च जयसाधनीं तनूं जयसमर्थं चक्षुरादीन्द्रियं वीर्यं पराक्रमं चात्मन्यधत्त । ततोदेवा इत्या-

मान आत्मन्धत्तेऽथो सेन्द्रमेवाग्निꣳ सतंनुं चिनुते भवत्यात्मना परांऽस्य भ्रातृंव्यः ॥ १ ॥ भवति य॒ज्ञो देवेभ्योऽपाक्रामत्तमंवरुधं नाशंक्रुवन्त एता यंज्ञतनूरंपश्यन्ता उपांदधत ताभिर्वै ते यज्ञमवांरुन्धत यद्यंज्ञतनूरुंपदधांति यज्ञमेव ताभि-

त्मन्न् । धत्ते । अथो इति । सेन्द्रमिति स–इन्द्रम् । एव । अग्निम् । सतंनुमिति स–तनुम् । चिनुते । भवंति । आत्मनां । परेति । अस्य । भ्रातृंव्यः ॥ १ ॥ भवति । [2]यज्ञः । देवेभ्यः । अपेति । अक्रामत् । तम् । अवरुधामित्यंव–रुधंम् । न । अशक्नुवन्न् । ते । एताः । यज्ञतनूरिति यज्ञ–तनूः । अपश्यन्न् । ताः । उपेति । अदधत । ताभिः । वै । ते । यज्ञम् । अवेति । अरुन्धत । यत् । यज्ञतनूरिति यज्ञ–तनूः । उपदधातीत्युप–दधांति । यज्ञम् । एव । ताभिः ।

---

दि । गतम् । अथो अपि च सेन्द्रं तनुमन्तं चाग्निं चिनुते, इन्द्रतनूभिः सहितत्वात् ॥

[2]यज्ञ इत्यादि ॥ यज्ञतनूनां विधिः । अवरुधं अवरोद्धुम् । 'शकि णमुल्कमुलौ' इति णमुल् । यज्ञतनूरिति । 'प्रजापति-

र्यजमानोऽवरुन्धे त्रयस्त्रिꣳशतमुप
दधाति त्रयस्त्रिꣳशद्वै देवता देवता
एवाव रुन्धेऽथो सात्मानमेवाग्निꣳ
सतनुं चिनुते सात्माऽमुष्मिँल्लोके
॥ २ ॥ भवति य एवं वेद ज्योति-
ष्मतीरुप दधाति ज्योतिरेवास्मिन्द-

यजमानः । अवेति । रुन्धे । [3]त्रयस्त्रिꣳशतमिति त्रयः-त्रिꣳशतम् । उपेति । दधाति । त्रयस्त्रिꣳशदिति त्रयः-त्रिꣳशत् । वै । देवताः । देवताः । एव । अवेति । रुन्धे । अथो इति । सात्मानमिति स-आत्मानम् । एव । अग्निम् । सतनुमिति स-तनुम् । चिनुते । सात्मेति स-आत्मा । अमुष्मिन् । लोके ॥ २ ॥ भवति । यः । एवम् । वेद । [4]ज्योतिष्मतीः । उपेति । दधाति । ज्योतिः । एव ।

---

मनसान्धोच्छेत'* इत्याद्याः त्रयस्त्रिंशतम् । संकल्पादारभ्य यज्ञस्य तनूः अष्टावष्टौ दिक्षु एकाम्मध्ये । ताभिरित्यादि । गतम् ॥

[3]त्रयस्त्रिंशमिति ॥ 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । सात्मानमिति । आत्मना देवतया सहितं विशिष्टेन मरणं (?) सहितं च अग्निं चिनुते । सात्मेत्यादि । विदुषः फलम् । सात्मा अविकलफलः ॥

[4]ज्योतिष्मतीरिति ॥ 'ज्योतिष्मतीं त्वा'† इत्याद्या द्वादश, तिस्र-

---

*सं. ४-४-९. †सं. १-४-३४.

धात्येताभिर्वा अग्निश्चितो ज्वलति ताभिरेवैनꣳ समिन्ध उभयोरस्मै लोकयोर्ज्योतिर्भवति नक्षत्रेष्टका उप दधात्येतानि वै दिवो ज्योतीꣳषि तान्येवाव रुन्धे सुकृतां वा एतानि

अस्मिन्न् । दधाति । एताभिः । वै । अग्निः । चितः । ज्वलति । ताभिः । एव । एनम् । समिति । इन्धे । उभयोः । अस्मै । लोकयोः । ज्योतिः । भवति । [5]नक्षत्रेष्टका इति नक्षत्र—इष्टकाः । उपेति । दधाति । एतानि । वै । दिवः । ज्योतीꣳषि । तानि । एव । अवेति । रुन्धे । सुकृतामिति सु—कृताम् । वै । एतानि । ज्योतीꣳषि । यत् । नक्ष-

स्तिस्रो दिक्षु न मध्ये ज्योतिश्शब्दवन्मन्त्रवत्यः । 'तद्धानासाम्' इति यदपवादश्छान्दसो मतुप् । एताभिश्चितोग्निर्ज्वलतीव भवति । तस्मात्ताभिः ज्योतिष्मतीभिरग्निं समिन्धे सम्यग्दीपयति । ततश्च अस्मा इति अग्नये उभयोर्लोकयोः ज्योतिष्मतीं भवति । अस्मा इत्यन्वादेशोनुदात्तः ॥

[5]नक्षत्रेष्टका इति । 'कृत्तिका नक्षत्रं'* इत्याद्याः । तत्र दक्षिणेंसे 'कृत्तिकानक्षत्रं' इत्युपधाय अथैतन्न नक्षत्रपदं रोहिणीप्रभृति आविशाखाभ्यामायातयति । दक्षिणादंसाद्दक्षिणां श्रोणीं आरभ्याया-

*सं. ४-४-१०.

ज्योतीꣳषि यन्नक्षत्राणि तान्येवाप्नो-
त्यथो अनूकाशमेवैतानि ॥३॥ ज्यो-
तीꣳषि कुरुते सुवर्गस्य लोकस्यानु-
ख्यात्यै यथ्सꣳस्पृष्टा उपदध्याद्वृष्ट्यै

त्राणि । तानि । एव । आप्नोति । अथो इति । अनूकाशमित्यनु-काशम् । एव । एतानि ॥ ३ ॥ ज्योतीꣳषि । कुरुते । सुवर्गस्येति सुवः-गस्य । लोकस्य । अनुख्यात्या इत्यनु-ख्यात्यै । [6]यत् । सꣳस्पृष्टा इति सं-स्पृष्टाः । उपदध्यादित्युप-द-

तयति । अथ पुच्छसन्धौ आत्मसन्धौ अमावास्यामुपदधाति 'यत्ते देवा अदधुः'* इत्येतन्नक्षत्रपथं अनूराधाप्रभृति आभरणीभ्य आ यातयति उत्तरायै श्रोणेरुत्तरमंसमारभ्यायातयति । अथोत्तर एवांसे पौर्णमासीमुपदधाति 'पूर्णा पश्चात्'* इति । नक्षत्रेष्टकाभिश्चितिरिष्यते । एतानिवा इत्यादि । गतम् । द्युलोकस्थितानि ज्योतींषि ता इष्टकाः । सुकृतां पुण्यकृतामेतानि ज्योतींषि । 'सुकर्मपाप' इति क्विप् । अथो अपि च । अनूकाशमिति हीनप्रकाशमनूकाशे दर्शयति । जातावेकवचनम् । 'इकः काशे' इति दीर्घत्वम् । 'अनोरप्रधानकनीयसी' इत्युत्तरपदान्तोदात्तत्वम् । तदपि एतानि ज्योतींषि कुरुते प्रकाशवत्करोति आसां प्रकाशातिशयेन कः । आसामुपधाता । किंपुनरिदानीं स्वर्गस्य महाप्रकाशस्येति । सुवर्गस्येति । यस्मादेवं तस्मादासामुपधानं स्वर्गस्य लोकस्यानुख्यात्यै भवति ॥

[6]यदित्यादि । संस्पृष्टत्वे वृष्ट्यवकाशं तिरोदध्यात् सर्वतश्छादित-

*सं. ३-५-१.

लोकमपि दध्यादवर्षुकः पर्जन्यः स्यादसꣳस्पृष्टा उप दधाति वृष्ट्या एव लोकं करोति वर्षुकः पर्जन्यो भवति पुरस्तादन्याः प्रतीचीरुप द-

ध्यात् । वृष्ट्यै । लोकम् । अपीति । दध्यात् । अवर्षुकः । पर्जन्यः । स्यात् । असꣳस्पृष्टा इत्यसं—स्पृष्टाः । उपेति । दधाति । वृष्ट्यै । एव । लोकम् । करोति । वर्षुकः । पर्जन्यः । भवति । [7]पुरस्तात् । अन्याः । प्रतीचीः । उपेति । दधाति ।

---

त्वात् । ततश्चावर्षणशीलः पर्जन्यस्स्यात् । 'लषपतपदस्थाभूवृष' इत्युकञ् । अस्पृष्टत्वेतु वृष्ट्यवकाशलाभात् वर्षको भवति पर्जन्यः ।

[7]पुरस्तादन्या इति । पुरस्तादारभ्य प्रतीचीनगति कृत्तिकादि विशाखान्तानुपदधाति दक्षिणादंसात् दक्षिणश्रोणेः । अन्यास्तु अनूराधादिभरण्यन्ताः पश्चादारभ्य प्राचीनगतीरुपदधाति उत्तरश्रोणेरुत्तरादंसात् । तस्मात्प्राचीनानि नक्षत्राणि पुनःपुनः पर्यावर्तन्ते । दक्षिणगोळे प्रतीचीनानि उत्तरगोळे च प्रतीचीनानीति । कथं तर्हि प्रत्यग्गोळवर्तिनां एतदुपपद्यते । तत्रापि दिग्भेदात् प्राचीनप्रतीचीनभावावबाधितावेव । तथाहि—यत्रोदेति सविता सा प्राची, यत्र दृश्यमानो गच्छति सा दक्षिणा, यत्रास्तमेति सा प्रतीची, यत्रादृश्यमानो गच्छति सोदीचीति । आहुश्च—

सर्वेषामुत्तरो मेरुर्लोकालोकश्च दक्षिणः । इति ।

तस्माद्वृती एव सर्वत्र भवतः उदयानन्तरं प्रतीचीनां गतिमारभन्ते

धाति पश्चादन्याः प्राचीस्तस्मात्प्रा-
चीनानि च प्रतीचीनानि च नक्ष-
त्राण्या वर्तन्ते ॥ ४ ॥
ऋतव्या उप दधात्यृतूनां क्लृप्त्यै द्वं-

पश्चात् । अन्याः । प्राचीः । तस्मात् । प्राचीनानि । च । प्रतीचीनानि । च । नक्षत्राणि । एति । वर्तन्ते ॥ ४ ॥

भ्रातृव्यो लोक एवैतान्येकचत्वारिꣳशच्च ॥ १ ॥

[1]ऋतव्याः । उपेति । दधाति । ऋतूनाम् । क्लृप्त्यै । द्वंद्वमिति द्वं–द्वम् । उपेति । दधाति । त-

अस्तमयानन्तरं तु प्राचीनामिति । आहुः—वक्रानुवक्रादि विचित्रकारिणः ताराग्रहा नक्षत्रशब्देनोच्यन्ते । अपरे पुनराहुः—अश्विन्यादीनामपि दिनेदिने स्वल्पा प्राचीना गतिरस्तीति सौक्ष्म्यात् नोपलभ्यते एवेति ॥

इति पञ्चमे चतुर्थे प्रथमोनुवाकः.

---

[1]ऋतव्या इत्यादि ॥ ‘ मधुश्च माधवश्च ’* इत्याद्या द्वेद्वे प्रतीचीति । मध्यमायान्तु चतस्रः । ऋतुशब्दवन्मन्त्रेणोपधेयाः । पूर्ववद्यत् । क्लृप्त्या इति । विभागसामर्थ्यात् यद्द्वन्द्वमुपदधाति द्वेद्वे इष्टके समानतया देवते । यज्ञपात्रप्रयोगे द्वन्द्वमिति निपातनम् । तस्माद्द्वन्द्वमिति । द्वौद्वौ मासावृतवः । अभिव्यक्तौ निपातनम् ॥

* सं. ४-४-११.

द्वमुप॑ दधाति तस्मा॑द्द्वंद्वमृत॒वोऽधृं॑तेव॒ वा ए॒षा यन्म॑ध्य॒मा चिति॑र॒न्तरि॑क्षमिव॒ वा ए॒षा द्वं॒द्वम॒न्यासु॒ चि॒तीषूप॑ दधाति॒ चत॑स्रो मध्ये॒ धृत्यां॒ अन्त॒श्श्लेष॑णं॒ वा ए॒ताश्चिती॑ना॒ यदृ॒त॒व्या॑ यदृ॒त॒व्या॑ उप॒दधा॑ति॒ चि॒तीनां॒ विधृ॑त्या॒ अव॑का॒मनूप॑ दधात्ये॒स्मात् । द्वंद्वमिति॑ द्वं—द्वम् । ऋ॒तव॑ः । [2]अधृ॑ता । इ॒व॒ । वै । ए॒षा । यत् । म॒ध्य॒मा । चिति॑ः । अ॒न्तरि॑क्षम् । इ॒व । वै । ए॒षा । द्वं॒द्वमिति॑ द्वं—द्वम् । अ॒न्यासु॑ । चि॒तीषु॑ । उपेति॑ । द॒धा॒ति॒ । चत॑स्रः । मध्ये॑ । धृत्यै॑ । [3]अ॒न्त॒श्श्लेष॑ण॒मित्य॑न्तः—श्लेष॑णम् । वै । ए॒ताः । चिती॑नाम् । यत् । ऋ॒त॒व्याः॑ । यत् । ऋ॒त॒व्याः॑ । उ॒प॒द॒धा॒तीत्यु॑प—दधा॑ति । चिती॑नाम् । विधृ॑त्या॒ इति॒ वि—धृ॒त्यै॒ । अव॑काम् । अनु॑ । उपे-

[2]अधृतेव वा इति । अत्र हेतुः अन्तरिक्षमिवेति । मध्यमत्वसामान्यात् । द्वन्द्वमन्यास्वित्यादि । गतम् । मध्य इति । मध्यमायां चितौ । धृत्या इति । तस्या धारणाय भवति ॥

[3]अन्तश्श्लेषणमिति ॥ चित्यन्तराळानां श्लेषणं सन्धानं अश्लथत्वं तदर्थमेता ऋतव्याः सन्धानार्था इति यावत् । तस्मादासा-

षा वा अग्नेर्योनिस्सयोनिम् ॥ ५ ॥
एवाग्निं चिनुत उवाच ह विश्वामि-
त्रोऽदुदित्थ्स ब्रह्मणाऽन्नं यस्यैता उ-
पधीयान्तै य उं चैना एवं वेददिति
संवथ्सरो वा एतं प्रतिष्ठायै नुदते
योऽग्निं चित्वा न प्रतितिष्ठति पञ्च

ति । दधाति । एषा । वै । अग्नेः । योनिः । सयो-
निमिति स-योनिम् ॥ ५ ॥ एव । अग्निम् । चि-
नुते । [4]उवाच । ह । विश्वामित्र इति विश्व-मि-
त्रः । अदंत् । इत् । सः । ब्रह्मणा । अन्नम् । य-
स्यं । एताः । उपधीयान्ता इत्युप-धीयान्तै । यः।
उ । च । एनाः । एवम् । वेदंत् । इति । [5]संवत्स-
र इति सं-वत्सरः । वै । एतम् । प्रतिष्ठाया इति
प्रति-स्थायै । नुदते । यः । अग्निम् । चित्वा । न ।
प्रतितिष्ठतीति प्रति-तिष्ठति । पञ्च । पूर्वाः । चि-

---

मुपधानं चितीनां विधृत्यै अश्लथत्वायैव भवति । अवका शैवालं ऋतव्यानमन्तरमुपदधाति । एषा वा इति । अप्सुयोनिरग्निः ताभिश्चावकाया अभेद उपचर्यते । सयोनिमिति । कारणेन सह चिनुते ॥

[4]उवाच हेत्यादि ॥ व्याख्यातम् । ऋतव्यानामेव स्तुतिः ॥

[5]संवत्सरो वा इत्यादि षष्ठचाश्चितेर्विधिः ॥ यश्चित्वाप्यग्निं न

पूर्वाश्रितयो भवन्त्यथ षष्ठीं चितिं चिनुते षड्वा ऋतवस्संवथ्सर ऋतुष्वेव संवथ्सरे प्रति तिष्ठत्येता वै ॥६॥ अधिपत्नीर्नामेष्टका यस्यैता उपधीयन्तेऽधिपतिरेव समानानां भवति यं द्विष्यात्तमुपदधद्ध्यायेदेताभ्य एवैनं दे-

तयः । भवन्ति । अथ । षष्ठीम् । चितिम् । चिनुते । षट् । वै । ऋतवः । संवत्सर इति सं–वत्सरः । ऋतुषु । एव । संवत्सर इति सं–वत्सरे । प्रतीति । तिष्ठति । [6]एताः । वै ॥ ६ ॥ अधिपत्नीरित्यधि–पत्नीः । नाम । इष्टकाः । यस्य । एताः । उपधीयन्त इत्युप–धीयन्ते । अधिपतिरित्यधि–पतिः । एव । समानानाम् । भवति । यम् । द्विष्यात् । तम् । उपदधदित्युप–दधत् । ध्यायेत् । एताभ्यः । एव । एनम् । देवताभ्यः । एति । वृश्चति । ता-

प्रतितिष्ठति संवत्सरः खल्वेनं प्रतिष्ठाय नुदते च्यावयति । तत्र पञ्च पूर्वाश्रितयो भवन्ति किं ताभिः । अथ पञ्चानामन्ते षष्ठीं चितिं चिनुते । षड्वा ऋतव इत्यादि । गतम् ॥

[6]एता वा इति ॥ षष्ठ्याश्रितेः सम्बन्धिन्यः अधिपत्न्यो नामेष्टकाः 'संयच्च प्रचेताश्च '* इत्याद्याः पञ्च एकैका दिक्षु एका मध्ये । यस्येत्यादि व्याख्यातम् ॥

*सं. ४-४-११.

वतांभ्य आ वृंश्चति ताजगार्तिमा-
र्छत्यङ्गिरसस्सुवर्गं लोकं यन्तो या
यज्ञस्य निष्कृंतिरासीत्तामृषिभ्यः प्र-
त्यौंहन्तद्धिरंण्यमभवद्याद्धिरंण्यशल्कैः
प्रोक्षति यज्ञस्य निष्कृत्या अथो भे-
षजमेवास्मैं करोति ॥ ७ ॥ अथो रू-

जक् । आर्तिम् । एति । ऋच्छति । [7]अङ्गिरसः । सुवर्गमिति सुवः--गम् । लोकम् । यन्तः । या । यज्ञस्यं । निष्कृंतिरिति निः--कृतिः । आसीत् । ताम् । ऋषिभ्य इत्यृषि--भ्यः । प्रतीति । औहन् । तत् । हिरंण्यम् । अभवत् । यत् । हिरण्यशल्कैरिति हिरण्य--शल्कैः । प्रोक्षतीति प्र--उक्षति । यज्ञस्यं । निष्कृत्या इति निः--कृत्यै । अथो इति । भेषजम् । एव । अस्मै । करोति ॥ ७ ॥ अथो इ-

[7]अङ्गिरस इत्यादि ॥ निष्कृतिः निष्क्रयः यया यज्ञ आत्मसात् क्रियते तामृषिभ्यः प्रत्यौहन् प्रति ददुः तामृषिभ्यो दक्षिणां दत्वा स्वर्गं गताः निष्कृतात्मानः । तद्धिरण्यं स्वर्णमभवत् । तस्माद्धिरण्यशकलैः प्रोक्षणं यज्ञस्य निष्क्रयाय । अथो अपि च अस्मै यज्ञाय भेषजं दुरितशमनं करोति । अपि चैनं यज्ञं रू-

पेणैवैनꣳ सम॑र्धयत्यथो हिर॑ण्यज्यो-
तिषैव सु॑वर्गं लोकमे॑ति साह॒स्रव॑ता
प्रोक्ष॑ति साह॒स्रः प्र॒जाप॑तिः प्र॒जा-
प॑तेराप्त्या॑ इ॒मा मे॑ अग्न॒ इष्ट॑का धे॒-

ति॑ । रू॒पेण॑ । ए॒व । ए॒नम् । समिति॑ । अ॒र्ध॒य॒ति॒ । अथो॒ इति॑ । हिर॑ण्यज्योति॒षेति॒ हिर॑ण्य-ज्यो॒ति॒षा॒ । ए॒व । सु॒व॒र्गमिति॑ सुवः-गम् । लो॒कम् । ए॒ति॒ । [8]सा॒ह॒स्रव॒तेति॑ साह॒स्र-व॒ता॒ । प्रेति॑ । उ॒क्ष॒ति॒ । सा॒-ह॒स्रः । प्र॒जाप॑ति॒रिति॑ प्र॒जा-प॒तिः॒ । प्र॒जाप॑ते॒रिति॑ प्र॒जा-प॒तेः॒ । आप्त्यै॑ । [9]इ॒माः । मे॒ । अ॒ग्ने॒ । इष्ट॑-

पसमृद्धं करोति । उभयत्रापि अन्वादेशोनुदात्तः । अथो यजमानोपि हिरण्यज्योतिषा रूपेण स्वर्गं गच्छति ॥

[8]साहस्रवतेति ॥ 'शतमानविंशतिक' इत्यण् । 'सहस्रस्य प्रमा असि'* इत्यादिमन्त्रगताः प्रमादयः सहस्रशब्देनोच्यन्ते । तद्वतामन्त्रेण 'सहस्रस्य प्रमा असि'* इत्यादिना प्रोक्षति द्वाभ्यां द्वाभ्यां शताभ्यां प्रतिदिशं एकैकेन मन्त्रेण प्रोक्षति मध्यमोत्तमाभ्यां प्राङ्मुखः । यद्वा—सहस्रपरिमाणवता हिरण्यशकलसमूहेन प्रोक्षति । सहस्रमेववा साहस्रं सहस्रशब्दवता मन्त्रेणेति । साहस्र इत्यादि गतम् ॥

[9]इमा मे अग्न इत्यादि ॥ अनेन मन्त्रेण श्रोण्यन्ते तिष्ठन्नुत्तरा धेनूः या धेनुस्थानीया एवेष्टकाः कुरुते । ताश्च कामदुघाः सर्वा-

*सं. ४-४-११.

नवस्सन्त्वित्याह धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुत्रामुष्मिन्लोक उप तिष्ठन्ते ॥ ८ ॥

रुद्रो वा एष यदग्निस्स एतर्हि

काः । धेनवः । सन्तु । इति । आह । धेनूः । एव । एनाः । कुरुते । ताः । एनम् । कामदुघा इति काम—दुघाः । अमुत्र । अमुष्मिन्न् । लोके । उपेति । तिष्ठन्ते ॥ ८ ॥

सयोनिमेता वै करोत्येकान्न चत्वारिꣳशच्च ॥२॥

[1]रुद्रः । वै । एषः । यत् । अग्निः । सः । एतर्हि ।

न्कामानस्मै दुहते । अमुत्र द्युलोके अमुष्मिश्च प्राजापत्यादि लोके एनमुपतिष्ठन्ते यत्रेच्छति यथा वा इमा इच्छति तथा 'एका च शतं च सहस्रं च'* इत्यादि भावेनोपतिष्ठते । यच्चान्यदिच्छति तच्चास्मै दुहाना ऋतावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वत्यः स्वधावत्यश्च तत्र भवन्ति। किञ्च या एता विराजो नाम कामदुघा इष्टका अमुत्र द्युलोके अमुष्मिश्च ऐन्द्रे ब्राह्मे प्राजापत्ये तत्र च लोके वर्तन्ते । तत्रतत्र च यथाभिमते लोके एता एव भूत्वा इष्टका धेनवो यजमानमुपतिष्ठन्ति ॥

इति पञ्चमस्य चतुर्थे द्वितीयोनुवाकः.

---

[1]रुद्रो वा एष इत्यादि ॥ शतरुद्रीयहोमविधिः । रुद्र एव स्वयमेषोग्निः तस्य तनुत्वात् । स रुद्रः एतस्मिन्काले जातः प्रादुर्भूतो

---

*सं. ४-४-११.

जातो यर्हि सर्वश्चितस्स यथा व-
त्सो जातस्स्तनं प्रेप्सत्येवं वा एष
एतर्हि भागधेयं प्रेप्सति तस्मै य-
दाहुतिं न जुहुयादध्वर्युं च यज-

जातः । यर्हि । सर्वः । चितः । सः । यथा । वत्सः । जातः । स्तनम् । प्रेप्सतीति प्र–ईप्सति । एवम् । वै । एषः । एतर्हि । भागधेयमिति भाग–धेयम् । प्रेति । ईप्सति । तस्मै । यत् । आहुतिमित्या–हुतिम् । न । जुहुयात् । अध्वर्युम् । च । यजमानम् । च । ध्यायेत् । शतरुद्रीयमिति शत–रुद्रीयम् । जुहोति ।

भवति यदा सर्वोऽग्निश्चितो भवति । स इदानीं सन्निधत्ते । सन्निहितश्च स एष एतर्हि इदानीमेव । 'एतेतौ रथोः' इति एतादेशः । भागधेयं प्रेप्सति प्राप्तुमिच्छति यथा वत्सो जातो जातमात्र एव स्तनं प्रेप्सति । वत्सदृष्टान्तो विळम्बना । सर्वत्र अनद्यतनेर्हिः । तस्मै यदाहुतिमिदानीमेव जुहुयात् अध्वर्युं च यजमानं च ध्यायेत् भक्षणीयत्वेन । तस्माच्छतरुद्रीयं जुहोति रुद्रायेति । अन्य आहुः—'रुद्रो वा एष यत्' इत्यग्नेः रुद्रत्वेन स्तुतिः । स तादृशोऽग्निरेतस्मिन् काले जात इति । स यथेत्याद्यग्निविषये । तस्माद्रुद्रात्मने शतरुद्रीयं जुहोति । नानास्वभावा रुद्राः शतरुद्रा देवस्येच्छातनवो देवता अस्येति शतरुद्रीयम् । 'शतरुद्राच्छ च' इति छः । 'नमस्ते रुद्र मन्यवे'* इत्यारभ्य एकादशानुवा-

*सं. ४-५-१.

मानं च ध्यायेच्छतरुद्रीयं जुहोति भागधेयेनैवैनꣳ शमयति नार्तिमार्च्छेत्यध्वर्युर्न यजमानो यद्ग्राम्याणां पशूनाम् ॥ १ ॥ पयसा जुहुयाद्ग्रा-

भागधेयेनेति भाग-धेयेन । एव । एनम् । शमयति । न । आर्तिम् । एति । ऋच्छति । अध्वर्युः । न । यजमानः । [2]यत् । ग्राम्याणाम् । पशूनाम् ॥ १ ॥ पयसा । जुहुयात् । ग्राम्यान् । पशून् । शुचा । अर्पयेत् । यत् । आरण्यानाम् । आरण्यान् । जर्तिल-

काः । तत्र प्रथमं मनुवाकं निगद्य द्वितीयं तृतीयं चतुर्थस्य यत्राभिजानाति 'नमः क्षत्तृभ्यः'* इति तत्स्वाहाकरोति । ततस्सङ्ग्रहीतृभ्यः प्रतिपद्य शिष्टमनुवाकस्य निगद्य पञ्चमं षष्टं सप्तमस्य यत्राभिजानाति 'नमो वर्ष्याय च'† इति तत्स्वाहाकरोति । यथा 'वर्ष्याय च' इति प्रतिपद्य शिष्टमनुवाकस्य निगद्य अष्टमं नवमं दशममेकादशस्य च यत्राभिजानाति 'य एतावन्तश्च'‡ इति तत्स्वाहाकरोति । एवं तिस्र आहुतयः । अथ 'नमो रुद्रेभ्यो ये पृथिव्यां ये अन्तरिक्षे ये दिवि'‡ इति तिस्र उत्तरा आहुतयः । एवमेतेन शतरुद्रीयहोमेन स्वयं देवः शमितो भवति आत्मीयभागलाभात् । ततोध्वर्युर्यजमानश्च आर्तिं न गच्छतः ॥

[2]यदित्यादि ॥ ग्राम्याः पशवः उक्ताः गवादयः आरण्याश्च सिंहादयः । यदारण्यानामिति । पशूनां पयसा जुहुयादित्येव ।

*सं. ४-५-४. †सं. ४-५-७. ‡सं. ४-५-११.

म्यान्पशूञ्छुचाऽर्पयेद्यदार॒ण्यानामा-
र॒ण्याञ्जर्तिलयवा॒ग्वां वा जुहुयाद्गवी-
धुकयवा॒ग्वां वा॒ न ग्रा॒म्यान्पशून्
हि॒नस्ति॒ नार॒ण्यानथो॒ खल्वाहुरना-
हुति॒र्वै ज॒र्तिलांश्च ग॒वीधुंका॒श्चेत्यंज-
क्षी॒रेणं जुहोत्याग्ने॒यी वा ए॒षा यद्-

य॒वा॒ग्वेति॒ जर्तिल-य॒वा॒ग्वां। वा॒। जुहुयात्। ग॒वी-
धु॒क॒य॒वा॒ग्वेति॒ गवीधुक-य॒वा॒ग्वां। वा॒। न। ग्रा॒-
म्यान्। प॒शून्। हि॒नस्ति॑। न। आ॒र॒ण्यान्। अथो॒
इति॑। खलु॑। आ॒हुः। अनाहुति॒रित्यना-हु॒तिः। वै।
ज॒र्तिलाः। च॒। ग॒वीधुंकाः। च॒। इति॑। [3]अ॒ज॒क्षी॒रे-
णेत्यंज-क्षी॒रेणं। जु॒हो॒ति॒। आ॒ग्ने॒यी। वै। ए॒षा।
यत्। अ॒जा। आहुत्येत्या-हु॒त्या॒। ए॒व। जु॒हो॒ति॒ -

आरण्यानिति। पशूञ्छुचा अर्पयेदित्येव च। जर्तिलाः कृष्ण-तिलाः गवीधुकाः तृणतण्डुला नाम। अनाहुतिरिति। तत्साद्दृश्यात् ताच्छब्द्यम्। अनाहुतिसादृश्यं च अजक्षीरापेक्षया निकृष्टत्वात्॥

[3]अजक्षीरेणेति॥ 'ङ्यापोस्संज्ञाछन्दसोः' इति ह्रस्वत्वम्। आग्नेयीति। अग्निना सहोत्पन्नोजः। 'सर्वत्राग्निकलिभ्याम्' इति ढक्। आहुत्यैवेति। आहुतियोग्यद्रव्यमाहुतिः। कर्मणि क्तिन्।

जाऽऽहुंत्यैव जुंहोति न ग्राम्यान्प-
शून् हिनस्ति नारण्यानङ्गिरसस्सु-
वर्गं लोकं यन्तः ॥ १० ॥ अजायां
घर्मं प्रासिंञ्चथ्सा शोचंन्ती पर्णं परां-
ऽजिहीत सोंऽर्कोंऽभवत्तदर्कस्यांर्क-
त्वमंर्कपर्णेनं जुहोति सयोनित्वायो-

न । ग्राम्यान् । पशून् । हिनस्तिं । न । आरण्यान् । [4]अङ्गिरसः । सुवर्गमितिं सुवः—गम् । लोकम् । यन्तः ॥ १० ॥ अजायाम् । घर्मम् । प्रेतिं । असि-ञ्चन् । सा । शोचंन्ती । पर्णम् । परेतिं । अजिहीत । सः । अर्कः । अभवत् । तत् । अर्कस्यं । अर्कत्वमिति-त्यंर्क—त्वम् । अर्कपर्णेनेत्यंर्क—पर्णेनं । जुहोति । स-

---

योग्यत्वं च तस्य आग्नेयत्वात् । तादृशेन द्रव्येण होमश्च कृतो भवति । ग्राम्यारण्यपशुहिंसा न कृता भवाति ॥

[4]अङ्गिरस इत्यादि ॥ घर्मं प्रवर्ग्यं अजायां प्रासिञ्चन् । सा शोचन्ती तप्यमाना पर्णं पापरोगं पराजहीत त्यक्तवती । सोऽर्कोऽभवत् । अर्कत्वमिति । अर्चनीयः प्रशस्तोऽग्निः । कर्माणि घर्मि कुत्वम् । तस्मादर्कपर्णेन जुहोतीति विधिः । सयोनित्वाय क्षीर-पर्णयोरजाग्नियोनित्वात् ॥

दक्षिणतो जुहोत्येषा वै रुद्रस्य दिक्स्वा-
यामेव दिशि रुद्रं निरवदयते चर-
मायामिष्टकायां जुहोत्यन्तत एव
रुद्रं निरवदयते त्रेधाविभक्तं जुहो-

योनित्वायेति सयोनि-त्वायं । [5]उदङ् । तिष्ठन् । जुहोति । एषा । वै । रुद्रस्य । दिक् । स्वायाम् । एव । दिशि । रुद्रम् । निरवदयत इति निः-अवदयते । चरमायाम् । इष्टकायाम् । जुहोति । अन्ततः । एव । रुद्रम् । निरवदयत इति निः-अवदयते । [6]त्रेधाविभक्तमिति त्रेधा-विभक्तम् । जुहोति । त्र-

[5]उदङिति ॥ 'अनिगन्तोञ्चतौ' इति गतेः प्रकृतिस्वरत्वम् । स्वायामेवेति । स्वस्यामेव दिशि निष्कृष्य पृथक्त्वेन रुद्रं यजते यागदानादिषु । चरमायामिति । उत्तरपक्षे पश्चिमोत्तरकोणायत्ये*ष्टकायाः । अन्तत इति । सर्वान्ते निष्कृष्य स्वातन्त्र्येण यजते ॥

[6]त्रेधेति ॥ एकत्रिभागः षण्णवतिः मन्त्राः । तद्यथा—प्रथमोनुवाकः पञ्चदश । द्वितीयः षड्विंशतिः । तृतीयश्चतुस्त्रिंशत् । चतुर्थस्य 'नमः क्षत्तृभ्य' इतियावत् एकविंशतिरिति षण्णवतिः । अथ चतुर्थे शेषे त्रयोदश । पञ्चमषष्ठौ षष्ठिः । सप्तमस्य च यावान् 'नमो वर्ष्याय च' इति त्रयो विंशतिरिति षण्णवतिः । अथ—सप्तमस्य शेषे नव । अष्टमो द्वात्रिंशत् । नवमः त्रयस्त्रि-

*णावन्त्ये.

ति त्रयं इमे लोका इमानेव लोकान्थ्समावद्वीर्यान्करोतीयत्यग्रे जुहोति ॥ ११ ॥ अथेयत्यथेयति त्रयं इमे लोका एभ्य एवैनं लोकेभ्यंश्शमयति तिस्र उत्तरा आहुतीर्जु-

यंः । इमे । लोकाः । इमान् । एव । लोकान् । समावद्वीर्यानिति समावत्-वीर्यान् । करोति । [7]इयंति । अग्रे । जुहोति ॥११॥ अथं । इयंति । अथं । इयंति । त्रयंः । इमे । लोकाः । एभ्यः । एव । एनम् । लोकेभ्यंः । शमयति । [8]तिस्रः । उत्तरा इत्युत्-त-

शत् । दशमो वा द्वादश । अन्त्यस्य च 'नमो रुद्रेभ्यः' इत्यतः प्राक् दश । एवं षण्णवतिः । समावद्वीर्यान् समवीर्यान् । 'समादावतुप्' इति स्वार्थे वतुप् ॥

[7]इयतीति ॥ जान्वादिप्रमाणं विशेषप्रतिपादनार्थमिदम् । प्रमाणसामान्यमिदं प्रमाणपरिमाणयोर्भेदस्य अविवक्षितत्वात् । परिमाणप्रत्ययान्तेन प्रमाणविशेषाणां सामान्याभिधानम् । 'किमिदम्भ्यां वो घः' इति घः, 'यस्य' इति लोपे इकारनिवृत्तिस्वरेण इकार उदात्तः । अथ शब्दक्रममाह—लोकत्रयप्रसिद्ध्यर्थं जानुदघ्ने आकाशप्रदेशे धारयन् प्रथमामाहुतिं जुहोति । अथ नाभिदघ्ने धारयन् द्वितीयाम् । अथ ग्रीवदघ्ने धारयन् तृतीयामिति । एभ्य इति । लोकत्रयार्थम् । शमयति धनपरमध्वर्युः यजमानार्थमेवेति ॥

[8]तिस्र इति ॥ 'नमो रुद्रेभ्यः'* इत्यादिभिः समासेन । षडित्यादि गतम् ॥

*सं. ४-५-११.

होति षट्थ्सं पंद्यन्ते षड्वा ऋतवं
ऋतुभिंरेवैनंꣳ शमयति यदंनुपरि-
क्रामं जुहुयादंन्तरवचारिणꣳ रुद्रं
कुर्यादथो खल्वांहुः कस्यां वाऽहं
दिशि रुद्रः कस्यां वेत्यंनुपरिक्रामं-
मेव होंतव्यंमपंरिवर्गमेवैनꣳ शम-

राः । आहुंतीरित्या–हुतीः । जुहोति । षट् । स-
मितिं । पद्यन्ते । षट् । वै । ऋतवंः । ऋतुभिरि-
त्यृतु–भिः । एव । एनम् । शमयति । [१]यत् । अ-
नुपरिक्राममित्यंनु–परिक्रामंम् । जुहुयात् । अ-
न्तरवचारिणमित्यंन्तः–अवचारिणंम् । रुद्रम् । कु-
र्यात् । अथो इतिं । खलुं । आहुः । कस्यांम् । वा ।
अहं । दिशि । रुद्रः । कस्यांम् । वा । इतिं । अ-
नुपरिक्राममित्यंनु–परिक्रामंम् । एव । होतव्यंम् ।
अपंरिवर्गमित्यपंरि–वर्गम् । एव । एनम् । शमयति

[१]यदित्यादि ॥ उक्तमेकत्र तिष्ठता होतव्यमिति । इदानीं पक्षान्तरं दूषयित्वा स्थापयति तत् । अनुक्रमेण दिक्षु परिक्रम्य तत्र तत्र गतं रुद्रं शमयितुं जुहुयात् । एवं क्रियमाणे रुद्रोऽन्तः-प्रविश्यापचारमनुधावनार्थं अवतु । सार्वत्रिकेणानेन शमनस्य सार्वत्रिकत्वं प्रतिपाद्यत इति । आमीक्ष्ण्ये णमुल् । अपरिवर्गमिति । छान्दसो घमुञ् ॥

यति ॥ १२ ॥ एता वै देवतांस्सु-
वर्ग्यां या उत्तमास्ता यजमानं वा-
चयति ताभिरेवैनꣳ सुवर्गं लोकं
गमयति यं द्विष्यात्तस्य संचरे प-
शूनां न्यस्येद्यः प्रथमः पशुरभिति-
ष्ठति स आर्तिमार्छति ॥ १३ ॥

॥ १२ ॥[10]एताः । वै । देवताः । सुवर्ग्या इति सु-
वः—ग्याः । याः । उत्तमा इत्युत्—तमाः । ताः । यज-
मानम् । वाचयति । ताभिः । एव । एनम् । सुवर्गमिति
सुवः—गम् । लोकम् । गमयति ।[11]यम् । द्विष्यात् ।
तस्य । संचर इति सं—चरे । पशूनाम् । नीति ।
अस्येत् । यः । प्रथमः । पशुः । अभितिष्ठतीत्यभि-
भि—तिष्ठति । सः । आर्तिम् । एति । ऋच्छति ॥१३॥

पशूनां यन्तोग्रेजुहोत्यपरिवर्गमेवैनꣳ शम-
यति त्रिꣳशच्च ॥ ३ ॥

---

[10]एता वा इति ॥ एता उत्तमा 'नमो रुद्रेभ्यः'* इति । आ-द्युदात्तत्वम् । मन्त्रप्रतिपाद्या देवताः ता एताः स्वर्गावाप्तिनिमित्तभूताः । 'गोद्वचचः' इति यत् । ता इति । गतम् ॥

[11]यं द्विष्यादिति ॥ द्वेष्यस्य पशूनां संचरे संचरणदेशे अर्क-पर्णे । न्यस्येदित्यादि । गतम् ॥

इति पञ्चमे चतुर्थे तृतीयोनुवाकः.

---

*सं. ४-५-११.

अश्मन्नूर्जमिति परिषिञ्चति मार्जयन्त्येवैनमथो तर्पयन्त्येव स एनं तृप्तोऽक्षुध्यन्नशोचन्नमुष्मिंल्लोक उपतिष्ठते तृप्यति प्रजया पशुभिर्य एवं वेद तां न इषमूर्जं धत्त मरुतस्संरराणा इत्याहान्नं वा ऊर्गन्नं

[1]अश्मन्न् । ऊर्जम् । इति । परीति । सिञ्चति । मार्जयन्ति । एव । एनम् । अथो इति । तर्पयन्ति । एव । सः । एनम् । तृप्तः । अक्षुध्यन्न् । अशोचन्न् । अमुष्मिन्न् । लोके । उपेति । तिष्ठते । तृप्यति । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । यः । एवम् । वेद । ताम् । नः । इषम् । ऊर्जम् । धत्त । मरुतः । संरराणा इति सं–रराणाः । इति । आह । अन्नम् । वै । ऊर्क् । अन्नम् । मरुतः । अ-

---

[1]अश्मन्नूर्जमिति परिषिञ्चति गरुत्मन्तं कुम्भेन ॥ अथो अपि च तर्पयति सोप्यग्निः क्षुच्छोकरहितः अमुष्मिन् लोक उपतिष्ठते यजमानं यत्रार्थोऽग्नेः । अथ तादृशाग्निमत्तया यजमानोपि क्षुच्छोकरहितो भविष्यति । अनुक्तमपि गम्यते । तृप्यतीत्यादि । विदुषां फलं । य एवंवेद सोपि प्रजया च पशुभिश्च तृप्यति । किं पुनर्य एवमनुतिष्ठतीत्यर्थात् गम्यते । एवं—मरुतः । तद्धेतुत्वात्ताच्छब्द्यम् ॥

मरुतोऽन्नमेवाव रुन्धेऽश्मꣳस्ते क्षु-
दमुं ते शुक् ॥ १४ ॥ ऋच्छतु यं
द्विष्म इत्याह यमेव द्वेष्टि तमस्य
क्षुधा च शुचा चार्पयति त्रिः परि-
षिञ्चन्पर्येति त्रिवृद्वा अग्निर्यावाने-
वाग्निस्तस्य शुचꣳ शमयति त्रिः पु-
नः पर्येति षट्थ्सं पद्यन्ते षड्वा ऋतव

न्नम् । एव । अवेति । रुन्धे । [2]अश्मन्न् । ते । क्षुत् । अमुम् । ते । शुक् ॥ १४ ॥ ऋच्छतु । यम् । द्विष्मः । इति । आह । यम् । एव । द्वेष्टि । तम् । अस्य । क्षुधा । च । शुचा । च । अर्पयति । [3]त्रिः । परिषिञ्चन्निति परि–सिञ्चन्न् । परीति । एति । त्रिवृदिति त्रि–वृत् । वै । अग्निः । यावान् । एव । अग्निः । । तस्य । शुचम् । शमयति । त्रिः । पुनः । परीति । एति । षट् । सामिति । पद्यन्ते । षट् । वै । ऋतवः । ऋतुभिरित्यृतु–भिः । एव । अस्य ।

---

[2]अश्मंस्त इति । परिषेककुम्भमश्मानं संसृष्टं सादयति । यमेवेत्यादि । द्वेष्यमास्मिन् क्षुच्छोकाभ्यां योजयति ॥

[3]त्रिरिति । प्रदक्षिणं परिषिञ्चति परितो गच्छति । अथापरिषिञ्चन् त्रिः पुनः पर्येति । गतमन्यत् ॥

ऋतुभिरेवास्य शुचꣳ शमयत्यपां वा एतत्पुष्पं यद्वेतसोपाम्॥ १५ ॥ शरोवंका वेतसशाखया चावंकाभिश्च वि कंर्षत्यापो वै शान्ताश्शान्ताभिरेवास्य शुचꣳ शमयति यो वा

शुचंम् । शमयति । [4]अपाम् । वै । एतत् । पुष्पंम् । यत् । वेतसः । अपाम् ॥ १५ ॥ शरंः । अवंकाः । वेतसशाखयेति वेतस—शाखयां । च । अवंकाभिः । च । वीति । कर्षति । आपंः । वै । शान्ताः । शन्ताभिंः । एव । अस्य । शुचंम् । शमयति । [5]यः । वै । अग्निम् । चितम् । प्रथमः ।

---

[4]अपां वा एतदिति । वेतसोपां पुष्पस्थानीयः, ततः प्रादुर्भूतत्वात् । अवका च अपां शरस्थानीया । शरस्सारपरिणामः अवका शैवालम् । आपो वा इति । अभिजनस्तुत्या वेतसावका एव स्तूयन्ते शान्तिहेतुत्वाज्जाताः ॥

[5]यो वा अग्निमिति । यः पशुः अग्निं चितं प्रथममधिक्रामति आरोहति तं शुचा शोकेन प्रकर्षेण दग्धुमीश्वरोग्निः । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् । मण्डूकेनेति । ननु तस्यापि शोकः परिहर्तव्य एवेत्याह—न वा एष इति । पशूनां मध्ये एषोनुपजीवनीयः कथंचिदपि मांसादिना वहनादिना वा । अथोच्येत धातुमूलविशेषवदारोग्यहेतुस्स्यात्; तदपि नास्तीत्याह—

अग्निं चितं प्रथमः पशुरधि क्रामतीश्वरो वै तꣳ शुचा प्रदहो मण्डूकेन वि कर्षत्येष वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नारण्येषु तमेव शुचाऽर्पयत्यष्टाभिर्वि कर्षति ॥ १६ ॥ अष्टाक्ष-

पशुः । अधिक्रामतीत्यधि-क्रामति । ईश्वरः । वै । तम् । शुचा । प्रदह इति प्र-दहः । मण्डूकेन । वीति । कर्षति । एषः । वै । पशूनाम् । अनुपजीवनीय इत्यनुप-जीवनीयः । न । वै । एषः । ग्राम्येषु । पशुषु । हितः । न । आरण्येषु । तम् । एव । शुचा । अर्पयति । [6]अष्टाभिः । वीति । कर्षति ॥ १६ ॥ अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री ।

न वा एष इति । न ह्ययं ग्राम्येषु आरण्येषु वा पशुषु उपकारकतया हितः शास्त्रेण विहितः । यद्वा—हितयोगे चतुर्थी व्यत्ययेन बाध्यते । उप*कारको न भवति । तमेवेति। गृह्यतामयं शोकेन पापीयानिति भावः ॥

[6]अष्टाभिरिति ॥ 'समुद्रस्य त्वाऽवाकया'† इत्यादिभिः । गायत्रीभिरिति । सहोत्पन्नत्वात् ॥

*पतेः उप. †सं. ४-६-१-.

रा गायत्री गायत्रोऽग्निर्यावानेवाग्नि-
स्तस्य शुचꣳ शमयति पावकवती-
भिरन्नं वै पावकोऽन्नेनैवास्य शुचꣳ
शमयति मृत्युर्वा एष यदग्निर्ब्रह्मण
एतद्रूपं यत्कृष्णाजिनं कार्ष्णी उ-
पानहावुप मुञ्चते ब्रह्मणैव मृत्योरन्त-

गायत्रः । अग्निः । यावान् । एव । अग्निः । तस्य । शुचम् । शमयति । [7]पावकवतीभिरिति पावक-वतीभिः । अन्नम् । वै । पावकः । अन्नेन । एव । अस्य । शुचम् । शमयति । [8]मृत्युः । वै । एषः । यत् । अग्निः । ब्रह्मणः । एतत् । रूपम् । यत् । कृष्णाजिनमिति कृष्ण-अजिनम् । कार्ष्णी इति । उपानहौ । उपेति । मुञ्चते । ब्रह्मणा । एव । मृ-

---

[7]पावकवतीभिरिति । पावकशब्दवतीभिः । अन्नं वा इति । तद्धेतुत्वात्ताच्छब्द्यम् ॥

[8]मृत्युर्वा इति । दाहेन नाशकत्वात् वदान्तादीनां [वृन्तादीनां] क्षयहेतुत्वात् वा । ब्रह्मण इति । ब्राह्मणः कर्मणो रूपमिदं कृष्णाजिनं प्रधानसाधनत्वात् ब्राह्मणस्यैव तद्रूपं । कार्ष्णी । 'अप्राणि रजतादि'इत्यञ्, अञि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । कृष्णो मृगविशेषः । उपमुञ्चते पादयोर्ब-

धँत्तेऽन्तर्मृत्योर्धँत्तेऽन्तरन्नाद्यादित्याँहु-
रन्यामुंपमुञ्चतेऽन्यान्नान्तः ॥ १७ ॥
एव मृत्योर्धत्ते वाऽन्नाद्यꣳ रुन्धे न-
मस्ते हरसे शोचिष इत्याँह नम-

त्योः। अन्तः। धत्ते। [9]अन्तः। मृत्योः। धत्ते। अन्तः। अन्नाद्यादित्यन्न-अद्यात्। इति। आहुः। अन्याम्। उपमुञ्चत इत्युप-मुञ्चते। अन्याम्। न। अन्तः॥१७॥एव। मृत्योः। धत्ते। अवेति। अन्नाद्यमित्यन्न-अद्यम्। रुन्धे। [10]नमः। ते। हरसे। शोचिषे। इति। आह। नमस्कृत्येति नमः-कृत्य। हि। वसीयाꣳसम्। उ-

ध्नाति। ब्रह्मणेव मृत्योरन्तर्धत्ते। ब्रह्मबेलन मृत्योरदर्शनेन च वर्तते॥

[9]अथैनदुभयोरुपमोचनं दूषयति—अन्तरिति। अन्तर्मृत्योर्धत्ते अविशेषादित्याहुः। अन्तरन्नाद्यादिति। धत्त इत्येव। तत्र का प्रतिपत्तिरित्याह—एकामुपमुञ्चते एकां न। 'एकान्याभ्याम्' इति आख्यातं न निहन्येते। अन्तरेवेति। उपमुक्तायां मृत्योरन्तर्धत्ते। अनुपमुक्तायामन्नाद्यमवरुन्धे॥

[10]नमस्ते इति। 'अपामिदं न्ययनं'* इति द्वाभ्यां श्वेतवतीभ्यां? अभि मृज्य अभिद्रुत्य आरोहति चितिं। नमस्कृत्येति अनुज्ञाप्य प्रतिषिद्धं अप्याचरितुं नमस्कारेण वसीयांसमाराधयन्ति॥

*सं. ४-६-१.

स्कृत्य हि वसीयाꣳसमुपचरन्त्य-
न्यं ते अस्मत्तपन्तु हेतय इत्याह
यमेव द्वेष्टि तमस्य शुचाऽर्पयति
पावको अस्मभ्यꣳ शिवो भवेत्या-
हान्नं वै पावकोऽन्नमेवाव रुन्धे द्वा-
भ्यामधि क्रामति प्रतिष्ठित्या अप-
स्यवतीभ्याꣳ शान्त्यै ॥ १८ ॥

पचरन्तीत्युप–चरन्ति । [11]अन्यम् । ते । अस्मत् । तपन्तु । हेतयः । इति । आह । यम् । एव । द्वे-ष्टि । तम् । अस्य । शुचा । अर्पयति । पावकः । अस्मभ्यमित्यस्म–भ्यम् । शिवः । भव । इति । आह । अन्नम् । वै । पावकः । अन्नम् । एव । अ-वेति । रुन्धे । [12]द्वाभ्याम् । अधीति । क्रामति । प्रतिष्ठित्या इति प्रति–स्थित्यै । अपस्यवतीभ्या-मित्यपस्य–वतीभ्याम् । शान्त्यै ॥ १८ ॥

शुग्वेतसोपामष्टाभिर्वि कर्षति नान्तरेकान्नपं-
श्चाशच्च ॥ ४ ॥

---

[11]अन्यं त इति ॥ द्वेष्यमस्याग्निः शोकेन तापयति । पावक इत्यादि । गतम् ॥

[12]अपस्यवतीभ्यामिति ॥ अप्शब्दवतीभ्यां एकेन अप्शब्देन द्वे

नृषदे वडिति व्याघारयति पङ्क्त्याऽऽ-
हुत्या यज्ञमुखमा रंभतेऽक्ष्णया व्या-
घारयति तस्मादक्ष्णया पशवोऽङ्गा-

[1]नृषद इति नृ-सदे । वट् । इति । व्याघारयतीति वि-आघारयति । पङ्क्त्या । आहुत्येत्या-हुत्या । यज्ञमुखमिति यज्ञ-मुखम् । एति । रभते । [2]अक्ष्णया । व्याघारयतीति वि-आघारयति । तस्मात् । अक्ष्णया । पशवः । अङ्गानि । प्रेति । हरन्ति । प्रतिष्ठित्या इति प्रति-स्थित्यै । यत् । वषट्कुर्यादिति वषट्-कुर्यात् । यातयामेति यात-यामा ।

---

अपि तद्वत्यौ । यद्वा—साहचर्यात् द्वितीयाऽपि अप्शब्दवती छत्रिवत् । अप्शब्दात् 'भव्यगेय' इत्यादिना स्वार्थिको यत्, तत्सन्नियोगेनासुगागमो निपात्यः ॥

इति पञ्चमे चतुर्थे चतुर्थोनुवाकः.

---

[1]नृषदे वडित्यादि ॥ स्वयमातृण्णां चितिमेव व्याघारयति । उत्तरं व्याघारणम् । पङ्क्त्येति । पदपङ्क्त्या । यथोक्तं 'पञ्चभिः पञ्चकैः पदपङ्क्तिः' इति । अक्षरपङ्क्तिरिति केचित्, एकस्य चतुष्कत्वात् । आहुत्येति । आहुत्यैव यज्ञमुखमुपक्रममारभते ॥

[2]अक्ष्णयेत्यादि ॥ व्याख्यातम्* ॥

---

*सं. ५-२-७, ५-१-५.

नि प्र हरन्ति प्रतिष्ठित्यै यद्वषट्कुर्याद्या-
तयामाऽस्य वषट्कारस्स्याद्यन्न वषट्कु-
र्याद्रक्षाꣳसि यज्ञꣳ हन्युर्वडित्याह प-
रोक्षमेव वषट्करोति नास्य यातया-
मा वषट्कारो भवति न यज्ञꣳ रक्षा-
ꣳसि घ्नन्ति हुतादो वा अन्ये देवाः
॥ १९ ॥ अहुतादोऽन्ये तानग्निचिदे-

अस्य । वषट्कार इति वषट्-कारः । स्यात् । यत् । न । वषट्कुर्यादिति वषट्-कुर्यात् । रक्षाꣳसि । यज्ञम् । हन्युः । वट् । इति । आह । परोक्षमिति परः-अक्षम् । एव । वषट् । करोति । न । अस्य । यातयामेति यात-यामा । वषट्कार इति वषट्-कारः । भवति । न । यज्ञम् । रक्षाꣳसि । घ्नन्ति । [3]हुताद इति हुत-अदः । वै । अन्ये । देवाः ॥ १९ ॥ अहुताद इत्यहुत-अदः । अन्ये । तान् । अग्निचिदि-

[3]हुताद इत्यादि ॥ अमुष्टिनाऽवोक्षणविधिः । हुतमग्नौ प्रास्तमदन्तीति हुतादः पुरोडाशादिभुजः । 'अदोऽनन्ने' इति विट् । कृदुत्तरपदप्रकृतिस्वरत्वम् । अहुतमदन्तीत्यहुतादः बलिहरणादिभुजः । स एव प्रत्ययः स्वरश्च । तानुभयानपि आग्निचिदेवाग्निचित् प्रीणाति प्रीणायितुमर्हति । उभयेऽप्यनेन प्रीणयितव्याः । तस्मात् 'ये

वोभयान्प्रीणाति ये देवा देवानामिति दध्ना मधुमिश्रेणावोक्षति हुतादश्चैव देवानहुतादश्च यजमानः प्रीणाति ते यजमानं प्रीणन्ति दध्नैव हुतादः प्रीणाति मधुषाऽहुतादो ग्रा-

त्यग्नि–चित् । एव । उभयान् । प्रीणाति । ये । देवाः । देवानाम् । इति । दध्ना । मधुमिश्रेणेति मधु–मिश्रेण । अवेति । उक्षति । हुताद इति हुत–अदः । च । एव । देवान् । अहुताद इत्यहुत–अदः । च । यजमानः । प्रीणाति । ते । यजमानम् । प्रीणन्ति । [4]दध्ना । एव । हुताद इति हुत–अदः । प्रीणाति । मधुषा । अहुताद इत्यहुत–अदः । [5]ग्राम्यम् । वै । एतत् । अन्नम् । यत् । दधि ।

देवाः'* इति द्वाभ्यां जातिभ्यां दध्ना मधुमिश्रेण अवोक्षति । तेन उभयानपि देवान् यजमानः प्रीणाति । ते च प्रीताः यजमानं प्रीणयन्ति ॥

[4]दध्नैवेत्यादि ॥ गतम् । अनङ उदात्तत्वाद्दध्नो विभक्तिरुदात्तनिवृत्तिस्वरेणोदात्ता । मधुशब्दपर्यायः सकारान्तो मधुरशब्दः ॥

[5]ग्राम्यं वा इत्यादि ॥ गतम् ॥

*सं. ४-६-१.

न्यं वा एतदन्नं यद्दध्यारण्यं मधु य-
द्दध्ना मधुमिश्रेणावोक्षत्युभयस्याव-
रुध्यै ग्रमुष्टिनाऽवोक्षति प्राजापत्यः
॥ २० ॥ वै ग्रमुष्टिस्सयोनित्वाय
द्वाभ्यां प्रतिष्ठित्या अनुपरिचारम-

आरण्यम् । मधु । यत् । दध्ना । मधुमिश्रेणेति मधु-मिश्रेण । अवोक्षतीत्यव-उक्षति । उभयस्य । अवरुद्ध्या इत्यव-रुद्ध्यै । [6]ग्रमुष्टिना । अवेति । उक्षति । प्राजापत्य इति प्राजा-पत्यः ॥२०॥ वै । ग्रमुष्टिः । सयोनित्वायेति सयोनि-त्वाय । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति-स्थित्यै । [7]अनुपरिचारमित्यनु-परिचारम् । अवेति । उक्षति । अपरिवर्गमित्यपरि-वर्गम् । एव । एनान् । प्रीणा-

[6]ग्रमुष्टिः दर्भमुष्टिग्रहणम् । प्रशंसाकर्मण औणादिकः ईक्प्रत्ययः, इत्त्वाभावश्च । प्राजापत्य इति । ग्रमुष्टिः प्रजापतिदेवत्यः । अग्निः प्रजापतिमुखादुत्पन्नः । तस्मात्समानकरणत्वाय भवति । समानस्य सभावः । द्वाभ्यामवोक्षणं प्रतिष्ठाया एव भवति ॥

[7]अनुपरिचारमिति ॥ अनुक्रमेण परितो गत्वा पुरस्ताद्दक्षिणतः पश्चादुत्तरतः पश्चादवोक्षति । आभीक्ष्ण्ये णमुल् । अपरिवर्गमिति । किञ्चिदपरिवृज्य सर्वानेव तान्प्रीणयाति । वृजेश्छान्दसो घमुन् ॥

वोक्षत्यपरिवर्गमेवैनान्प्रीणाति वि
वा एष प्राणैः प्रजया पशुभिर् ऋ-
ध्यते योग्निं चिन्वन्नधि क्रामति प्रा-
णदा अपानदा इत्याह प्राणानेवा-
त्मन्धत्ते वर्चोदा वरिवोदा इत्याह

ति । [8]वीति । वै । एषः । प्राणैरिति प्र–अनैः ।
प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । ऋ-
ध्यते । यः । अग्निम् । चिन्वन् । अधिक्रामतीत्य-
धि–क्रामति । प्राणदा इति प्राण–दाः । अपान-
दा इत्यपान–दाः । इति । आह । प्राणानिति प्र–
अनान् । एव । आत्मन् । धत्ते । वर्चोदा इति व-
र्चः–दाः । वरिवोदा इति वरिवः–दाः । इति । आ-
ह । प्रजेति प्र–जा । वै । वर्चः । पशवः । वरि-
वः । प्रजामिति प्र–जाम् । एव । पशून् । आ-

[8]वि वा एष इत्यादि ॥ अवरोहणस्य अर्थप्राप्तस्य मन्त्रविधिः । यद्वा—अधिरोहणस्य दोषवचनेन अवरोहणाय विशिष्टमन्त्रविधिः । 'प्राणदाः'* इत्यादिरवरोहणमन्त्रः पङ्क्तिश्चतुष्पदा । प्राणानिति । प्राणापानस्य प्रदर्शनार्थत्वात् बहुवचनम् । वर्चो बलम् । वरिवः पूजा । तद्धेतुत्वात्ताच्छब्द्यम् ॥

*सं. ४-६-१.

प्रजा वै वर्चः पशवो वरिवः प्रजा-
मेव पशूनात्मन्धत्त इन्द्रो वृत्रमह-
न्तं वृत्रः ॥ २१ ॥ हतष्षोडशभि-
र्भोगैरसिनात्स एतामग्नयेऽनीकवत
आहुतिमपश्यत्तामजुहोत्तस्याग्निर -
नीकवान्थ्स्वेन भागधेयेन प्रीतष्षो-

त्मन्न् । धत्ते । [9]इन्द्रः । वृत्रम् । अहन्न् । तम् । वृ-
त्रः ॥ २१ ॥ हतः । षोडशभिरिति षोडश–भिः ।
भोगैः । असिनात् । सः । एताम् । अग्नये । अ-
नीकवत इत्यनीक–वते । आहुतिमित्या–हुतिम् ।
अपश्यत् । ताम् । अजुहोत् । तस्य । अग्निः । अ-
नीकवानित्यनीक–वान् । स्वेन । भागधेयेनेति
भाग–धेयेन । प्रीतः । षोडशधेति षोडश–धा ।

---

[9]इन्द्रो वृत्रमित्यादि ॥ भोगैः शरीरगुणैः षोडशधा विभक्तैः इन्द्रमासिनात् अबध्नात् । षिञ् बन्धने । एतामिति । 'अग्निस्तिग्मेन '* इति द्वाभ्यां या क्रियते । अनीकवान् सेनावान् । मुखवान्वा । षोडशधेति । षोडशधा विभक्तेन निजशरीरेण वृत्रस्य षोडशधा हि भोगानदहत् । वैश्वकर्मणेनेति । 'य इमा विश्वाः '† इति क्रियमाणेन । पापमन इति । वृत्रवधनिमित्तात् ॥

---

*सं. ४-६-१. †सं. ४-६-२.

ङशधा वृत्रस्य भोगानप्यदहद्वैश्व-
कर्मणेन पाप्मनो निरमुच्यत यद-
ग्नयेऽनीकवत आहुतिं जुहोत्यग्निरे-
वास्यानीकवान्त्स्वेन भागधेयेन प्री-
तः पाप्मानमपि दहति वैश्वकर्म-
णेन पाप्मनो निर्मुच्यते यं काम-
येत चिरं पाप्मनः ॥ २२ ॥ निर्मु-

वृत्रस्य । भोगान् । अपीति । अदहत् । वैश्वकर्म-णेनेति वैश्व-कर्मणेन । पाप्मनः । निरिति । अमुच्यत । [10]यत् । अग्नये । अनीकवत इत्यनीक-वते । आहुतिमित्या-हुतिम् । जुहोति । अग्निः । एव । अस्य । अनीकवानित्यनीक-वान् । स्वेन । भागधेयेनेति भाग-धेयेन । प्रीतः । पाप्मानम् । अपीति । दहति । वैश्वकर्मणेनेति वैश्व-कर्मणेन । पाप्मनः । निरिति । मुच्यते । [11]यम् । कामयेत । चिरम् । पाप्मनः ॥ २२ ॥ निरिति । मुच्येत ।

---

[10]यदित्यादि ॥ गतम् । आहवनीये होमः ॥

[11]यमित्यादि ॥ चिरं दीर्घेण कालेन । एकैकमिति । प्रति-मन्त्रमाहुतीर्जुहुयात् । ताजक् तदानीमेव । सर्वाणीति । सर्वा-

च्येतेत्येकैकं तस्यं जुहुयाच्चिरमेव
पाप्मनो निर्मुच्यते यं कामयेत ता-
जक्पाप्मनो निर्मुच्येतेति सर्वाणि
तस्यानुद्रुत्यं जुहुयात्ताजगेव पाप्म-
नो निर्मुच्यतेऽथो खलु नानैव सू-

इति । एकैकमित्येकं—एकम् । तस्यं । जुहुयात् । चिरम् । एव । पाप्मनः । निरिति । मुच्यते । यम् । कामयेत । ताजक् । पाप्मनः । निरिति । मुच्येत । इति । सर्वाणि । तस्यं । अनुद्रुत्येत्यनु—द्रुत्यं । जुहुयात् । ताजक् । एव । पाप्मनः । नि-रिति । मुच्यते । [12]अथो इति । खलु । नाना । एव । सूक्ताभ्यामिति सु—उक्ताभ्याम् । जुहोति । नाना । एव । सूक्तयोरिति सु—उक्तयोः । वीर्यम् ।

णि मन्त्रवाक्यान्यनुद्रुत्य अन्ते वैकामाहुतिं जुहुयात् । अनुद्रवणं अनुक्रमेण उच्चारणम् ॥

[12]अथो इत्यादि ॥ पक्षान्तरम् । नाना पृथक्पृथक् द्वे द्वे आहुती जुहोति द्वाभ्यां सूक्ताभ्याम् । 'य इमा विश्वाः'* इत्यारभ्य 'विश्वकर्मा ह्यजनिष्ट'* इत्येकं सूक्तम् । 'चक्षुषः पिता'* इत्यारभ्य 'विश्वकर्मन् हविषा वर्धनेन'* इत्यपरम् । वीर्यमिति।

*सं. ४-६-२.

क्षाभ्यां जुहोति नानैव सूक्तयोर्वीर्यं
दधात्यथो प्रतिष्ठित्यै ॥ २३ ॥

उदेनमुत्तरां नयेति समिध आ द-
धाति यथा जनं यतेऽवसं करोति

दधाति । अथो इति । प्रतिष्ठित्या इति प्रति–स्थि-
त्यै ॥ २३ ॥

देवाः प्राजापत्यो वृत्राश्चिरं पाप्मनश्चत्वारिꣳ-
शच्च ॥ ५ ॥

[1]उदिति । एनम् । उत्तरामित्युत्–तराम् । न-
य । इति । समिध इति सं–इधः । एति । दधा-
ति । यथा । जनम् । यते । अवसम् । करोति ।

सूक्तद्वयसम्बन्धि पृथग्भूतं वीर्यं द्विप्रकारं दधाति आत्मनि स्था-
पयति । अथो अपि च प्रतिष्ठित्यै द्वित्वलाभात् ॥

इति पञ्चमे चतुर्थे पञ्चमोनुवाकः.

[1]'उदेनं'* इत्यादितिसृभिस्तिस्रः आदधाति ॥ यथेति । य-
था द्रष्टव्यं जनं यते गच्छते अवसं रक्षणार्थं पाथेयादिकं करोति
तत्तुल्यम् ॥

*सं. ४-६-३.

तादृगेव तत्तिस्र आ दधाति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्मै भागधेयं करोत्यौदुम्बरीर्भवन्त्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपि दधात्युदु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणैः ॥ २४ ॥ एवैनमुद्यच्छ-

तादृक् । एव । तत् । [2]तिस्रः । एति । दधाति । त्रिवृदिति त्रि—वृत् । वै । अग्निः । यावान् । एव । अग्निः । तस्मै । भागधेयमिति भाग—धेयम् । करोति । औदुम्बरीः । भवन्ति । ऊर्क् । वै । उदुम्बरः । ऊर्जम् । एव । अस्मै । अपीति । दधाति । [3]उदिति । उ । त्वा । विश्वे । देवाः । इति । आह । प्राणा इति प्र—अनाः । वै । विश्वे । देवाः । प्राणैरिति प्र—अनैः ॥ २४ ॥ एव । एनम् । उदि-

---

[2]तिस्र इत्यादि ॥ गतम् । 'उदात्तयणः' इति तिसृभ्यो विभक्तिरुदात्ता । त्रेधाविहितेष्टकत्वात् त्रिवृत्त्वमग्नेः ।

[3]'उदु त्वा विश्वे देवाः'* इति षड्भिरग्निमुद्यच्छते । ननु कथमुक्तं— षड्भिरग्निमुद्यच्छते इति उद्यमनस्य नियताङ्गत्वात् दोषः । द्वे परिगृह्यवती

---

*सं. ४-६-३.

तेऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनꣳ समर्धयति पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरित्याह दिशो ह्येषोऽनु प्रच्यवतेऽपामतिं दुर्मतिं बाधमाना इत्याह रक्षसामपहत्यै रायस्पोषे यज्ञप-

तिं । यच्छते । अग्ने । भरन्तु । चित्तिभिरिति चित्ति-भिः । इति । आह । यस्मै । एव । एनम् । चित्ताय । उद्यच्छत इत्युत्-यच्छते । तेन । एव । एनम् । समिति । अर्धयति । पञ्च । दिशः । दैवीः । यज्ञम् । अवन्तु । देवीः । इति । आह । दिशः । हि । एषः । अन्विति । प्रच्यवत इति प्र-च्यवते । अपेति । अमतिम् । दुर्मतिमिति दुः-मतिम् । बाधमानाः । इति । आह । रक्षसाम् । अपहत्या इत्यप-हत्यै । रायः । पोषे । यज्ञपतिमिति यज्ञ-पतिम् । आभजन्तीरित्या-भजन्तीः ।

---

परिगृह्यशब्दवत्यौ द्वे ऋचौ द्वितीयाचतुर्थ्यौ 'रायस्पोषे अधि यज्ञः'* 'ऊर्जा यद्यज्ञम्'* इति च । एवं हरणसामर्थ्यप्रख्यापनार्थं

---

*सं. ४-६-३.

तिमाभजंन्तीरित्याह पशवो वै रा-
यस्पोषः ॥ २५ ॥ पशूनेवावं रुन्धे
षड्भिर् हरति षड्वा ऋतवं ऋतुभिरे-
वैनꣳ हरति द्वे परिगृह्यंवती भवतो
रक्षंसामपंहत्यै सूर्यरश्मिर् हरिकेशः
पुरस्तादित्याह प्रसूंत्यै ततः पावका
आशिषो नो जुषन्तामित्याहान्नं वै

इतिं । आह । पशवः । वै । रायः । पोषः ॥२५॥
पशून् । एव ।अवेति ।रुन्धे । षड्भिरिति षट्-भिः ।
हरति। षट् । वै । ऋतवः । ऋतुभिरित्यृतु-भिः ।
एव । एनम् । हरति । द्वे इति । परिगृह्यंवती इ-
ति परिगृह्यं-वती । भवतः । रक्षंसाम् । अपंहत्या
इत्यपं-हत्यै । सूर्यरश्मिरिति सूर्य-रश्मिः । हरि-
केश इति हरि-केशः । पुरस्तात् । इति । आह ।
प्रसूंत्या इति प्र-सूत्यै । ततः । पावकाः । आशि-
ष इत्या-शिषः । नः । जुषन्ताम् । इति । आह ।
अन्नम् । वै । पावकः । अन्नम् । एव । अ-

छत्रिन्यायेन सर्वासां परिगृह्यवत्त्वख्यापनमभिप्रेतम् । तेन देवैः परि-
गृहीतत्ववचनाद्रक्षांसि बाधितुं प्रभवति ॥

पावकोऽन्नमेवाव रुन्धे देवासुरा-
स्संयत्ता आसन्ते देवा एतदप्रतिर-
थमपश्यन्तेन वै तेऽप्रति ॥ २६ ॥
असुरानजयन्तदप्रतिरथस्याप्रतिरथ-
त्वं यदप्रतिरथं द्वितीयो होताऽन्वा-

वेति । रुन्धे । [4]देवासुरा इति देव-असुराः । संयत्ता इति सं-यत्ताः । आसन्न् । ते । देवाः । एतत् । अप्रतिरथमित्यप्रति-रथम् । अपश्यन्न् । तेन । वै । ते । अप्रति ॥ २६ ॥ असुरान् । अजयन्न् । तत् । अप्रतिरथस्येत्यप्रति-रथस्य । अप्रतिरथत्वमित्यप्रतिरथ-त्वम् । [5]यत् । अप्रतिरथमित्य-

---

[4]देवासुरा इति ॥ अप्रतिरथ्यं नाम 'आशुश्शिशानः'* इत्यादिकं दशर्चं सूक्तमाम्नानक्रमं विहाय प्रागेवेदं विनियुङ्क्ते । अप्रतीति । प्रतिपक्षो यत्र नास्ति तदप्रतीति क्रियाविशेषणम् । यथा न कश्चित्प्रतीपश्शिष्यते तथा असुरानजयत् । बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—अतिकल्पम् । 'सुप्रतिनामात्रार्थे' इत्यव्ययीभावसमासः । अप्रतिरथत्वमिति । अप्रतिरथं जयसाधनत्वात् ॥

[5]यदित्यादि ॥ यदा 'अग्नये प्रणीयमानाय अनुब्रूहि' इति ।

---

*सं. ४-६-४.

हाप्रत्येव तेन यजमानो भ्रातृव्या-
ञ्जयत्यथो अनभिजितमेवाभि ज-
यति दशर्चं भवति दशाक्षरा वि-
राड्विराजेमौ लोकौ विधृतावनयो-
र्लोकयोर्विधृत्या अथो दशाक्षरा वि-

प्रति–रथम् । द्वितीयः । होता । अन्वाहेत्यनु–आ-
ह । अप्रति । एव । तेन । यजमानः । भ्रातृव्यान् ।
जयति । अथो इति । अनभिजितमित्यनभि–जि-
तम् । एव । अभीति । जयति । [6]दशर्चमिति द-
श–ऋचम् । भवति । दशाक्षरेति दश–अक्षरा ।
विराडिति वि–राट् । विराजेति वि–राजा । इमौ ।
लोकौ । विधृताविति वि–धृतौ । अनयोः । लो-
कयोः । विधृत्या इति वि–धृत्यै । अथो इति । द-
शाक्षरेति दश–अक्षरा । विराडिति वि–राट् । अ-
न्नम् । विराडिति वि–राट् । विराजीति वि–राजि ।

---

संप्रैषः क्रियते तदेतत्सूक्तं द्वितीयो होताऽन्वाह—अथो इति । अनभिजितं अभिजेतुमशक्यमपि शत्रुमभिजयत्येव ॥

[6]अनुवाकशेषस्य पञ्चर्चस्य दशानामृचां समाहारो दशर्चम् । 'ऋक्पूरब्धूः' इत्यकारस्समासान्तः । विराजेति । विराट् यज्ञोऽन्नं च ॥

राडन्नं विराड्विराज्येवान्नाद्ये प्रति ति-
ष्ठत्यसदिव वा अन्तरिक्षमन्तरिक्ष-
मिवाग्नीध्रमाग्नीध्र ॥ २७ ॥ अश्मा-
नं नि दधाति सत्त्वाय द्वाभ्यां प्रति-
ष्ठित्यै विमान एष दिवो मध्य आ-
स्त इत्याह व्येवैतया मिमीते मध्ये

एव । अन्नाद्य इत्यन्न–अद्यें । प्रतीति । तिष्ठति । [7]असत् । इव । वै । अन्तरिक्षम् । अन्तरिक्षम् । इव । आग्नीध्रमित्याग्नि–इध्रम् । आग्नीध्र इत्याग्नि–इध्रे ॥२७॥ अश्मानम् । नीति । दधाति । सत्त्वायेति सत्–त्वाय । द्वाभ्याम् । प्रतिष्ठित्या इति प्रति–स्थित्यै । [8]विमान इति वि–मानः । एषः । दिवः । मध्ये । आस्ते । इति । आह । वीति । एव । एतया । मिमीते । मध्ये । दिवः । निहित इति नि–

[7]असदिवेति ॥ आग्नीध्रीयेऽश्मनि साधनविधिः । असदिव वा अन्तरिक्षं, प्रत्यक्षमदर्शनात् । अन्तरिक्षमिवाग्नीध्रं मध्ये भावात् । सत्त्वायेति । अश्मनि निहिते उपलम्भादिसत्त्वनिवृत्तिः ॥

[8]विमान एष इति ॥ अश्मनिधानमन्त्रौ । व्येवैतयेति । एतया ऋचा अन्तरिक्षमसद्विमिमीते । सत्त्वं बलं हि विमानः अन्तरिक्षस्थानीयस्याग्नीध्रस्य, 'आस्ते'* इति मन्त्रलिङ्गात् । तर्हि द्विती-

*सं. ४-६-३.

दिवो निर्हितः पृश्निरश्मेत्याहान्नं वै
पृश्न्यन्नमेवाव रुन्धे चतसृभिरा पु-
च्छादेति चत्वारि छन्दाꣳसि छन्दो-
भिरेवेन्द्रं विश्वा अवीवृधन्नित्याह
वृद्धिमेवोपावर्तते वाजानाꣳ सत्पतिं
पतिम् ॥ २८ ॥ इत्याहान्नं वै वा-

हितः । पृश्निः । अश्मा । इति । आह । अन्नम् । वै । पृश्नि । अन्नम् । एव । अवेति । रुन्धे । [9]चतसृभिरिति चतसृ-भिः । एति । पुच्छात् । एति । चत्वारि । छन्दाꣳसि । छन्दोभिरिति छन्दः-भिः । एव । [10]इन्द्रम् । विश्वाः । अवीवृधन् । इति । आह । वृद्धिम् । एव । उपावर्तत इत्युप-आवर्तते । वाजानाम् । सत्पतिमिति सत्-पतिम् । पतिम् ॥ २८ ॥ इति । आह । अन्नम् । वै । वाजः । अ-

यया किं क्रियत इत्याह—अन्नं वा इति । शुक्लत्वसामान्यात् अन्नं वृत्तिरश्मा तत्कारणं वा । तस्माद्द्वितीयया अश्मनि साधनत्वं संप्रतिपद्यत इति भावः ॥

[9]चतसृभिरिति ॥ 'इन्द्रं विश्वाः'* इत्यादिभिः आपुच्छात् गच्छति । छन्दोभिरेवेति एतीत्येव ॥

[10]वृद्धिमेवेति ॥ निजवृद्धिलाभाभिप्रायकत्वात् इन्द्रवृद्धिकीर्तनस्य ।

*सं. ४-६-३.

जोऽन्नमेवाव रुन्धे सुम्नहूर्यज्ञो देवाꣳ
आ च वक्षदित्याह प्रजा वै पश-
वस्सुम्नं प्रजामेव पशूनात्मन्धत्ते य-
क्षदग्निर्देवो देवाꣳ आ च वक्षदित्या-
ह स्वगाकृत्यै वाजस्य मा प्रसवे-

न्नम् । एव । अवेति । रुन्धे । सुम्नहूरिति सुम्न–
हूः । यज्ञः । देवान् । एति । च । वक्षत् । इति ।
आह । प्रजेति प्र–जा । वै । पशवः । सुम्नम् ।
प्रजामिति प्र–जाम् । एव । पशून् । आत्मन् ।
धत्ते । [11]यक्षत् । अग्निः । देवः । देवान् । एति ।
च । वक्षत् । इति । आह । स्वगाकृत्या इति स्व-
गा–कृत्यै । [12]वाजस्य । मा । प्रसवेनेति प्र–सवे-

---

एवं वाजसुम्नयोरपि द्रष्टव्यम् । सुम्नं सुखम् । प्रजानां च तद्धे-
तुत्वात्ताच्छब्द्यम् ॥

[11]स्वगाकृत्या इति ॥ असाङ्कर्येण स्वभागलाभाय । अग्निरेव
हि देवांस्तथा यष्टुं शक्नोतीति मन्त्राभिप्राय इति दर्शयति ।
छान्दसडाजन्तस्य गतित्वात् ‘ ऊर्यादिच्विडाचश्च ’ इति गतित्वात्
‘ तादौ च निति ’ इति प्रकृतिस्वरत्वम् ॥

[12]असौ इत्यादि ॥ उद्यन् उद्ग्राभः । उद्गृह्णाति उत्सारयति ।
रश्मीन् निम्रोचन् अस्तं गच्छन्निग्राभः निगृह्णाति ग्रसति नियच्छति

नोद्ग्राभेणोदग्रभीदित्याहासौ वा आ-
दित्य उद्यन्नुद्ग्राभ एष निम्रोचं नि-
ग्राभो ब्रह्मणैवात्मानमुद्गृह्णाति ब्रह्म-
णा भ्रातृव्यं नि गृह्णाति ॥ २९ ॥
प्राचीमनु प्रदिशं प्रेहि विद्वानित्यां-

नं । उद्ग्राभेणेत्युत्–ग्राभेण । उदिति । अग्रभीत् । इति । आह । असौ । वै । आदित्यः । उद्यन्नित्युत्–यन् । उद्ग्राभ इत्युत्–ग्राभः । एषः । निम्रोचन्निति नि–म्रोचन् । निग्राभ इति नि–ग्राभः । ब्रह्मणा । एव । आत्मानम् । उद्गृह्णातीत्युत्–गृह्णाति । ब्रह्मणा । भ्रातृव्यम् । नीति । गृह्णाति॥२९॥

प्राणैः पोषोप्रत्याग्नीध्रे पतिमेष दश च ॥ ६ ॥

[1]प्राचीम् । अन्विति । प्रदिशमिति प्र–दिशम् ।

रश्मीनिति । स्रुगुद्यमननिपातनयोर्व्युत्पादितावत्र सादृश्याच्च वर्तेते । ब्रह्मणैवेति । उद्ग्रहणात्मना अनेन परिबृढेनादित्यकर्मणा आदित्येनैवावाक्कारिणा आत्मानमुद्गृह्णाति उच्छ्रितं करोति भ्रातृव्यं च निगृह्णाति विधेयीकरोति ॥

इति पञ्चमे चतुर्थे षष्ठोनुवाकः.

---

[1]प्राचीमित्यादि ॥ अग्निना सह चित्यधिश्रयणमन्त्रा एते— 'प्राचीमनु प्रदिशं'* इत्याद्याः पञ्च । देवलोकमिति । देवलोक-

*सं. ४-६-५.

ह देवलोकमेवैतयोपावर्तते क्रमध्व-
मग्निना नाकमित्याहेमानेवैतया लो-
कान्क्रमते पृथिव्या अहमुदन्तरिक्ष-
माऽरुहमित्याहेमानेवैतया लोका-
न्थ्समारोहति सुवर्यन्तो नापेक्षन्त
इत्याह सुवर्गमेवैतया लोकमेत्यग्ने
प्रेहि ॥ ३० ॥ प्रथमो देवयतामि-

प्रेति । इहि । विद्वान् । इति । आह । देवलोक-मिति देव-लोकम् । एव । एतया । उपावर्तत इत्युप-आवर्तते । क्रमध्वम् । अग्निना । नाकम् । इति । आह । इमान् । एव । एतया । लोकान् । क्रमते । पृथिव्याः । अहम् । उदिति । अन्तरिक्षम् । एति । अरुहम् । इति । आह । इमान् । एव । एतया । लोकान् । समारोहतीति सं-आ-रोहति । सुवः । यन्तः । न । अपेति । ईक्षन्ते । इति । आह । सुवर्गमिति सुवः-गम् । एव । एतया । लोकम् । एति । अग्ने । प्रेति । इहि॥३०॥ प्रथमः। देवयतामिति देव-यताम् ।इति। आह ।

स्थानीयं आहवनीयं 'सु आहवनीय' इत्येतया प्रथमया ऋचा उपावर्तते उपसंप्राप्तुं क्रमते । द्वितीयया लोकान् क्रमते उप-

त्यांहोभयेंष्वेवैतया देवमनुष्येषु च-
क्षुर्दधाति पञ्चभिरधिं क्रामति पाङ्क्तो
यज्ञो यावांनेव यज्ञस्तेनं सह सुंवर्गं
लोकमेंति नक्तोषासेतिं पुरोनुवा-

उभयेंषु । एव । एतया । देवमनुष्येष्विति देव-मनुष्येषुं । चक्षुः । दधाति । [2]पञ्चभिरितिं पञ्च-भिः । अधीतिं । क्रामति । पाङ्क्तः । यज्ञः । यावा-न् । एव । यज्ञः । तेनं । सह । सुवर्गमितिं सुवः-गम् । लोकम् । एति । [3]नक्तोषासा । इतिं । पुरो-

---

गच्छति । वृत्तावात्मनेपदम् । तृतीयया लोकान् समारोहति स्वर्गं प्राप्नोति स्वर्गस्थानीयं वा अग्निमधिरोहति । पञ्चम्या मनुष्यान्देवांश्च चक्षुष्मतः करोति ॥

[2]पञ्चभिरिति ॥ पुच्छादारभ्याधिरोहति । पाङ्क्त इति । धानादिपञ्चकसाध्यत्वात् पङ्क्तिप्रभवत्वाद्वा । पङ्क्तिशब्दादुत्सादित्वादञ् । पञ्चत्वान्वयात् पाङ्क्तेन यज्ञेन सह स्वर्गस्थानीयं चित्याग्निं प्राप्नोति । यद्वा—यजनीयोऽग्निः यज्ञः । तेन सर्वेण सह चितिमारोहति ॥

[3]पुरोनुवाक्यामिति ॥ दध्नः पूर्णामौदुम्बरीं स्वयमातृण्णायां जुहोति । तत्र 'नक्तोषासा'* इति पुरोनुवाक्यामन्वाह । प्रत्यै इति । द्यावापृथिव्योः प्रस्नवनार्थं प्रदानारम्भः [प्रतिः । तस्यै] प्रत्यै । यथा वत्सला गौः वत्सदर्शनेन ऊधःपूरणात्प्रस्नुतस्तनी

---

*सं. ४-६-५.

क्यामन्वाह प्रत्या अग्ने सहस्राक्षे-
त्याह साहस्रः प्रजापतिः प्रजापते-
राप्त्यै तस्मै ते विधेम वाजाय स्वाहे-
त्याहान्नं वै वाजोन्नमेवाव ॥ ३१ ॥
रुन्धे दध्नः पूर्णामौदुम्बरीꣳ स्वय-

नुवाक्यामिति पुरः–अनुवाक्याम् । अन्विति । आ-
ह । प्रत्यै । [4]अग्ने । सहस्राक्षेति सहस्र–अक्ष । इ-
ति । आह । साहस्रः । प्रजापतिरिति प्रजा–पतिः ।
प्रजापतेरिति प्रजा–पतेः । आप्त्यै । तस्मै । ते ।
विधेम । वाजाय । स्वाहा । इति । आह । अन्नम् ।
वै । वाजः । अन्नम् । एव । अवेति ॥ ३१ ॥ रुन्धे ।
[5]दध्नः । पूर्णाम् । औदुम्बरीम् । स्वयमातृण्णायामि-

भवति यथोक्तम्—'प्रत्ता वै गौर्दुहे '* । एवमग्नेर्दर्शनात् द्यावापृथिव्यौ प्रत्ते क्रियेते अनया पुरोनुवाक्ययेति भावः । ददातेः प्रपूर्वात् 'अच उपसर्गात्तः' इति तादेशः । 'तादौ च ' इति गतेः प्रकृतिस्वरत्वम् ॥

[4]अथ अग्ने सहस्राक्षेति तत्रैव याज्या ॥ साहस्र इति । सहस्रपरिमाणः सहस्रप्राप्तिहेतुर्वा । प्रजानां पाता अग्निः प्रजापतिः । तस्मात्सहस्रान्वयादियं याज्या तादृशस्याग्नेः प्राप्त्यै भवति । 'शतमानविंशतिक' इत्यण् ॥

[5]दध्न इति ॥ 'पूरणगुण' इति समासप्रतिषेधात् पूरणार्थे-

*सं. १-७-१.

मातृ॒ण्णायां॑ जुहो॒त्यूर्ग्वै दध्यूर्गु॑दु॒म्ब-
रो॒सौ स्व॑यमातृ॒ण्णाऽमु॒ष्यांमे॒वोर्जं
दधाति॒ तस्मा॑द॒मुतो॒ऽर्वाची॒मूर्ज॒मुप॑
जीवामस्ति॒सृभिं॑स्सादयति त्रि॒वृद्वा
अ॒ग्निर्यावा॑ने॒वाग्निस्तं प्र॑ति॒ष्ठां गं॑मय-
ति॒ प्रेद्धो॑ अग्ने दीदिहि पु॒रो न॒ इ-

ति॑ स्वयं–आ॒तृ॒ण्णायां॑म्। जु॒हो॒ति॒। ऊर्क्। वै। द-
धि। ऊर्क्। उ॒दु॒म्बर॑ः। अ॒सौ। स्व॒य॒मा॒तृ॒ण्णेति॑ स्व-
यं–आ॒तृ॒ण्णा। अ॒मुष्यां॑म्। ए॒व। ऊर्ज॑म्। द॒धा॒ति॒।
तस्मा॑त्। अ॒मुत॑ः। अ॒र्वाची॑म्। ऊर्ज॑म्। उपेति॑।
जी॒वा॒म॒ः। [6]ति॒सृ॒भि॒रिति॑ ति॒सृ–भि॒ः। सा॒द॒य॒ति॒।
त्रि॒वृदिति॑ त्रि–वृत्। वै। अ॒ग्निः। यावा॑न्। ए॒व।
अ॒ग्निः। तम्। प्र॒ति॒ष्ठामिति॑ प्रति–स्थाम्। ग॒म॒य॒ति॒।
[7]प्रेद्ध॒ इति॒ प्र–इ॒द्धः। अ॒ग्ने॒। दी॒दि॒हि॒। पु॒र॒ः। न॒ः।

योगे षष्ठी ज्ञापिता। औदुम्बरीस्थं दध्यभेदेनोच्यते। ऊर्क् रसः असौ द्यौः। अमुत इति। अमुतो द्युलोकादर्वाचीमधःपतन्तीं वृष्टिमुपाश्रित्य जीवामः॥

[6]तिसृभिरित्यादि॥ 'सुपर्णोसि'* इत्यादिभिः तिसृभिस्स्वयमातृण्णामध्यस्थमग्निं प्रतिष्ठापयति। त्रिवृदित्यादि। गतम्॥

[7]औदुम्बरीमिति॥ तस्मिन्नग्नौ अन्नमुदुम्बरीं समिधमादधाति।

*सं. ४-७-५.

त्यौदुंम्बरीमा दंधात्येषा वै सूर्मी
कर्णकावत्येतयां ह स्म ॥ ३२ ॥
वै देवा असुराणाꣳ शततर्हाꣳस्तृ-
ꣳहन्ति यदेतयां समिधंमादधाति
वज्रंमेवैतच्छंतघ्नीं यजंमानो भ्रातृ-
व्याय प्र हंरति स्तृत्या अछंम्ब-
ट्कारं विधेमं ते परमे जन्मंन्नग्न इति

इतिं । औदुंम्बरीम् । एतिं । दधाति । एषा । वै । सू-
र्मी । कर्णकावतीति कर्णक-वती । एतयां । ह ।
स्म ॥ ३२ ॥ वै । देवाः । असुराणाम् । शततर्हा-
निति शत-तर्हान् । तृꣳहन्ति । यत् । एतयां ।
समिधमितिं सं-इधंम् । आदधातीत्यां-दधाति ।
वज्रंम् । एव । एतत् । शतघ्नीमितिं शत-घ्नीम् ।
यजंमानः । भ्रातृंव्याय । प्रेति । हरति । स्तृत्यै । अ-
छंम्बट्कारमित्यछंम्बट्-कारम् । विधेमं । ते । परमे ।
जन्मन्न् । अग्ने । इतिं । वैकंङ्कतीम् । एतिं । दधाति ।

---

एषा वा इत्यादि । उपमानपदमिदं यादृशमग्निचिल्लभते । य-
द्वा—अग्निचित् अग्निं दुग्धे अग्निसकाशात्सर्वाण्याभिमतानि लभते ।
दुह प्रपूरणे, प्रपूरणं रेचनम् । तत्राग्निना दुह्यमानः अग्निचित्

वैकंङ्कतीमा दंधाति भा एवाव रुन्धे ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमीमयीꣳ शान्त्यां अग्निर्वा ह वा अंग्निचितं दुहेऽग्निचिद्वाऽग्निं दुहे ताम् ॥ ३३ ॥ सवितुर्वरेण्यस्य चित्रामित्याहैष वा अग्नेर्दोहस्तमस्य कण्व एव श्रायसोऽवेत्तेनं ह स्मैनꣳ स दुहे

भाः । एव । अवेति । रुन्धे । ताम् । सवितुः । वरेण्यस्य । चित्राम् । इति । शमीमयीमिति शमी—मयीम् । शान्त्यै । अग्निः । वा । ह । वै । अग्निचितमित्यंग्नि—चितंम् । दुहे । अग्निचिदित्यंग्नि—चित् । वा । अग्निम् । दुहे । [4]ताम् ॥ ३३ ॥ सवितुः । वरेण्यस्य । चित्राम् । इति । आह । एषः । वै । अग्नेः । दोहः । तम् । अस्य । कण्वः । एव । श्रायसः । अवेत् । तेनं । ह । स्म । एनम् । सः । दुहे । यत् । ए-

अग्निचिता दुह्यमानो हि स्वमहिम्नाऽऽरोपितः पुनःपुनराप्यायत इति विशेषः । 'लोपस्त आत्मनेपदेषु' इति तलोपः । 'च वायोगे प्रथमा' इति प्रथमा. तिङ्विभक्तिर्न निहन्यते ॥

[4]एष वा इति ॥ एष मन्त्रोऽग्नेः । अस्येति कर्मणि षष्ठी । तमिममग्नेर्दोहमन्त्रं कण्वः श्रयसः पुत्रोऽवेत् । कथमवगम्यते

यदेतया समिधमादधात्यग्निचिदेव तदग्निं दुहे सप्त ते अग्ने समिधस्सप्त जिह्वा इत्याह सप्तैवास्य साप्तानि प्रीणाति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापतेः ॥ ३४ ॥ आप्त्यै न्यूनया जुहोति न्यूनाद्धि

तया। समिधामिति सं-इधम् । आदधातीत्या-दधाति। अग्निचिदित्यग्नि-चित्। एव। तत्। अग्निम्। दुहे। [9]सप्त। ते। अग्ने। समिध इति सं-इधः। सप्त। जिह्वाः। इति। आह। सप्त। एव। अस्य। साप्तानि। प्रीणाति। पूर्णया। जुहोति। पूर्णः। इव। हि। प्रजापतिरिति प्रजा-पतिः। प्रजापतेरिति प्रजा-पतेः ॥ ३४ ॥ आप्तयै। न्यूनयेति नि-ऊनया।

सोऽवेदित्यत्राह—स खलु कण्वः एनमग्निं तेनानेन मन्त्रेण दुहे दुग्धे। पूर्ववच्छचल्लोपश्च । यदेतयेत्यादि । गतम्* ॥

[9]सप्त ते अग्न इति ॥ आज्यस्य पूर्णां स्रुचं जुहोति । सप्तैवेति । सप्त प्रमाणानि सप्त भवन्त्यग्नेः समिदादि, तानि प्रीणाति अनेन मन्त्रेण होमात्तत्र समिन्धनहेतवः सप्त मरुतः सप्त छन्दांसि वा जिह्वाजा ऋषयः प्रीयमाणाः । प्रियाणि धामानि आहवनीयादीनि धिष्ण्यनामानि वासस्थानानि । होत्रादयो वषट्कर्तारो

*सं. १-५-७.

प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यां अग्निर्देवेभ्यो निलायत स दिशोऽनु प्राविशज्जुह्वन्मनसा दिशो ध्यायेद्दिग्भ्य एवैनमव रुन्धे दध्ना पुरस्ताज्जुहोत्याज्येनोपरिष्टात्तेजश्चैवा-

जुहोति । न्यूनादिति नि–ऊनात् । हि । प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । प्रजानामिति प्र–जानाम् । सृष्ट्यै । [10]अग्निः । देवेभ्यः । निलायत । सः । दिशः । अनु । प्रेति । अविशत् । जुह्वत् । मनसा । दिशः । ध्यायेत् । दिग्भ्य इति दिक्–भ्यः । एव । एनम् । अवेति । रुन्धे । [11]दध्ना । पुरस्तात् । जुहोति ।

होत्राः सप्त । यागविधा अग्निष्टोमादयः सप्त संस्था यान्यग्न्युत्पत्तिस्थानानि भूरादीनि । सप्तशब्द उत्सादिर्द्रष्टव्यः । 'सप्तनोऽञ् छन्दसि' इति अञो विधिः । पूर्णयेति । व्याख्यातम् ।* वर्णकृतपूर्णत्वन्यूनत्वाश्रयणेन । इह तु तदभावात् स्वर्गविषयं द्रष्टव्यम् ॥

[10]अग्निर्देवेभ्य इत्यादि ॥ निलायत निरगच्छत् । 'उपसर्गस्यायतौ' इति लत्वम् । जुह्वदिति । दध्नः पूर्णामौदुम्बरीं पूर्णामाज्यस्य पूर्णां स्रुचं ।द्वितीयामेवेति केचित् ॥

[11]दध्नेत्यादि ॥ एवमुक्तेन प्रकारेण अग्निनिधानात् पूर्वं दध्ना

*सं. ५-१-९.

स्मा इन्द्रियं च समीची दधाति द्वा-
दशकपालो वैश्वानरो भवति द्वादश
मासास्संवथ्सरस्संवत्सरोऽग्निर्वैश्वान-
रस्साक्षात् ॥३५॥ एव वैश्वानरमवं
रुन्धे यत्प्रयाजानूयाजान्कुर्याद्विकं-

आज्येन । उपरिष्टात् । तेजः । च । एव । अस्मै
इन्द्रियम् । च । समीची इति । दधाति । [12]द्वाद-
शकपाल इति द्वादश–कपालः । वैश्वानरः । भव-
ति । द्वादश । मासाः । संवत्सर इति सं–वत्सरः
संवत्सर इति सं–वत्सरः । अग्निः । वैश्वानरः ।
साक्षादिति स–अक्षात् ॥ ३५ ॥ एव । वैश्वान-
रम् । अवेति । रुन्धे । [13]यत् । प्रयाजानूयाजानि-
ति प्रयाज–अनूयाजान् । कुर्यात् । विकस्तिरिति

जुहोति इष्ट्वाऽऽज्येन समीची इति सम्मुखे तस्य स्थापयति । 'चौ'
इति पूर्वपदस्य दीर्घत्वम्, अन्तोदात्तत्वं च ॥

[12]द्वादशकपाल इत्यादि ॥ गतम्* ॥

[13]यदित्यादि ॥ वैश्वानरस्य प्रयाजानुयाजान् कुर्यात् सा वि-
कस्तिः विनाशस्स्यात् यज्ञस्य क्रतोः । तस्माद्दार्विहोमं करोति
प्रयाजादिराश्रावणं च यत्र नास्ति स दर्वीहोमः । इह तु

*सं. २-२-५.

स्तिस्सा यज्ञस्य दर्विहोमं करोति यज्ञस्य प्रतिष्ठित्यै राष्ट्रं वै वैश्वानरो विण्मरुतो वैश्वानरꣳ हुत्वा मारुताञ्जुहोति राष्ट्र एव विशमनु बध्नात्युच्चै वैश्वानरस्या श्रावयत्युपा-

वि–कुस्तिः । सा । यज्ञस्य । दर्विहोममिति दर्वि–होमम् । करोति । यज्ञस्य । प्रतिष्ठित्या इति प्रति–स्थित्यै । [14]राष्ट्रम् । वै । वैश्वानरः । विट् । मरुतः । वैश्वानरम् । हुत्वा । मारुतान् । जुहोति । राष्ट्रे । एव । विशम् । अन्विति । बध्नाति । [15]उच्चैः । वैश्वानरस्य । एति । श्रावयति । उपाꣳश्वि-

'उच्चैर्वैश्वानरस्याश्रावयति' इति वक्ष्यमाणत्वात् प्रयाजाद्यभावमात्रेण दर्वीहोमत्वम् ॥

[14]राष्ट्रं वा इति ॥ वैश्वानरस्याग्नेः सर्वत्रान्तर्बहिश्च भावात् जनसमुदायात्मनां राष्ट्राणां तादर्थ्यात्ताच्छब्द्यम् । विण्मरुत इति । विशः कुटुम्बयः प्रजा जातावेकवचनम् । तत्स्थानीया मरुतः राष्ट्रात्मनो वैश्वानरस्य उद्दीपकत्वात् । तस्मात् वैश्वानरं हुत्वा मारुतान् सप्तकपालान् जुहोति । राष्ट्रे एव विशमनुबध्नाति । अनुक्रमेण स्थापयति ॥

[15]उच्चैरित्यादि ॥ वैश्वानरस्य उच्चैस्त्वान्वयात् तदात्मकं राष्ट्रमुच्चैर्भावेन वर्तमानं मारुतानां नीचैस्त्वान्वयेन नीचैस्त्वेन वर्त-

ऽशु मारुताञ्जुहोति तस्माद्राष्ट्रं वि-
शमत्ति वदति मारुता भवन्ति मरु-
तो वै देवानां विशो देवविशेनैवा-
स्मै मनुष्यविशमव रुन्धे सप्त भ-
वन्ति सप्तगणा वै मरुतो गणश
एव विशमव रुन्धे गणेन गणमनु-

त्युंष–अऽशु । मारुतान् । जुहोति । तस्मात्
राष्ट्रम् । विशम् । अत्तीति । वदति । [16]मारुताः
भवन्ति । मरुतः । वै । देवानाम् । विशः । देववि
शेनेति देव–विशेन । एव । अस्मै । मनुष्यविश
मिति मनुष्य–विशम् । अवेति । रुन्धे । [17]सप्त
भवन्ति । सप्तगणा इति सप्त–गणाः । वै । मरु
तः । गणश इति गण–शः । एव । विशम् । अ
वेति । रुन्धे । [81]गणेन । गणम् । अनुद्रुत्येत्यनु-

माना मरुदात्मिका प्रकृतिरतिवदति प्रभुत्वेनावभम् ? ॥

[16]मारुता इत्यादि ॥ गतम्* । देवविशेनेति । अमुमिति
योगविभागादच् समासान्तः ॥

[17]सप्त इत्यादि ॥ गतम्* । गणश इति । 'बहुगणवतुडति
सङ्ख्या' इति सङ्ख्यात्वात् 'सङ्ख्यैकवचनाच्च' इति शस् ॥

[18]गणेनेति ॥ अत्र सप्तकः सप्तमरुद्गणा मन्त्राः 'ईदृङ्
च'

*सं. २-२-५. †सं. ४-६-५.

द्रुत्यं जुहोति विशमेवास्मा अनुव-
र्त्मानं करोति ॥ ३६ ॥
वसोर्धारां जुहोति वसोर्मे धाराऽ-

त्यं । जुहोति । विशम् । एव । अस्मै । अनुव-
र्मानमित्यनु-वर्त्मानम् । करोति ॥ ३६ ॥

अग्ने प्रेह्यवं स्म दुहे तां प्रजापतेस्साक्षान्म-
नुष्यविशमेकविंशतिश्च ॥ ७ ॥

[1]वसोः । धाराम् । जुहोति । वसोः । मे । धा-

यादयः चत्वारः । ततः आरण्येऽनुवाक्ये द्वौ गणौ 'धुनिश्च'* इत्या-
। राजसूयिका 'उग्रश्च धुनिश्च'* इत्याद्यौ । द्वितीय अग्निश्चित्यः
सृतया'† इत्यादिसप्तमो गणश्शाखान्तरीयः । 'ईदृक्षास एता-
क्षासः'‡ इत्यादिरान्तादनुवाकस्य प्रतिगणमनुषज्यते । तत्र गणे-
जुहोति याज्यास्थानीयेन गणमनुद्रुत्य पूर्वस्य गणस्य वा याज्य-
मुत्तरस्य पुरोनुवाक्यतां वा कृत्वेत्यर्थः । केचिदाहुः—'ईदृङ्'‡
याद्याश्चत्वारो गणाः । 'ईदृक्षासः'‡ इत्यादिजगत्या द्वाव-
वौं । आरण्योऽनुवाक्यो गणचतुर्थ इति । अन्ये तु ब्रुवते—
नामारण्योऽनुवाक्यश्चतुर्थश्शाखान्तरीयस्तु षष्ठः । जगत्या वा प्रथ-
र्वं सप्तमं, शिष्टं सर्वेष्वनुषज्यत इति । अनुवर्त्मानमिति । रा-
विधेयतामित्यर्थः ॥

इति पञ्चमे चतुर्थे सप्तमोनुवाकः ॥

[1]वसोर्धारां जुहोतीति ॥ संज्ञैषा अविच्छिन्नस्यान्त्याहुतिविशे-

*तै. आ. ४-२४,२५. †'धनयन्ति'. ‡सं. ४-६-५.

सदिति वा एषा हूयते घृतस्य वा
एनमेषा धाराऽमुष्मिंल्लोके पिन्व-
मानोप तिष्ठत आज्येन जुहोति ते-
जो वा आज्यं तेजो वसोर्धारा ते-
जसैवास्मै तेजोऽव रुन्धेऽथो का-
मा वै वसोर्धारा कामानेवाव रुन्धे

रा । असत् । इति । वै । एषा । हूयते । घृतस्य
वै । एनम् । एषा । धारा । अमुष्मिन्न् । लोके
पिन्वमाना । उपेति । तिष्ठते । [2]आज्येन । जुहो-
ति । तेजः । वै । आज्यम् । तेजः । वसोः । धा-
रा । तेजसा । एव । अस्मै । तेजः । अवेति । रु-
न्धे । [3]अथो इति । कामाः । वै । वसोः । धारा

---

षस्य । निर्वचनं च करोति—वसोः धनस्य धारा मे अस
अस्तु इति अनेन कामेन एषा हूयते । तस्माद्न्नादिवरिष्ठधनध
राहेतुत्वाच्च वसोर्धारेत्युच्यते इति । अस्तेर्लेटि ‘लेटोडाटौ’ इ
त्यडागमः । घृतस्येत्यादि । गतम् । पिन्वमाना सिञ्चति । पिवि
सेचने । एनं यजमानमुपतिष्ठते ॥

[2]आज्येनेत्यादि ॥ तेजोहेतुत्वादाज्यवत् वसोर्धारायास्ताच्छब्द्यम्

[3]कामा इति ॥ काम्यन्त इति कामाः विषयाः । तद्धेतुत्वा
त्ताच्छब्द्यम् ॥

यं कामयेत प्राणानस्यान्नाद्यं वि ॥
३७॥ छिन्द्यामिति विग्राहं तस्य
जुहुयात्प्राणानेवास्यान्नाद्यं विच्छि-
नत्ति यं कामयेत प्राणानस्यान्ना-
द्यꣳ संतनुयामिति सन्ततां तस्य
जुहुयात्प्राणानेवास्यान्नाद्यꣳ सं तं-

कामान् । एव । अवेति । रुन्धे । [4]यम् । कामयेत । प्राणानिति प्र-अनान् । अस्य । अन्नाद्यमित्यन्न-अद्यम् । वीति ॥ ३७ ॥ छिन्द्याम् । इति । विग्राहमिति वि-ग्राहम् । तस्य । जुहुयात् । प्राणानिति प्र-अनान् । एव । अस्य । अन्नाद्यमित्यन्न-अद्यम् । वीति । छिनत्ति । यम् । कामयेत । प्राणानिति प्र-अनान् । अस्य । अन्नाद्यमित्यन्न-अद्यम् । समिति । तनुयाम् । इति । संततामिति सं-तताम् । तस्य । जुहुयात् । प्राणानिति प्र-अनान् । एव । अस्य । अन्नाद्यमित्यन्न-अद्यम् ।

[4]यमित्यादि ॥ यं यजमानमध्वर्युः कामयेत प्राणांश्चान्नाद्यं च विच्छिन्द्यामिति तस्य विग्राहं विगृह्य विच्छिद्य जुहुयात् । आभीक्ष्ण्ये णमुल् । मन्त्रस्य धाराया विच्छेदं कुर्यात् । सन्ततिरविच्छेदः ॥

नोति द्वादंश द्वादशानिं जुहोति द्वादंश मासांस्संवथ्सरस्संवथ्सरेणैवास्मा अन्नमवं रुन्धेऽन्नं च मेऽक्षुंच्च म इत्यांहैतद्वै ॥ ३८ ॥ अन्नंस्य रूपꣳ रूपेणैवान्नमवं रुन्धेऽग्निश्चं म

समितिं । तनोति । [5]द्वादंश । द्वादशानिं । जुहोति । द्वादंश । मासांः । संवत्सर इतिं सं—वत्सरः। संवत्सरेणेतिं सं—वत्सरेणं । एव । अस्मै । अन्नम्। अवेतिं । रुन्धे । अन्नंम् । च । मे । अक्षुंत् । च । मे । इतिं । आह । एतत् । वै ॥ ३८ ॥ अन्नंस्य। रूपम् । रूपेणं । एव । अन्नंम् । अवेतिं । रुन्धे । [6]अग्निः । च । मे । आपंः । च । मे । इतिं । आ-

[5]द्वादशेति ॥ द्वादशप्रमाणानि सङ्घातरूपाणि द्वादशानि । छान्दसो यः । तेषां मध्ये वक्ष्यमाणानि द्वादशानीति । प्रशस्ततराणि दर्शयितुं तान्येकैकश उपादाय स्तौति—'अन्नं च मेऽक्षुच्च मे' इत्यादिना 'वाजश्च प्रसवश्च द्वादशं जुहोति' इत्यन्तेन । न्यूनत्वेन आवृत्त्या पूरयितव्यानि, आधिक्ये समविभक्तानि । तत्र स्तुतिसमर्थानि विशिष्टानि अवयवपदान्युपादीयन्ते । यद्वा—आदौ चतुश्चत्वारिंशदधिकशतसङ्ख्यानां त्रयाणां च द्वादशानां मन्त्राणां स्तुतिः । 'अन्नं च मे' इत्यादिरवयवस्तुतिरिति ॥

[6]योनिः कारणम् ॥

आपश्च म इत्याहैषा वा अन्नस्य योनिस्सयोन्येवान्नमवं रुन्धेऽर्धेन्द्राणि जुहोति देवता एवावं रुन्धे यत्सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधाति

ह । एषा । वै । अन्नस्य । योनिः । सयोनीति स-योनि । एव । अन्नम् । अवेति । रुन्धे । [7]अर्धेन्द्राणीत्यर्ध-इन्द्राणि । जुहोति । देवताः । एव । अवेति । रुन्धे । यत् । सर्वेषाम् । अर्धम् । इन्द्रः । प्रतीति । तस्मात् । इन्द्रः । देवतानाम् । भूयिष्ठभाक्तम इति भूयिष्ठभाक्-तमः । इन्द्रम् । उत्तरमित्युत्-तरम् । आह । इन्द्रियम् । एव । अस्मिन् । उपरिष्टात् । दधाति । [8]यज्ञायुधानीति यज्ञ-

[7]अर्धेन्द्राणि अर्धमिन्द्रो येषां तानि 'अग्निश्च म इन्द्रश्च मे'* इत्यादीनि । यत्सर्वेषां देवानां अग्न्यादीनां तत्प्रति इन्द्रो वर्तते प्रतिनिधिर्भवति । यद्वा—सर्वत्र सर्वेषामर्धं इन्द्रोऽर्हति, अर्धं सर्वे देवाः, सर्वेषां हविषामर्धं प्रति स्वामित्वेन इन्द्रो वर्तत इति । तस्मादत्र इन्द्रो देवानामर्धेन भूयिष्ठं भागं भजते । इन्द्रमुत्तरमिति । उद्गततरं अन्त्यम् ॥

[8]यज्ञायुधानीत्यादि ॥ 'इध्मश्च मे'† इत्यादीनि ॥

*सं. ४-७-६. †सं. ४-७-८.

यज्ञायुधानिं जुहोति यज्ञः॥ ३९ ॥
वै यंज्ञायुधानिं यज्ञमेवावं रुन्धेऽथो
एतद्वै यज्ञस्यं रूपꣳ रूपेणैव यज्ञम-
वं रुन्धेऽवभृथश्चं मे स्वगाकारश्चं म
इत्यांह स्वगाकृंत्या अग्निश्चं मे
घर्मश्चं म इत्यांहैतद्वै ब्रंह्मवर्चसस्यं
रूपꣳ रूपेणैव ब्रंह्मवर्चसमवं रुन्ध

आयुधानिं । जुहोति । यज्ञः ॥ ३९ ॥ वै । यज्ञा-युधानीतिं यज्ञ–आयुधानिं । यज्ञम् । एव । अवेतिं । रुन्धे । अथो इतिं । एतत् । वै । यज्ञस्यं । रूपम् । रूपेणं । एव । यज्ञम् । अवेतिं । रुन्धे । [9]अवभृथ इत्यंव–भृथः । च । मे । स्वगाकार इतिं स्वगा–कारः । च । मे । इतिं । आह । स्वगाकृं-त्या इतिं स्वगा–कृत्यै । [10]अग्निः । च । मे । घ-र्मः । च । मे । इतिं । आह । एतत् । वै । ब्रह्म-वर्चसस्येतिं ब्रह्म–वर्चसस्यं । रूपम् । रूपेणं । ए-

---

[9]स्वगाकृत्या इति ॥ यथास्वमात्मीयभागप्रतिलम्भनाय । छा-न्दसो डाचः 'ऊर्यादिच्वि' इति गतित्वात् 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[10]ब्रह्मवर्चसस्येति ॥ अग्न्यादीनां तत्साधनत्वात् ॥

ऋक्चं मे सामं च म इत्यांह॥४०
एतद्वै छन्दंसाꣳ रूपꣳ रूपेणैव छन्दा-
ꣳस्यवं रुन्धे गर्भांश्च मे वथ्साश्चं म
इत्यांहैतद्वै पंशूनाꣳ रूपꣳ रूपेणैव
पशूनवं रुन्धे कल्पांञ्जुहोत्यक्लृंप्तस्य
क्लृप्त्यै युग्मदयुजे जुंहोति मिथुन-

व। ब्रह्मवर्चसमितिं ब्रह्म–वर्चसम्। अवेतिं। रुन्धे।
ऋक्। च। मे। सामं। च। मे। इतिं। आह॥४०॥
एतत्। वै। छन्दंसाम्। रूपम्। रूपेणं। एव। छ-
न्दाꣳसि। अवेतिं। रुन्धे। गर्भाः। च। मे। व-
त्साः। च। मे। इतिं। आह। एतत्। वै। पशू-
नाम्। रूपम्। रूपेणं। एव। पशून्। अवेतिं। रु-
न्धे। [11]कल्पान्। जुहोति। अक्लृंप्तस्य। क्लृप्त्यै।
[12]युग्मदयुजे इतिं युग्मत्–अयुजे। जुहोति। मिथु-

---

[11]कल्पानिति ॥ 'आयुर्यज्ञेन कल्पतां'* इत्यादिद्वादश। अक्लृप्तस्य असम्पन्नस्य सम्पत्त्यै भवति ॥

[12]युग्मदयुजे ॥ योगो युक् सदृशसंख्यान्वयारब्धत्वं तद्वती द्विचतुरादि। तद्रहिता अयुक् एकादि। युग्मच्च अयुक्चेति 'द्वन्द्वाच्चुदषहान्तात्' इति व्यत्ययेन इतरेतरयोगेऽपि अच् समासान्तः।

*सं.४-७-१०.

त्वायोत्तरावती भवतोऽभिक्रान्त्या एका च मे तिस्रश्च म इत्याह देवछन्दसं वा एका च तिस्रश्च ॥४१॥ मनुष्यछन्दसं चतस्रश्चाष्टौ च देवछन्दसं चैव मनुष्यछन्दसं चाव रु-

नत्वायेति मिथुन-त्वाय । उत्तरावती इत्युत्तरा-वती । भवतः । अभिक्रान्त्या इत्यभि-क्रान्त्यै एका । च । मे । तिस्रः । च । मे । इति । आ-ह । देवछन्दसमिति देव-छन्दसम् । वै । एका च । तिस्रः । च ॥४१॥ मनुष्यछन्दसमिति मनुष्य-छन्दसम् । चतस्रः । च । अष्टौ । च । देवछन्दस-मिति देव-छन्दसम् । च । एव । मनुष्यछन्दस

---

मिथुनत्वायेति विधाद्वयलाभेन । उत्तरावती इति । उत्तरोत्तर संख्यावत्यौ युग्मदयुजे भवतः 'एका च मे तिस्रश्च मे' इति । उ त्तरा 'चतस्रश्च मे अष्टौ च मे' इति चतुरुत्तरा, यस्मा एवं तस्मा दभिक्रान्त्यै भवतो युग्मदयुजे । अभिक्रमणं उपरिगमनं स्वर्ग प्राप्तिः, शत्रूणामाक्रमणं वा । केचिदाहुः—उत्तरावत्त्वं विधीय इत्युत्तरसंख्यासहिताभ्यां कर्तव्य इति । यथा 'एका च मे तिस्र श्च मे स्वाहा चतस्रश्च मेऽष्टौ च मे स्वाहा' इति । देवछन्दसमि देवानां प्रीतिहेतुः 'एका च मे तिस्रश्च मे' इत्येतावत्युत्तरा अयुक सङ्ख्या, चतस्रश्च अष्टौ चेत्येवं चतुरुत्तरा युक्संख्या मनुष्याण

न्ध आ त्रयंस्त्रिंशतो जुहोति त्रयंस्त्रिंशद्वै देवता देवता एवावं रुन्ध आऽष्टाचंत्वारिंशतो जुहोत्यष्टाचंत्वारिंशदक्षरा जगंती जागंताः पशवो जगंत्यैवास्मैं पशूनवं रुन्धे वाजंश्च प्रसवश्चेतिं द्वादशं जुं-

मितिं मनुष्य–छन्दसम् । च । अवेतिं । रुन्धे । [13]एतिं । त्रयंस्त्रिंशत इति त्रयंः–त्रिंशतः । जुहोति । त्रयंस्त्रिंशदिति त्रयंः–त्रिंशत् । वै । देवताः । देवताः । एव । अवेतिं । रुन्धे । एतिं । अष्टाचंत्वारिंशत इत्यष्टा–चत्वारिंशतः । जुहोति । अष्टाचंत्वारिंशदक्षरेत्यष्टाचंत्वारिं–शत्–अक्षरा । जगंती । जागंताः । पशवंः । जगंत्या । एव । अस्मै । पशून् । अवेतिं । रुन्धे । [14]वाजंः । च । प्रसव इतिं प्र–सवः । च । इतिं ।

प्रीतिहेतुरिति । 'अनसन्तान्न पुंसकाच्छन्दसि' इति अच् समासान्तः ॥

[13]आ त्रयस्त्रिंशत इत्यादि ॥ गतम् ॥

[14]द्वादशं इति ॥ द्वादशकमित्येके । द्वादशप्रमाणं सङ्घातमित्येके ॥

होति द्वादंश मासांस्संवथ्सरस्संव-
थ्सर एव प्रतिं तिष्ठति ॥ ४२ ॥
अग्निर्दे्वेभ्योपांक्रामद्भागधेयंमिच्छ-
मांनस्तं देवा अंब्रुवन्नुपं न आ वं-

द्वादशम् । जुहोति । द्वादंश । मासाः । संवत्सर इतिं सं-वत्सरः । संवत्सर इतिं सं-वत्सरे एव । प्रतीतिं । तिष्ठति ॥ ४२ ॥

वि वै यज्ञस्सामं च म इत्यांह च तिस्रश्चैका-
न्न पंञ्चाशच्चं ॥ ८ ॥

[1]अग्निः । देवेभ्यंः । अपेतिं । अक्रामत् । भागधेयमितिं भाग-धेयंम् । इच्छमांनः । तम् । देवाः । अब्रुवन् । उपेतिं । नः । एतिं । वर्तस्व ।

इति पञ्चमे चतुर्थे अष्टमोनुवाकः.

---

[1]अग्निर्देवेभ्य इत्यादि ॥ भागधेयमसाधारणमिच्छन् देवेभ्योपागच्छत् । तमित्यादि । गतम् । वाजप्रसवीयमिति । 'वाजो नस्सप्त'* इति सप्तभिस्सप्तभिः यत्क्रियते वाजोऽन्नं तस्य प्रसवः प्रसूतिरुत्पादनं तत्प्रयोजनेन होमः वाजप्रसवीयः । अनुप्रवचनादिलक्षणश्छः । चतुर्दशौषधिहोमस्य संज्ञा । जुहवन्निति । जुहुयुः ।

*सं. ४-७-१२.

तस्व हव्यं नो वहेति सोऽब्रवीद्वरं
वृणै मह्यमेव वाजप्रसवीयं जुहव-
न्निति तस्मादग्नये वाजप्रसवीयं जु-
ह्वति यद्वाजप्रसवीयं जुहोत्यग्निमेव
तद्भागधेयेन समर्धयत्यथो अभिषे-
क एवास्य स चतुर्दशाभिर्जुहोति स-

हव्यम् । नः । वह । इति । सः । अब्रवीत् । व-
रम् । वृणै । मह्यम् । एव । वाजप्रसवीयमिति
वाज–प्रसवीयम् । जुहवन् । इति । तस्मात् । अ-
ग्नये । वाजप्रसवीयमिति वाज–प्रसवीयम् । जु-
ह्वति । यत् । वाजप्रसवीयमिति वाज–प्रसवीयम्।
जुहोति । अग्निम् । एव । तत् । भागधेयेनेति
भाग–धेयेन । समिति । अर्धयति । अथो इति ।
अभिषेक इत्यभि–सेकः । एव । अस्य । सः ।
[2]चतुर्दशभिरिति चतुर्दश–भिः । जुहोति । सप्त ।

पञ्चमो लकारः । अथो अपि च अभिषेक एवास्याग्नेः स वाज-प्रसवीयः देवानामादित्ये स्थापनात् । न केवलं भागधेयसमृद्धिरेवास्यानेन भवति ॥

[2]चतुर्दशभिरोषधीभिः । 'तृतीया च होश्छन्दसि' इति तृतीया । आहुतिश्च । सप्त ग्राम्या इति । उभयीषां होमादु-

प्त ग्राम्या ओषधयस्सप्त ॥ ४३ ॥
आरण्या उभयीषामवरुद्ध्या अन्नं-
स्यान्नस्य जुहोत्यन्नस्यान्नस्यावरु-
द्ध्या औदुम्बरेण स्रुवेण जुहोत्यू-
र्ग्वा उदुम्बर ऊर्गन्नमूर्जैवास्मा ऊ-
र्जमन्नमव रुन्धेऽग्निर्वै देवानामभि-

ग्राम्याः । ओषधयः । सप्त ॥ ४३ ॥ आरण्याः । उभयीषाम् । अवरुद्ध्या इत्यव–रुद्ध्यै । [3]अन्नस्यान्नस्येत्यन्नस्य–अन्नस्य । जुहोति । अन्नस्यान्नस्येत्यन्नस्य–अन्नस्य । अवरुद्ध्या इत्यव–रुद्ध्यै । [4]औदुम्बरेण । स्रुवेण । जुहोति । ऊर्क् । वै । उदुम्बरः । ऊर्क् । अन्नम् । ऊर्जा । एव । अस्मै । ऊर्जम् । अन्नम् । अवेति । रुन्धे । [5]अग्निः । वै । देवानाम् ।

---

भयीषां लाभः । तत्र ग्राम्याः—तिलमाषा व्रीहियवाः प्रियङ्गवोऽणवो गोधूमा इति । अथारण्याः—शामाकनीवारजार्तिलगवीधुका हाळका वास्याणवश्च ॥

[3]अन्नस्यान्नस्येति ॥ पृथक् चतुर्दशान्नस्येति । ‘अनुदात्तं च’ इति द्वितीयस्यानुदात्तत्वम् ॥

[4]औदुम्बरेणेत्यादि ॥ गतम् ॥

[5]अग्निर्वा इत्यादि ॥ गतम् । उक्तं हि ‘अथो अभिषेक

षिक्तोऽग्निचिन्मनुष्याणां तस्मादग्नि-
चिद्वर्षति न धावेदवरुद्धꣳ ह्यस्या-
न्नमन्नमिव खलु वै वर्षं यद्धावेदन्ना-
द्यांद्धावेदुपावर्तेतान्नाद्यमेवाभि॥४४॥

अभिषिक्त इत्यभि–सिक्तः । अग्निचिदित्यग्नि–चित् । मनुष्याणाम् । तस्मात् । अग्निचिदित्यग्नि–चित् । वर्षति । न । धावेत् । अवरुद्धमित्यव–रुद्धम् । हि । अस्य । अन्नम् । अन्नम् । इव । खलु । वै । वर्षम् । यत् । धावेत् । अन्नाद्यादित्यन्न–अद्यात् । धावेत् । उपावर्तेतेत्युप–आवर्तेत । अन्नाद्यमित्यन्न–अद्यम् । एव । अभीति ॥ ४४ ॥ उपावर्तेत इ-

---

एवास्य ' इति देवानामभिषिक्तः । तद्वदग्निचिन्मनुष्याणां मध्ये अभिषिक्तः । उक्तं च 'तस्मान्नासीनं यजमानमग्निमन्वारब्धं संपातैरभिषिञ्चति ' इति । तस्मादित्यादि । वर्षति देवे अग्निचित् न धावेत् । परिगृह्य हेतुमाह—अस्य ह्यन्नमरुद्धं संपाताभिषेकेणैव लब्धत्वात् । तथाऽन्नं भवतु वर्षति मा यातव्यमित्यत आह—अन्नमिव खलु वै वर्षं अन्नकारणकारणत्वात् अन्नमेवेति भावः । तस्माद्यदि धावेत् अन्नादत एवोत्पत्तेः न वर्षाभिमुख्येन गच्छेत्, यथाऽभिमुखं वर्षमागच्छति ततो गच्छेत् । तथा कुर्वन्नन्नाद्यमेव आ-भिमुख्येनोपगच्छति ॥

उपावर्तते नक्तोषासेति कृष्णायै श्वे-
तवंत्सायै पयंसा जुहोत्यह्नैवास्मै
रात्रिं प्र दांपयति रात्रियाऽहंरहोरा-
त्रे एवास्मै प्रत्ते कामंमन्नाद्यं दुहाते
राष्ट्रभृतो जुहोति राष्ट्रमेवावं रुन्धे

त्युंप–आवर्तते । [6]नक्तोषासां । इतिं । कृष्णायैं
श्वेतवंत्साया इतिं श्वेत–वत्सायै । पयंसा । जुहो
ति । अह्ना । एव । अस्मै । रात्रिंम् । प्रेतिं । दा
पयति । रात्रिया । अहंः । अहोरात्रे इत्यंहः–रा
त्रे । एव । अस्मै । प्रत्ते इतिं । कामंम् । अन्नाद्य
मित्यंन्न–अद्यंम् । दुहाते इतिं । [7]राष्ट्रभृत इ
राष्ट्र–भृतंः । जुहोति । राष्ट्रम् । एव । अवेतिं

[6]अह्नैवेति ॥ अह्ना वत्सस्थानीयेन राज्यात्मिकां गां प्रदाप
यति प्रस्नुतस्तनीं करोति । रात्र्या वत्सस्थानीयया अ
रात्मिकां गां प्रदापयति । ततश्चाहोरात्रे प्रत्ते प्रस्नुतस्तने स
काममन्नाद्यं दुहाते । 'हेमन्तशिशिरावहोरात्रे च' इति नपुं
कत्वम् । दातुमारब्धे प्रत्ते । आदिकर्मणि निष्ठा, 'अच उप
र्गात्तः' इति तादेशः ॥

[7]राष्ट्रभृत इति ॥ 'ऋताषाड्'* इत्याद्याः षड्भिःषड्भिः पर्या
द्वादश जुहोति ॥

*सं. ३-४-७.

षड्भिर्जुहोति षड्वा ऋतवं ऋतुष्वेव प्रति तिष्ठति भुवंनस्य पत इति रथमुखे पञ्चाहुतीर्जुहोति वज्रो वै रथो वज्रेणैव दिशंः ॥ ४५ ॥ अभि जंयत्यग्निचितꣳ ह वा अमुष्मिंल्लोके वातोऽभि पंवते वातनामानि जुहोत्यभ्येवैनममुष्मिंल्लोके वातः प-

रुन्धे । षड्भिरिति षट्–भिः । जुहोति । षट् । वै । ऋतवंः । ऋतुषुं । एव । प्रतीति । तिष्ठति । [8]भुवंनस्य । पते । इति । रथमुख इति रथ–मुखे । पञ्चं । आहुतीरित्या–हुतीः । जुहोति । वज्रः । वै । रथः । वज्रेण । एव । दिशंः ॥ ४५ ॥ अभीति । जयति । [9]अग्निचितमित्यग्नि–चितंम् । ह । वै । अमुष्मिन्न् । लोके । वातंः । अभीति । पवते । वातनामानीति वात–नामानि । जुहोति । अभीति । एव । एनम् । अमुष्मिन्न् । लोके । वातंः ।

[8]पञ्चेति ॥ 'भुवनस्य पते '* इति पञ्चभिःपञ्चभिः पर्यायैः ॥

[9]अग्निचितं हेत्यादि ॥ आभिमुख्येन आगत्य सुखयति वातः ।

*सं. ३-४-७.

वते त्रीणि जुहोति त्रयं इमे लोका
एभ्य एव लोकेभ्यो वातमवं रुन्धे
समुद्रोसि नभंस्वानित्यांहैतद्वै वातं-
स्य रूपꣳ रूपेणैव वातमवं रुन्धे-
ऽञ्जलिनां जुहोति न ह्येतेषांमन्य-
थाऽऽहुंतिरवकल्पंते ॥ ४६ ॥

पवते । त्रीणि । जुहोति । त्रयंः । इमे । लोकाः
एभ्यः । एव । लोकेभ्यंः । वातंम् । अवेतिं । रु-
न्धे । समुद्रः । असि । नभंस्वान् । इतिं । आह
एतत् । वै । वातंस्य । रूपम् । रूपेणं । एव । वा-
तंम् । अवेतिं । रुन्धे । [10]अञ्जलिनां । जुहोति
न । हि । एतेषांम् । अन्यथां । आहुंतिरित्या–हु-
तिः । अवकल्पंत इत्यंव–कल्पंते ॥ ४६ ॥

ओषंधयस्सप्ताभि दिशोऽन्यथा द्वे चं ॥ ९ ॥

---

वातनामानीति । ‘समुद्रोसि नभस्वान्’* इत्यादीनि । गतमन्यत्

[10]अञ्जलिनेति ॥ विधिः । न ही ति । अञ्जलिव्यतिरेकेण एतेषामाहु-
तिर्न सम्भवति । मन्त्रभेदेनाहुतिभेदमाश्रित्य एतेषामिति बहुवचनम्

इति पञ्चमे चतुर्थे नवमोनुवाकः.

---

*सं. ४-७-१२.

सुवर्गाय वै लोकाय देवरथो युज्यते यत्राकूताय मनुष्यरथ एष खलु वै देवरथो यदग्निरग्निं युनज्मि शवसा घृतेनेत्याह युनक्त्येवैनꣳ स एनं युक्तस्सुवर्गं लोकमभि वहति

[1]सुवर्गायेति सुवः—गाय । वै । लोकाय । देवरथ इति देव—रथः । युज्यते । यत्राकूतायेति यत्र—आकूताय । मनुष्यरथ इति मनुष्य—रथः । एषः । खलु । वै । देवरथ इति देव—रथः । यत् । अग्निः । अग्निम् । युनज्मि । शवसा । घृतेन । इति । आह । युनक्ति । एव । एनम् । सः । एनम् । युक्तः । सुवर्गमिति सुवः—गम् । लोकम् । अभीति ।

---

[1]सुवर्गायेत्यादि ॥ अग्नियोगविधिः । स्वर्गायैव लोकाय देवरथो युज्यते । मनुष्यरथस्तु यत्राकूताय यत्रक्वचिदाकूताय अभिप्रेताय देशाय यत्राभिप्रेतं देशं गन्तुं युज्यते । उभयत्रापि 'क्रियार्थोपपदस्य' इति कर्मणि चतुर्थी । प्रसिद्ध एव मनुष्यरथः कः पुनरसौ देवरथ इत्याह—एष इति । देवानां रमयिता रथः इष्टप्राप्तिहेतुत्वात् 'अग्निं युनज्मि'* इत्यादिभिः तिसृभिरेनमग्निं युनक्त्येव अभिभवनक्षममेव करोति ॥

---

*सं. ४-७-१३.

यथ्सर्वाभिः पञ्चभिर्युञ्ज्याद्युक्तोऽस्याग्निः प्रच्युतस्स्यादप्रतिष्ठिता आहुतयस्स्युरप्रतिष्ठितास्स्तोमा अप्रतिष्ठितान्युक्थानि तिसृभिः प्रातस्सवनेऽभि मृशति त्रिवृत् ॥ ४७ ॥ वा अग्निर्यावानेवाग्निस्तं युनक्ति यथाऽ-

वहति । [2]यत् । सर्वाभिः । पञ्चभिरिति पञ्च-भि युञ्ज्यात् । युक्तः । अस्य । अग्निः । प्रच्युत इ प्र-च्युतः । स्यात् । अप्रतिष्ठिता इत्यप्रति-स्थि ताः । आहुतय इत्या-हुतयः । स्युः । अप्रतिष्ठि इत्यप्रति-स्थिताः । स्तोमाः । अप्रतिष्ठितानीत्य प्रति-स्थितानि । उक्थानि । तिसृभिरिति तिसृ भिः । प्रातस्सवन इति प्रातः-सवने । अभीति मृशति । त्रिवृदिति त्रि-वृत् ॥ ४७ ॥ वै । अग्निः यावान् । एव । अग्निः । तम् । युनक्ति । यथा

---

[2]यदित्यादि ॥ सर्वाभिः पञ्चभिरपि ऋग्भिर्युञ्ज्यात् युगप प्रातस्सवने तदाऽस्य युक्तो गमनयोग्यो जातस्तदानीमेव प्रच्यु स्स्यात् गन्तव्यं प्रतिगच्छेत् । तस्मिन्गते अग्न्यभावात् अप्रति ता अप्रतिष्ठाने आहुतयस्स्युः स्तोमा उक्थानि च । तस्मात् स्तात् प्रातरनुवाकात्तिसृभिः आद्याभिरभिमृशन् अग्निं युनक्ति

नंसि युक्त आधीयतं एवमेव तत्प्रत्याहुतयस्तिष्ठन्ति प्रति स्तोमाः प्रत्युक्थानि यज्ञायज्ञियस्य स्तोत्रे द्वाभ्यांमभि मृंशत्येतावान् वै यज्ञो यावांनग्निष्टोमो भूमा त्वा अस्यातं ऊर्ध्वः क्रियते यावांनेव यज्ञस्तमं-

अनंसि । युक्ते । आधीयत इत्यां–धीयते । एवम् । एव । तत् । प्रतीति । आहुतय इत्या–हुतयः । तिष्ठन्ति । प्रतीति । स्तोमाः । प्रतीति । उक्थानि । [3]यज्ञायज्ञियस्य । स्तोत्रे । द्वाभ्याम् । अभीति । मृशति । एतावान् । वै । यज्ञः । यावान् । अग्निष्टोम इत्यंग्नि–स्तोमः । भूमा । तु । वै । अस्य । अतः । ऊर्ध्वः । क्रियते । यावान् । एव । यज्ञः ।

---

त्रित्वान्वयात्त्रिवृदग्निः सर्वोऽपि युक्तो भवति । ततश्च यथाऽनसि शकटे युक्ते गमनयोग्ये कृते आधीयते वोढव्यं द्रव्यजातमेवमेवैतत् । तस्मिन् अप्रच्युते आहुत्यादयः प्रतितिष्ठन्ति द्वाभ्यां युक्तत्वात् न सहसा प्रच्युत इति भावः । उभयत्रापि 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते ॥

[3]कस्तर्हि ताभ्यामुपयोग इत्याह—यज्ञायज्ञियस्य यज्ञायज्ञशब्दोऽस्मिन् अस्तीति 'मतौ छस्सूक्तसाम्नोः' इति छः । यज्ञायज्ञियमग्निष्टोमसाम येनाग्निष्टोमः संतिष्ठते 'यज्ञायज्ञिय' इत्येतद्योनिकम् ।

न्ततोऽन्वारोहति द्वाभ्यां प्रतिष्ठित्या
एकयाऽप्रस्तुतं भवत्यथ ॥ ४८ ॥ अ-
भि मृशत्युपैनमुत्तरो यज्ञो नमत्यथो
सन्तत्यै प्र वा एषोऽस्माल्लोकाच्चय-

तम् । अन्ततः । अन्वारोहतीत्यनु–आरोहति । द्वा
भ्याम् । प्रतिष्ठित्या इति प्रति–स्थित्यै । एकया
अप्रस्तुतमित्यप्र–स्तुतम् । भवति । अथ ॥ ४८ ।
अभीति । मृशति । उपेति । एनम् । उत्तर इत्युत्-
तरः । यज्ञः । नमति । अथो इति । संतत्या इति
सं–तत्यै । [4]प्रेति । वै । एषः । अस्मात् । लोकात्

तत्र स्तोत्रकाले द्वाभ्यां शिष्टाभ्यां अन्तराभिमृशति । एतावानित्यादि
अग्निष्टोम एव सर्वोऽपि यज्ञः नैतद्व्यतिरेकेण यज्ञोऽन्योऽस्ति । न
उक्थ्यादयोऽन्ये यज्ञाः सन्तीत्यत आह—भूमा त्वेति । अस्यैव भू
मा वृद्धिः सोत ऊर्ध्वमुक्थ्यादि क्रियते, न तु यज्ञान्तरम् । तस्मा
त्सर्वं ततोऽन्वारोहति यावत् । पूर्ववन्निघाताभावः । अथास्मिन्का
ले द्वाभ्यामभिमृशति तत उत्तरो यज्ञ उक्थ्यादिरेनं उपनम
शीघ्रमन्त्यायास्तोत्रीयायाः स्थापनात् पूर्वं 'विश्वस्य मूर्धन्नि
तिष्ठसि श्रितः'* इति च मन्त्रलिङ्गात् । अथो अपि च संत
अविच्छेदाय यज्ञानां भवति समाप्ते चेत् यज्ञायज्ञिये स्यात् स
माप्तत्वात् यज्ञविच्छेदस्य ॥

[4]प्र वा एष इति ॥ पुनश्चितिविधिः । अस्माद्यथावस्थित

*सं. ४-७-१३.

वते यो॑ऽग्निं चि॑नु॒ते न वा ए॒तस्या॑-
निष्ट॒क आहु॑ति॒रव॑ कल्पते॒ यां वा ए॒-
षो॑ऽनिष्ट॒क आहु॑तिं जु॒होति॒ स्रव॑ति॒
वै सा ताꣳ स्रव॑न्तीं य॒ज्ञोऽनु परा॑
भवति य॒ज्ञं यज॑मानो॒ यत्पु॑नश्चि॒तिं
चि॑नु॒त आहु॑तीना॒ं प्रति॑ष्ठित्यै॒ प्रत्या-

च्यव॒ते॒ । यः । अ॒ग्निम् । चि॒नु॒ते । न । वै । ए॒तस्य॑ । अ॒नि॒ष्ट॒के । आहु॑ति॒रित्या-हु॒तिः । अवेति॑ । क॒ल्प॒ते॒ । याम् । वै । ए॒षः । अ॒नि॒ष्ट॒के । आहु॑ति॒मित्या-हु॒तिम् । जु॒होति॑ । स्रव॑ति । वै । सा । ताम् । स्रव॑न्तीम् । य॒ज्ञः । अनु॑ । परेति॑ । भ॒व॒ति॒ । य॒ज्ञम् । यज॑मानः । यत् । पु॒न॒श्चि॒तिमिति॑ पुनः-चि॒तिम् । चि॒नु॒ते । आहु॑तीना॒मित्या-हु॒तीना॒म् । प्रति॑ष्ठित्या॒ इति॒ प्रति॑-स्थि॒त्यै॒ । प्रतीति॑ । आहु॑तय॒ इत्या-

---

लोकात् अग्निचित्प्रच्यवते अपगच्छति । तस्मादेतस्य अनिष्टके स्थाने आहुतिर्नावकल्पते यथावस्थिते ह्यग्निचितः पुनश्चितीष्टकारहिते चित्याग्नौ आहुतिर्न युज्यते यदि तादृशे जुहुयात् सा आहुतिः स्रवति नश्यति । अनन्तरं च यज्ञो यजमानश्च पराभवतः । पुनश्चितेस्तु चयनात् सर्वदोषाप्रसङ्ग इति । अन्य आहुः—अस्मिन्काले अग्निहोत्रादिकं यत्कर्तव्यं यावज्जीवादिविधानात् अ-

हुतयस्तिष्ठन्ति ॥४१॥ न यज्ञः परा भवति न यजमानोष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रेणैवैनं छन्दसा चिनुते यदेकादश त्रैष्टुभेन यद्द्वादश जागतेन छन्दोभिरेवैनं चि-

हुतयः । तिष्ठन्ति ॥ ४१ ॥ न । यज्ञः । पराभवतीति परा–भवति । न । यजमानः । [5]अष्टौ । उपेति । दधाति । अष्टाक्षरेत्यष्टा–अक्षरा । गायत्री । गायत्रेण । एव । एनम् । छन्दसा । चिनुते । यत् । एकादश । त्रैष्टुभेन । यत् । द्वादश । जागतेन । छन्दोभिरिति छन्दः–भिः । एव । एनम् । चिनुते । न-

वश्यकर्तव्यं च तस्मादप्येष प्रच्यवते न ह्यग्निचितोनिष्टकचिते देशे आहुतिस्सम्भवति । तस्माद्यामाहुतिमग्निहोत्रादिमनिष्टके जुहोति सा नश्यति । यज्ञादिश्च पराभवति । तस्मात् पुनश्चितिराहुतीनां अग्निहोत्रादीनां अपि प्रतिष्ठित्यै अस्रवणाय भवतीति ॥

[5]अष्टाविति ॥ 'येनर्षयः'* इत्यादिभिः । यदेकादशेति । उपदधातीत्येव । त्रैष्टुभेनेति । उपदधातीत्येवैनं छन्दसा चिनुत इत्येव एवमुत्तरत्रापि । नपात्क इति । नपात्को नामायं पुनश्चितिराहुतीनां अग्निहोत्रादीनां अपि प्रतिष्ठित्यै । अग्निर्नपात् नप्ता चतु

*सं. ४-७-१३.

नुते नपात्को वै नामैषोऽग्निर्यत्पुनश्चितिर्य एवं विद्वान्पुनश्चितिं चिनुत आ तृतीयात्पुरुषादन्नमत्ति यथा वै पुनराधेयं एवं पुनश्चितिर्योऽग्न्याधेयेन न ॥ ५० ॥ ऋध्नोति स पुनराधेयमा धत्ते योऽग्निं चित्वा नर्ध्नोति

पात्कः । वै । नाम । एषः । अग्निः । यत् । पुनश्चितिरिति पुनः–चितिः । यः । एवम् । विद्वान् । पुनश्चितिमिति पुनः–चितिम् । चिनुते । एति । तृतीयात् । पुरुषात् । अन्नम् । अत्ति । [6]यथा । वै । पुनराधेय इति पुनः–आधेयः । एवम् । पुनश्चितिरिति पुनः–चितिः । यः । अग्न्याधेयेनेत्यग्नि–आधेयेन । न ॥ ५० ॥ ऋध्नोति । सः । पुनराधेयमिति पुनः–आधेयम् । एति । धत्ते । यः । अग्निम् । चित्वा । न । ऋ-

---

र्थः पुत्रस्थानीयः । तस्मात्स एष पूर्वान् त्रीन् पुरुषान् पुरुषानन्तरोपि तृतीयं पुरुषमपि व्याप्य तैस्सहान्नमत्ति । यद्वा— न पातयतीति नपात् 'न भ्राणणपात' इति निपात्यते । अपत्यसन्तानकारीत्यर्थः । अथ समृद्ध्यर्थतां पुनश्चितेराह ॥

[6]यथेत्यादि ॥ गतम् । अ....त्यादिश्च समाप्तौ कोपहेतुना पुनश्चित्येति मन्यते । चेतव्येति । पुनश्चित्यैव । चितेः पूरणे निघा-

स पुनश्चितिं चिनुते यत्पुनश्चितिं
चिनुत ऋद्ध्या अथो खल्वाहुर्न चे-
तव्येति रुद्रो वा एष यदग्निर्यथा
व्याघ्रꣳ सुप्तं बोधयति तादृगेव त-
दथो खल्वाहुश्चेतव्येति यथा वसी-
याꣳसं भागधेयेन बोधयति तादृगे-
व तन्मनुरग्निमचिनुत तेन नार्ध्नोत्स

ध्नोति । सः । पुनश्चितिमिति पुनः–चितिम् । चि-
नुते । यत् । पुनश्चितिमिति पुनः–चितिम् । चि-
नुते । ऋद्ध्यै । अथो इति । खलु । आहुः । न
चेतव्या । इति । रुद्रः । वै । एषः । यत् । अग्निः
यथा । व्याघ्रम् । सुप्तम् । बोधयति । तादृक्
एव । तत् । अथो इति । खलु । आहुः । चेतव्या
इति । यथा । वसीयाꣳसम् । भागधेयेनेति भाग-
धेयेन । बोधयति । तादृक् । एव । तत् । [7]मनुः
अग्निम् । अचिनुत । तेन । न । आर्ध्नोत् । सः

---

ताभावः । किञ्च यो भागधेयेन उपहारं विबोधयति स खलु तोष
यत्येव तं न कोपयति ॥

[7]मनुरित्यादि ॥ गतम् । उक्तमर्थं शिष्टाचारेणापि प्रथयति ।

एतां पुनश्चितिमपश्यत्तामचिनुत त-
या वै स आर्ध्नोद्यत्पुनश्चितिं चिनुत
ऋद्ध्यै ॥ ५१ ॥
छन्दश्चितं चिन्वीत पशुकामः पशवो
वै छन्दांसि पशुमानेव भवति

एताम् । पुनश्चितिमिति पुनः—चितिम् । अपश्यत् । ताम् । अचिनुत । तया । वै । सः । आर्ध्नोत् । यत् । पुनश्चितिमिति पुनः—चितिम् । चिनुते । ऋद्ध्यै ॥ ५१ ॥

त्रिवृदथ तिष्ठन्त्यग्न्याधेयेन नाचिनुत
सप्तदश च ॥ १० ॥

[1]छन्दश्चितमिति छन्दः—चितम् । चिन्वीत । पशुकाम इति पशु—कामः । पशवः । वै । छन्दांसि । पशुमानिति पशु—मान् । एव । भवति ।

इति पञ्चमे चतुर्थे दशमोनुवाकः.

[1]छन्दश्चितमित्यादयो विधयः छन्दोभिश्चीयत इति । छन्दश्चित् । 'कर्मण्याख्यायाम्' इति क्विप् । अत्र सामर्थ्यादवधारणं गम्यते छन्दोभिरेवेति । उक्तं 'छन्दांस्युप दधाति'* इति तैरेव 'अग्नि-र्मूर्धा'† इत्यादिभिः मन्त्रैस्सर्वोग्निश्चीयते। अन्य आहुः छन्दोभिरेव नेष्ट-

*सं. ५-३-८. †सं. ४-४-४.

श्येनचितं चिन्वीत सुवर्गकामश्श्येनो वै वयसां पतिष्ठश्श्येन एव भूत्वा सुवर्गं लोकं पतति कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिंल्लोके स्यामिति शीर्षण्वा-

[2]श्येनचितमिति श्येन–चितम् । चिन्वीत । सुवर्ग-कामम् इति सुवर्ग–कामः । श्येनः । वै । वयसाम् । पतिष्ठः । श्येनः । एव । भूत्वा । सुवर्गमिति सु-वः–गम् । लोकम् । पतति । [3]कङ्कचितमिति क-ङ्क–चितम् । चिन्वीत । यः । कामयेत । शीर्षण्वानिति शीर्षण्–वान् । अमुष्मिन्न् । लोके । स्याम् । इति । शीर्षण्वानिति शीर्षण्–वान् । ए-

काभिरिति । छन्दश्शब्दस्य मन्त्रवाचित्वात् मन्त्रैरेव 'अग्निर्मूर्धा'* इत्यादिभिश्चीयत इति । सर्वैर्मन्त्रैरित्यपरे । छन्दसां पशुसाधनत्वात् पशुमान् भवति । 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम् ॥

[2]श्येनचितमिति ॥ श्येन इव चीयते वक्रपक्षो व्यस्तपुच्छ इति । स एव क्विप् । नित्य एव; नात्र कामसंयोगः । उक्त च 'श्येनचिदग्नीनां' इति । पतिष्ठः पतितृतमः पक्षिणां मध्ये 'तुश्छन्दसि' इतीष्ठनि 'तुरिष्ठेमेयस्सु' इति लोपः ॥

[3]कङ्कचितमिति ॥ कङ्क इव चीयत इति श्येनभेद एव अय पक्षी वर्षीयांसौ पक्षौ पुच्छाद्वक्रौ सन्नं पुच्छं दीर्घ आत्मा मण्डल

*सं. ४-४-४.

नेवामुष्मिंन्लोके भंवत्यलजचितं चिन्वीत चतुंस्सीतं प्रतिष्ठाकांमश्चतं-स्रो दिशों दिक्ष्वेव प्रतिं तिष्ठति प्र-उगचितं चिन्वीत भ्रातृंव्यवान्प्र ॥

व । अमुष्मिन्नं । लोके । भवति । [4]अलजचित-मित्यंलज–चितंम् । चिन्वीत । चतुंस्सीतमिति चतुः–सीतम् । प्रतिष्ठाकांम इतिं प्रतिष्ठा–कामः। चतंस्रः । दिशंः । दिक्षु । एव । प्रतीतिं । तिष्ठति। [5]प्रउगचितमितिं प्रउग–चितंम् । चिन्वीत । भ्रातृं-व्यवानिति भ्रातृंव्य–वान् । प्रेतिं ॥ ५२ ॥ एव ।

---

शिरश्च । शीर्षण्वानिति । प्रशस्तशिरस्कः प्रभूतत्वेनोच्छ्रितत्वं शिरसः प्रशस्तत्वम् । 'अनो नुट्' पूर्ववन्मतुप उदात्तत्वम् ॥

[4]अलजचितमिति ॥ अलजो नाम भासाख्यः कङ्कसमानकमि-[नाकृ]तिपक्षिविशेषः, स इव चीयत इति क्विप् । चतुस्सीत-मिति । द्वादशत्वस्य प्रत्याम्नानाच्चतुष्ट्वं; तिसृणां स्थान एकैका ॥

[5]प्रउगचितमिति ॥ प्रउगं अनोमुखम् । यावानग्निस्साराग्निप्र-देशतो द्विस्तावतीं भूमिं चतुरश्रं कृत्वा पूर्वस्याः करण्याः अर्धा-च्छ्रोणीं प्रत्यालिखेत् । लेखयोरन्तः प्रउगाकारो दृश्यते; तदिव चीयत इति । स एव क्विप् । प्रणुदत एव भ्रातृव्यान् शत्रून् । व्यन् ॥

५२ ॥ एव भ्रातृ॑व्यान्नुदत उभय-
तः॑प्रउगं चिन्वीत यः कामयेत प्र-
जातान्भ्रातृ॑व्यान्नुदेय प्रति॑ जनिष्य-
मा॑णानिति प्रैव जातान्भ्रातृ॑व्यान्नु-
दते प्रति॑ जनिष्यमा॑णान्रथचक्रचि-
तं॑ चिन्वीत भ्रातृ॑व्यवान् वज्रो वै

भ्रातृ॑व्यान् । नुदते । [6]उभयतः॑प्रउगमित्यु॑भयतः॑-
प्रउगम् । चिन्वीत । यः । कामयेत । प्रेति॑ । जा-
तान् । भ्रातृ॑व्यान् । नुदेय॑ । प्रतीति॑ । जनिष्यमा॑-
णान् । इति॑ । प्रेति॑ । एव । जातान् । भ्रातृ॑व्यान्
नुदते॑ । प्रतीति॑ । जनिष्यमा॑णान् । [7]रथचक्रचित-
मिति॑ रथचक्र-चितं॑म् । चिन्वीत । भ्रातृ॑व्यवानि-
ति भ्रातृ॑व्य-वान् । वज्रः॑ । वै । रथः॑ । वज्र॑म्

---

[6]उभयतःप्रउगमिति ॥ उभयोरन्तयोः प्रउगस्येवाकारो य-
स्येति स उभयतःप्रउगः । मध्ये विस्तीर्णया विमुखे शकटे त-
दर्धं पूर्वोक्तप्रमाणं क्षेत्रं चतुरश्रं विहत्य पूर्वापरयोः करण्योर-
र्धान्तादिति दक्षिणोत्तरयोरन्तर्निपातयेत् । मध्ये उभयतःप्रउगं दृश्य-
ते इति । जातान् भ्रातृव्यान् प्रणुदते नाशयति । जनिष्यमा-
णान् प्रतिनुदते उत्पत्तिनिरोधेन अनुत्पन्नानेव करोति ॥

[7]रथचक्रमिति ॥ रथस्तृतीयमुक्तं? । तस्य चक्रमिव ची-

रथो वज्रमेव भ्रातृव्येभ्यः प्र हरति द्रोणचितं चिन्वीतान्नकामो द्रोणे वा अन्नं भ्रियते सयोन्येवान्नमव रुन्धे समूह्यं चिन्वीत पशुकामः पशुमानेव भवति ॥ ५३ ॥ परिचा-

एव । भ्रातृव्येभ्यः । प्रेति । हरति । [8]द्रोणचितमिति द्रोण–चितम् । चिन्वीत । अन्नकाम इत्यन्न–कामः । द्रोणे । वै । अन्नम् । भ्रियते । सयोनीति स–योनि । एव । अन्नम् । अवेति । रुन्धे । [9]समूह्यमिति सं–ऊह्यम् । चिन्वीत । पशुकाम इति पशु–कामः । पशुमानिति पशु–मान् । एव । भवति ॥ ५३ ॥ [10]परिचाय्यमिति परि–चा-

यत इति । स एव क्विप् । वज्रवज्जयसाधनं रथः तत्रावयवावयविनोरभेदोपचारात् चक्रं रथ उच्यते ॥

[8]द्रोणचितमिति ॥ यत्रान्नमाह्रियते तद्द्रोणं, तदिव चीयत इति । सतोमण्डलश्चतुरश्रो वा । पूर्ववत्क्विप् । सयोनीति । कारणसहितमेवान्नमवरुन्धे ॥

[9]समूह्यमिति ॥ दिग्भ्यः पुरीषमस्मिन्निति अधिकरणे ण्यत् । 'अग्नौ परिचाय्य' इत्यादौ निपात्यते । आहुश्च—'चतुर्दिक्षु चात्वाला भवन्ति तेभ्यः पुरीषमूहन्तीति विज्ञायते' इति । मृदेव समूह्य चीयत इति केचित् ॥

[10]परिचाय्यमिति ॥ परितः प्रदक्षिणं चीयन्त इष्टकाः इ-

रयं चिन्वीत ग्रामकामो ग्राम्येव भवति श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति पितृलोक एवर्ध्नोति विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताꣳस एता ज-

रयम् । चिन्वीत । ग्रामकाम इति ग्राम–कामः । ग्रामी । एव । भवति । [11]श्मशानचितमिति श्मशान–चितम् । चिन्वीत । यः । कामयेत । पितृलोक इति पितृ–लोके । ऋध्नुयाम् । इति । पितृलोक इति पितृ–लोके । एव । ऋध्नोति । [12]विश्वामित्रजमदग्नी इति विश्वामित्र–जमदग्नी । वसिष्ठेन । अस्पर्धेताम् । सः । एताः । जमदग्निः ।

ति । तत्रैव निपात्यते । आहुश्च––मध्यमां स्वयमातृण्णां प्रदक्षिणमिष्टकागणैः परिचिनोति कर्षणादिकमपि मण्डलाकारमिति केचित् ॥

[11]श्मशानचितमिति ॥ श्मशानानि विषमाकाराणि चतुरश्राणि परिमण्डलानि च तद्वच्चीयत इति । स्वरुध्य [ऋद्ध्यै] द्रोणचित्समानम् । स एव क्विप् ॥

[12]विश्वामित्रजमदग्नी इति ॥ गतम्* । विहव्या इति । 'ममाग्ने वर्चः'† इत्यादिभिरुपधेयाः । विहवशब्दवानुपधाने मन्त्र आसाम् । पूर्ववद्यत् ॥

*सं. ३-१-७. †सं. ४-७-१४.

मदग्निर्विहव्यां अपश्यत्ता उपाधत्त
ताभिर्वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त
यद्विहव्यां उपदधातीन्द्रियमेव ता-
भिर्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते
होतुर्धिष्णिय उप दधाति यजमा-
नायतनं वै ॥ ५४ ॥ होता स्व ए-
वास्मां आयतन इन्द्रियं वीर्यमव
रुन्धे द्वादशोप दधाति द्वादशाक्षरा

विहव्यां इति वि-हव्याः । अपश्यत् । ताः । उपेति । अधत्त । ताभिः । वै । सः । वसिष्ठस्य । इन्द्रियम् । वीर्यम् । अवृङ्क्त । यत् । विहव्यां इति वि-हव्याः । उपदधातीत्युप-दधाति । इन्द्रियम् । एव । ताभिः । वीर्यम् । यजमानः । भ्रातृव्यस्य । वृङ्क्ते । [13]होतुः । धिष्णिये । उपेति । दधाति । यजमानायतनमिति यजमान-आयतनम् । वै ॥ ५४ ॥ होता । स्वे । एव । अस्मै । आयतन इत्या-यतने । इन्द्रियम् । वीर्यम् । अवेति । रुन्धे । द्वादश । उपेति । दधाति । द्वादशाक्षरेति द्वादश-

[13]होतुर्धिष्णिय इत्याद्याः सङ्ख्याविशेषविधयः । यजमानायतनं

जगती जागताः पशवो जगत्यैवा-
स्मै पशूनव रुन्धेऽष्टावष्टावन्येषु
धिष्णियेषूप दधात्यष्टाशफाः पशवः
पशूनेवाव रुन्धे षण्मार्जालीये षड्वा
ऋतव ऋतवः खलु वै देवाः पितर
ऋतूनेव देवान्पितॄन्प्रीणाति ॥५५॥

अक्षरा । जगती । जागताः । पशवः । जगत्या । एव । अस्मै । पशून् । अवेति । रुन्धे । [14]अष्टावष्टावित्यष्टौ–अष्टौ । अन्येषु । धिष्णियेषु । उपेति । दधाति । अष्टाशफा इत्यष्टा–शफाः । पशवः । पशून् । एव । अवेति । रुन्धे । षट् । मार्जालीये । षट् । वै । ऋतवः । ऋतवः । खलु । वै । देवाः । पितरः । ऋतून् । एव । देवान् । पितॄन् । प्रीणाति ॥ ५५ ॥

प्र भवति यजमानायतनं वा अष्टाचत्वारिंशच्च ॥

वा इति । तादर्थ्याद्यजमानायतनत्वं होतुः । द्वादशेति । एकां याजुषीमेकादश च लोकंपृणाः । गतमन्यत् ॥

[14]अष्टाविति ॥ एकां याजुषीम् । सप्त च लोकंपृणाः । अन्येषु धिष्ण्येषु आग्नीध्रीयादिषु षडिति । एकां याजुषीं पञ्च लोकंपृणाः । ऋतव एव खलु पितृरूपेण वर्तन्ते । तस्मादुभयान्प्रीणातीति ॥

इति पञ्चमे चतुर्थे एकादशोनुवाकः.

पवस्व वाजसातय इत्यनुष्टुक्प्रति-
पद्भवति तिस्रोऽनुष्टुभश्चतस्रो गाय-
त्रियो यत्तिस्रोऽनुष्टुभस्तस्मादश्वस्त्रि-
भिस्तिष्ठꣳस्तिष्ठति यच्चतस्रो गाय-
त्रियस्तस्मात्सर्वाꣳश्चतुरः पदः प्र-

[1]पवस्व । वाजसातय इति वाज—सातये । इति । अनुष्टुगित्यनु—स्तुक् । प्रतिपदिति प्रति—पत् । भवति । तिस्रः । अनुष्टुभ इत्यनु—स्तुभः । चतस्रः । गायत्रियः । यत् । तिस्रः । अनुष्टुभ इत्यनु—स्तुभः । तस्मात् । अश्वः । त्रिभिरिति त्रि—भिः । तिष्ठन् । तिष्ठति । यत् । चतस्रः । गायत्रियः । तस्मात् । सर्वान् । चतुरः । पदः । प्रतिदधदिति

---

[1]अथाश्वमेधब्राह्मणं वैश्वदेवम्—पवस्वेत्यादि ॥ प्रतिपत् प्रथमा ऋक् । बहिष्पवमानस्याद्यतृचस्य पवस्वेत्यादिकाऽनुष्टुक् भवति । ततश्च तिस्रश्चतुष्पदा अनुष्टुभश्चतस्रः त्रिपदा गायत्र्यो भवन्ति । 'तिसृभ्यो जसः' इति जस उदात्तत्वम् । यस्मादेवं तिस्रश्चतस्रश्च ता भवन्ति । तस्मात्त्रित्वान्वयादश्वस्त्रिभिः पादैः तिष्ठति । ततस्तिसृभिस्तिष्ठति चतुर्थमुद्यच्छति चतुष्ट्वान्वयात् । स च सर्वांश्चतुरोपि पदः प्रतिदधत् प्रतिक्षिपन् पलायते धावति । 'उपसर्गस्यायतौ' इति लत्वम् ॥

तिदधत्पलायते परमा वा एषा छ-
न्दसां यदनुष्टुक्परमश्चतुष्टोमस्स्तो-
मानां परमस्त्रिरात्रो यज्ञानां परमो-
श्वः पशूनां परमेणैवैनं परमतां ग-
मयत्येकविꣳशमहर्भवति ॥ ५६ ॥
यस्मिन्नश्व आ लभ्यते द्वादश मा-

प्रति—दधत् । पलायते । [2]परमा । वै । एषा । छ-
न्दसाम् । यत् । अनुष्टुगित्यनु—स्तुक् । परमः ।
चतुष्टोम इति चतुः—स्तोमः । स्तोमानाम् । परमः ।
त्रिरात्र इति त्रि—रात्रः । यज्ञानाम् । परमः । अ-
श्वः । पशूनाम् । परमेण । एव । एनम् । परम-
ताम् । गमयति । एकविꣳशमित्येक—विꣳशम् ।
अहः । भवति ॥ ५६ ॥ यस्मिन्न् । अश्वः । आ-
लभ्यत इत्या—लभ्यते । [3]द्वादश । मासाः । पञ्च ।

[2]परमेति ॥ 'वाग्वा अनुष्टुप्'* इति छन्दसां मध्ये अनुष्टु-गुत्तमा । चतुष्टोमत्वं च । त्रिरात्रं च प्रकृष्टकार्यत्वात् उत्त-मत्वं जहाति । चतुष्टोमवानग्निष्टोमश्चतुष्टोमाभेदेनोच्यते । अग्नि-ष्टोमः । कस्मात्पूर्ववदभेद उपचर्यते, कथं पुनस्तदहरित्याह— यस्मिन्निति । मध्यममि........ ॥

[3]द्वादशेत्यादि ॥ गतम् । एष इति । मासस्य लोकादित्यात्म-

*सं. ५-१-९.

साः पञ्चर्तवस्त्रयं इमे लोका असा-
वांदित्य एंकविꣳश एष प्रजापंतिः
प्राजापत्योश्वस्तमेव साक्षादृंध्नोति
शक्करयः पृष्ठं भंवन्त्यन्यदंन्यच्छन्दो-
ऽन्येंऽन्ये वा एते पशव आ लंभ्यन्त
उतेवं ग्राम्या उतेवांरण्या यच्छक्क-

ऋतवंः। त्रयंः। इमे। लोकाः। असौ। आदि-
त्यः। एकविꣳश इत्येंक-विꣳशः। एषः। प्रजा-
पंतिरिति प्रजा-पतिः। प्राजापत्य इति प्राजा-
पत्यः। अश्वंः। तम्। एव। साक्षादिति स-अ-
क्षात्। ऋध्नोति। [4]शक्करयः। पृष्ठम्। भवन्ति।
अन्यदंन्यदित्यन्यत्-अन्यत्। छन्दंः। अन्येंऽन्य
इत्यन्ये-अन्ये। वै। एते। पशवंः। एति। ल-
भ्यन्ते। उत। इव। ग्राम्याः। उत। इव। आ-
रण्याः। यत्। शक्करयः। पृष्ठम्। भवन्ति। अ-

---

ना प्रजापतिः। तमिति। तादृशः प्रजापत्यात्मिकामृद्धिमृध्नोति। साक्षादव्यवधानेन एकविंशत्यन्वयात्॥

[4]शक्करय इति॥ शक्करीछन्दस्कं पृष्ठसाम भवति। षट्च शक्करयः। छान्दसं ह्रस्वत्वम्। आवृत्तिस्तोत्रेण पृष्ठस्य सामबहुत्वाभावाद्योन्यपेक्षं बहुवचनम्। अन्यदन्यदिति। एवमेवास्मिन्नहनि सर्वेष्वपि सामसु अन्यदन्यच्छन्दोस्मिन्नहनि अन्येऽन्ये वाऽप्येते पशव आ-

रयः पृष्ठं भवन्त्यश्वस्य सर्वत्वाय पार्थुरश्मं ब्रह्मसामं भवति रश्मिना वा अश्वः ॥ ५७ ॥ यत ईश्वरो वा अश्वोऽयतोप्रतिष्ठितः परां परावतं गन्तोर्यत्पार्थुरश्मं ब्रह्मसामं भवत्य-

श्वस्य । सर्वत्वायेति सर्व-त्वाय । [5]पार्थुरश्ममिति पार्थु-रश्मम् । ब्रह्मसाममिति ब्रह्म-सामम् । भवति । रश्मिना । वै । अश्वः ॥ ५७ ॥ यतः । ईश्वरः । वै । अश्वः । अयतः । अप्रतिष्ठित इत्यप्रति-स्थितः । पराम् । परावतमिति परा-वतम् । गन्तोः । यत् । पार्थुरश्ममिति पार्थु-रश्मम् । ब्रह्मसाममिति ब्रह्म-सामम् । भवति । अश्वस्य । यत्यै ।

---

लभ्यन्ते यथा चारण्या उक्ताः ग्राम्या आरण्याश्च पशवः । शाक्वरीणां पृष्ठत्वं अश्वस्य सर्वत्वाय ॥

[5]पार्थुरश्ममिति ॥ एवमेवास्मिन्नहनि सर्वेष्वपि सामसु । पृथुरश्मिना दृष्टं साम पार्थुरश्मम् । ब्रह्मसाममिति । 'अनसन्तान्नपुंसकात्' इत्यच् समासान्तः । रश्मिनेति । यस्माद्रश्मिना यतो बद्धोऽश्वः कार्यवशे तिष्ठति । ईश्वर इत्यादि । अयतस्त्वश्वोऽप्रतिष्ठितोऽवशे वर्तमानः परां परावतं दूरादपि दूरतरं गन्तुमीश्वरः समर्थस्स्यात् । 'उपसर्गाच्छन्दसि' इति वतिः, 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् । तस्मात्पार्थुरश्ममश्वस्य यत्यै बन्धनाय भवति ॥

श्वस्य यत्यै धृत्यै संकृत्यच्छावाक-
सामं भवत्युत्सन्नयज्ञो वा एष य-
दश्वमेधः कस्तद्वेदेत्याहुर्यदि सर्वो वा
क्रियते न वा सर्व इति यत्संकृत्य-
च्छावाकसामं भवत्यश्वस्य सर्वत्वा-
य पर्याप्त्या अनन्तरायाय सर्वस्तो-

धृत्यै । [6]संकृतीति सं–कृति । अच्छावाकसाममि-
त्यच्छावाक–सामम् । भवति । उत्सन्नयज्ञ इत्यु-
त्सन्न–यज्ञः । वै । एषः । यत् । अश्वमेध इत्यश्व–
मेधः । कः । तत् । वेद । इति । आहुः । यदि ।
सर्वः । वा । क्रियते । न । वा । सर्वः । इति ।
यत् । संकृतीति सं–कृति । अच्छावाकसाममि-
त्यच्छावाक–सामम् । भवति । अश्वस्य । सर्वत्वा-
येति सर्व–त्वाय । पर्याप्त्या इति परि–आप्त्यै ।

---

[6]संकृतीति ॥ संकृतिसंज्ञाच्छावाकसाम भवति मध्यमेऽहनि । समी-
चीनाकृतिः अस्येति संकृतिः । उत्सन्नयज्ञ इत्यादि । उत्सन्नभूयि-
ष्ठावयवोश्वमेधः कात्स्न्र्येन संपादयितुमशक्यत्वात् । तदेवाह—क-
स्तदिति । यद्ययं सर्वोप्यविकल एव अनुष्ठीयते यदि वा न तमिमं
विशेषं को वेदितुमर्हतीति पुराविद आहुः । तस्मादच्छावाकसाम्नः
संकृतित्वं अश्वस्य सर्वत्वाय अविकलत्वाय भवति । तच्च पर्याप्त्यै
देवानां भवति । अनन्तरायाय अविघ्नाय स्वर्गप्राप्त्यै भवति ॥

मोतिरात्र उत्तममहर्भवति सर्वस्या-
प्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नो-
ति सर्वं जयति ॥ ५८ ॥

अनन्तरायायेत्यनन्तः–आयाय । [7]सर्वस्तोम इति सर्व–स्तोमः । अतिरात्र इत्यति–रात्रः । उत्तममित्युत्–तमम् । अहः । भवति । सर्वस्य । आप्त्यै । सर्वस्य । जित्यै । सर्वम् । एव । तेन । आप्नोति । सर्वम् । जयति ॥ ५८ ॥

अहर्भवति वा अश्वोऽहर्भवति दश च ॥१२॥

देवासुरास्तेनर्तव्यां रुद्रोऽश्मन्नृषदेवडुदेन प्राचीमिति वसोर्धारामग्निर्देवेभ्यस्सुवर्गाय यत्राकूतायं छन्दश्चितं पवस्व द्वादश ॥ १२ ॥

देवासुरा अजायां घर्मं वै ग्रुमुष्टिः प्रथमो देवयतामेतद्वै छन्दसामृध्नोत्यष्टौ पञ्चाशत् ॥ ५८ ॥

हरिः ओम् ॥ श्रीः ॥

चतुर्थप्रपाठकस्समाप्तः.

---

[7]सर्वस्तोम इति ॥ उपलक्षणत्वात् सर्वस्तोमः सर्वपृष्ठश्चातिरात्र उत्तमस्तृतीयाहर्भवति सर्वस्याप्त्यै सर्वस्य जेतव्यस्य जित्यै । एतेनाश्वमेधेन हि सर्वमाप्नोति जयति च सर्वं इति ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये पञ्चमे काण्डे चतुर्थे प्रपाठके द्वादशोनुवाकः.

समाप्तश्च प्रपाठकः.

हरिः ओम्.

# अशुद्धशोधनपत्रिका.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ३ | १२ | अवेतिं | अपेतिं |
| ३० | ९ | तीं। | तिं। |
| ३५ | ६ | नतून् | नृतून् |
| ११० | १ | नों | नो |
| १२८ | २ | यास्तनूः | या तनूः |
| १६८ | ,, | ति | ति |
| १७३ | ७ | दध्याङ्क्षो | दध्यात्क्षो |
| २०१ | ३ | हतस्यं | हैतस्यं |
| २२२ | २ | इति | इतिं |
| २३९ | ,, | दित्यै | दित्यै |
| २६८ | ३ | सुवर्ग | सुवर्ग |
| २७५ | १४ | अत्मन्न् | आत्मन्न् |
| २७६ | ६ | पांक्तः | पाङ्क्तः |
| २७७ | १५ | अन्तं | अन्त |
| २७८ | १ | यस्यै | यस्यै |
| ,, | २ | काञ्जय | काञ्जंय |
| ,, | ६ | व्यात्स्वा | व्यास्त्वा |

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २७१ | ६ | द्र॒विणं | द्र॒विण |
| २८२ | २ | पंति॒ꣳ | पंति॒ꣳ |
| ,, | ५ | त॒त् | त॒त् |
| २८३ | ८ | प॒प्मानँ । | पा॒प्मानंम् । |
| २८४ | १ | पशू॒नां | पशू॒नां |
| ,, | ९ | ए॒न | ए॒न॒ |
| २८६ | ,, | इ॒य॒त् | इ॒य॒त् |
| २९३ | १० | इ॒व | इ॒व॒ |
| २९४ | ३ | उ– | उं– |
| ,, | १० | अन्न् | अन्नं |
| ३०२ | ४ | सिंश्वथ्सा | सिंश्व॒न्थ्सा |
| ,, | ५ | सौ३कौं | सौ३ऽकौं |
| ३०९ | ८ | शा॒खयां | शा॒खयां |
| ,, | १० | शा॒न्ता | शा॒न्ता |
| ३११ | ११ | अ॒ग्निः | अ॒ग्निः |
| ३२९ | ११ | इतिं | इतिं |
| ३४१ | ९ | ताम् । | तान् । |
| ३५१ | १२ | चत्वारि श– | चत्वारिꣳश– |
| ३५५ | १० | तैत्युप | तेत्युंप |

# शुद्धिपत्रिका.

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| २३२ | ३ | तरमाद्वाह्म | तस्माद्ब्राह्म- |
| २४९ | ६ | प्रजााः | प्रजाः |
| २६६ | २ | टाबृबि | टाबृचि |
| २७१ | ५ | ४-४-४. | ४-४-६. |
| २७२ | ,, | प्लवस्थीनायाः | प्लवस्थानीयाः |
| २७९ | ४ | इति, | इति |
| २८६ | ५ | पञ्च | पञ्चपञ्च |
| २८९ | ७ | तन्ननक्षत्रपदं | तन्नक्षत्रपथं |
| २९१ | २ | दर्षको | वर्षुको |
| २९४ | ,, | ऋतव्यानम | ऋतव्यानाम |
| २९६ | ५ | यज्ञय | यज्ञाय |
| २९७ | ४ | सहस्त्र | सहस्र |
| ,, | १० | एवेष्ठकाः | एवेष्टकाः |
| २९८ | ६ | इष्ठका | इष्टका |
| ३०० | ३ | षष्टं | षष्ठं |
| ३०२ | २ | भवाति | भवति |
| ,, | ४ | जहीत | जिहीत |
| ३०३ | ९ | षष्ठिः | षष्टिः |
| ३०४ | ,, | दघ्रे | दध्रे |
| ३११ | ४ | ब्र.ह्मणः | ब्रह्मणः |